# THE NEW VEDIC SELECTION

BY

PT N KANTA NATH SHASTRY TELANG M A

*Reader, Department of Sanskrit & Pali*

Banaras Hindu University

AND

DR BRAJ BIHARI CHAUBEY, M A, PH D

*Mayurbhañja Fellow*

Banaras Hindu University,

Varanasi

WITH FOREWORD

BY

DR SIDDHESHWAR BHATTACHARYA,

*Mayurbhañja Professor & Head of the Department of Sanskrit & Pali*

Banaras Hindu University

PRACHYA BHARATI PRAKASHANA

VARANASI

1965

*Dedicated to*

Honourable

Dr. Siddheśvara Bhaṭṭācārya

"त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये"

# FOREWORD

Close in the trail of the *Prākṛta-praveśikā* by Sri K C Jain and the *Introduction to Pali* by Sri A Barua (Bhikkhu) of the Department of Sanskrit and Pali, Banaras Hindu University, appears *The New Vedic Selection* by Sri N K S Telang, Reader in Sanskrit, and Dr Braj Bihari Chaubey, a worthy student of the Department With this, the first phase of the publication programme under the auspices of the Department comes to a successful conclusion

In spite of all that has been done by modern scholarship in the sphere of Vedic studies, Vedic literature is now at its low ebb The interest of the University students in its study has noticeably languished Its thoughts and language with all their splendour and richness have receded to an anachronism

Vedic studies must be rescued from such predicament It is the responsibility of India, especially of the Banaras Hindu University, the citadel of India s past and present The University has taken due cognizance of its importance in the curriculum of the Under-graduate as well as of the Post-graduate.

At once the old problem had to be faced *Peterson s* and *Macdonell's* have silently disappeared from the market Further, with all their merits they could present only the partial view as they were exclusively concerned with the Rg-veda

The present venture is intended to serve as a window to the grand panorama of Vedic literature through the ages in its different facades. Modelled on the *Peterson's*, it is broadly divided into three parts—The Text, the Annotations and the Appendixes. The text is an epitome of the entire range of Vedic literature together with its ancillaries. The old emphasis on the Rg veda with its teeming variegated materials is kept intact. In the Annotations both Sāyana and the modern scholars are set in grand poise. Word by word meaning in Hindi attended with translations both in Hindi and English do cater to the modern needs. As many as four Appendixes embrace a vast arena from Vedic grammar to the Vedic deity—all that is necessary for a student of Vedic literature.

In brief, Sri Telang and Dr Chaubey have not spared themselves to make this work useful. It is earnestly hoped that this fruit of their sincere labour will remove a long felt want as it will go a long way to recapturing the glory that India was.

Banaras Hindu University S. BHATTACHARYA
*8.8.65*

# PREFACE

The Vedic language is one of the oldest languages of the world The literature in this language is a valuable treasure for a student of history and culture Modern scholars also have recognised its importance Some portions of it are prescribed in the courses of Degree and Post graduate examinations of Indian Universities

For a long time Peterson's 'Hymns from the Rg Veda' was a popular Vedic reader in India It was prescribed in B A and M A courses of most of the Indian Universities But for several year it has been out of print No Vedic Reader suitable for students of Indian Universities is available in the market This has created a great difficulty before the teachers and students of Vedic language and literature in India To meet this desideratum Dr Siddheshwara Bhatta charya, the Head of the Department of Sanskrit, Banaras Hindu University, advised us to prepare a a Vedic Selection, selecting pieces from all important works of the Vedic field for the use of the students of the Indian Universities Being encouraged by him, we undertook the work and are glad to present 'The New Vedic Selection' to the learned public

'The New Vedic Selection' consists of represen tative pieces from the Saṃhitās, Brāhmanas, Āranya kas, Upaniṣads and important Vedāngas In our anxiety to bring out the book soon, so that it may be used by students from the 1965 session, the printing

work of different parts of the book had to be got done from different printing establishments Owing to this the numbering of pages could not be made continued This has divided the book into three sections in a way The first section consists of the original text of the pieces selected The second section contains the Pada text (wherever available) the Sayana Bhasya (wherever available) word meanings in Hindi English and Hindi translations and grammatical and critical notes in English (wherever necessary) The Pada text and the Sayana Bhasya on pieces selected from Sama Samhita could not be given because books with correct readings were not available The third section consists of four Appendices on grammar accent metre and deity We hope the book will prove useful for students of Indian Universities

Now we feel it our duty to acknowledge obligations of those scholars from whom we drew inspiration and help in our work First of all our thanks are due to Dr Siddheshwar Bhattacharya Head of the Dept of Sanskrit and Pali B H U but for whose help we could not have completed our work in such a short span of time as was at our disposal He was very kind to help us in preparing the general plan of the book and selecting pieces from the extent of Vedic literature He also gave valuable help in preparing Notes and Appendices Our thanks are due also to Shri Swami Ramnarayana Das Shastri Sital Das ka Akhara Varanasi and our esteemed colleagues Prof A Barua (Bhikkhu) and

Pt Kashinath Pande Lecturer in the Department of Sanskrit and Pali, and Shri Pran Lal Acharya, Banaras Hindu University Press, for helping in many ways in preparing the Selection and bringing it out We are indebted to all the scholars whose works we consulted and used in preparing the present Selection Finally we offer our hearty thanks to the Publisher, Pracya Bharati Prakashan Kamachha Varanasi, who kindly agreed to print and publish this book and left no stone unturned to bring out the book in time and make it free from printing errors

In spite of all pains taken by us and the Publisher, owing to hurry with which the book has been printed some mistakes may have crept in We hope the learned readers will correct them and draw our attention to them so that the book may be improved and made more useful in the second edition

N Kanta Nath Shastri Telang
Braj Bihari Chaubey

*August 15 1965*

Banaras Hindu University
Varanasi

## CONTENTS

### A Text

I.

B. Notes

No. 1 I. 24

## VARUNA

कस्य नूनं कतमस्यामृतानां
मनामहे चारु देवस्य नाम ।
को नो मह्या अदितये पुनर्दा-
त्पितरं च दृशेयं मातरं च ॥ १ ॥

अग्नेर्वयं प्रथमस्यामृतानां
मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दा-
त्पितरं च दृशेयं मातरं च ॥ २ ॥

अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन्भागमीमहे ॥ ३ ॥

यश्चिद्धि त इत्था भगः शशमानः पुरा निदः ।
अद्वेषो हस्तयोर्दधे ॥ ४ ॥

भगभक्तस्य ते वयमुदशेम तवावसा ।
मूर्धानं राय आरभे ॥ ५ ॥

नहि ते क्षत्रं न सहो न मन्युं
वयश्चनामी पतयन्त आपुः ।

नेमा आपो अनिमिषं चरन्ती-
र्न ये वातस्य प्रमिनन्त्यभ्वम् ॥ ६ ॥

अबुध्ने राजा वरुणो वनस्यो-
र्ध्वं स्तूपं ददते पूतदक्षः ।
नीचीनाः स्थुरुपरि बुध्न एषा-
मस्मे अन्तर्निहिताः केतवः स्युः ॥ ७ ॥

उरुं हि राजा वरुणश्चकार
सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽक-
रुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥

शतं ते राजन्भिषजः सहस्र-
मुर्वी गभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निरृतिं पराचैः
कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९ ॥

अमी य ऋक्षा निहितास उच्चा
नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि
विचाकशच्चन्द्रमा नक्तमेति ॥१०॥

तत्त्वा यामि ब्रह्मणा वन्दमान-
स्तदा शास्ते यजमानो हविर्भिः ।

अहे॑ळमानो वरुणे॒ह बो॒ध्यु-
रु॑शंस॒ मा न॒ आयु॒ः प्र मो॑षीः ॥११॥

तदिन्नक्तं॒ तद्दिवा॒ मह्य॑माहु-
स्तद॒यं केतो॑ हृ॒द आ वि च॑ष्टे ।
शुनः॒शेपो॒ यमह्व॑द्गृभी॒तः
सो अ॒स्मान् राजा॒ वरु॑णो मुमोक्तु ॥१२॥

शुनः॒शेपो॒ ह्यह्व॑द्गृभी॒त-
स्त्रि॒ष्वा॑दि॒त्यं द्रु॑प॒देषु॑ ब॒द्धः ।
अवै॑नं॒ राजा॒ वरु॑णः ससृज्या-
द्वि॒द्वाँ अद॑ब्धो॒ वि मु॑मोक्तु॒ पाशा॑न् ॥१३॥

अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒-
रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भि॑ः ।
क्षय॑न्न॒स्मभ्य॑मसुर प्रचेता॒
राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑ ॥१४॥

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्म-
दवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय ।
अथा॑ व॒यमा॑दित्य व्र॒ते तवा-
नाग॑सो॒ अदि॑तये स्याम ॥१५॥

No. 2 I. 32

## INDRA

इन्द्रस्य नु वीर्याणि प्र वोचं
यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द
प्र वक्षणा अभिनत्पर्वतानाम् ॥ १ ॥

अहन्नहिं पर्वते शिश्रियाणं
त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना
अञ्जः समुद्रमव जग्मुरापः ॥ २ ॥

वृषायमाणोऽवृणीत सोमं
त्रिकद्रुकेष्वपिबत्सुतस्य ।
आ सायकं मघवादत्त वज्र-
महन्नेनं प्रथमजामहीनाम् ॥ ३ ॥

यदिन्द्राहन्प्रथमजामहीना-
मान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं
तादीत्ना शत्रुं न किला विवित्से ॥ ४ ॥

अहन्वृत्रं वृत्रतरं व्यंस-
मिन्द्रो वज्रेण महता वधेन ।

स्कन्धांसीव कुलिशेना विवृक्णा-
हिः शयत उपपृक्पृथिव्याः ॥ ५ ॥

अयोद्धेव दुर्मद आ हि जुह्वे
महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां
सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

अपादहस्तो अपृतन्यदिन्द्र-
मास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूष-
न्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥

नदं न भिन्नममुया शयानं
मनो रुहाणा अति यन्त्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठ-
त्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥

नीचावया अभवद्वृत्रपुत्रे-
न्द्रो अस्या अव वधर्जभार ।
उत्तरा सूरधरः पुत्र आसी-
द्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥

अतिष्ठन्तीनामनिवेशनानां
काष्ठानां मध्ये निहितं शरीरम् ।

वृत्रस्य॑ नि॒ण्यं वि च॑र॒न्त्यापो॑
दी॒र्घं तम॒ आश॑य॒दिन्द्र॑शत्रुः ॥१०॥

दा॒सप॑त्नी॒रहि॑गोपा अतिष्ठ॒-
न्निरु॑द्धा॒ आपः॑ प॒णिने॑व॒ गावः॑ ।
अ॒पां बिल॒मपि॑हितं॒ यदासी॑-
द्वृ॒त्रं ज॑घ॒न्वाँ अप॒ तद्व॑वार ॥११॥

अश्व्यो॒ वारो॑ अभव॒स्तदि॑न्द्र
सृ॒के यत्त्वा॑ प्र॒त्यह॑न्दे॒व एकः॑ ।
अज॑यो॒ गा अज॑यः शूर॒ सोम॒-
मवा॑सृजः॒ सर्त॑वे स॒प्त सिन्धू॑न् ॥१२॥

नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒
न यां मिह॒मकि॑रद्ध्रा॒दुनिं॑ च ।
इन्द्र॑श्च॒ यद्यु॑यु॒धाते॒ अहि॑-
श्चो॒ताप॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये ॥१३॥

अहे॑र्यातारं॒ कम॑पश्य इन्द्र
हृ॒दि यत्ते॑ ज॒घ्नुषो॒ भीरग॑च्छत् ।
नव॑ च॒ यन्न॑व॒तिं च॒ स्रव॑न्तीः
श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि ॥१४॥

इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒
शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः ।

सेदु राजा क्षयति चर्षणीना-
मरान्न नेमिः परि ता बभूव ॥१५॥

---

No. 3 I. 35

## SAVITṚ

ह्वयाम्यग्निं प्रथमं स्वस्तये
ह्वयामि मित्रावरुणाविहावसे ।
ह्वयामि रात्रीं जगतो निवेशनीं
ह्वयामि देवं सवितारमूतये ॥ १ ॥

आ कृष्णेन रजसा वर्तमानो
निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना
देवो याति भुवनानि पश्यन् ॥ २ ॥

याति देवः प्रवता यात्युद्वता
याति शुभ्राभ्यां यजतो हरिभ्याम् ।
आ देवो याति सविता परावतो-
ऽप विश्वा दुरिता बाधमानः ॥ ३ ॥

अभीवृतं कृशनैर्विश्वरूपं
हिरण्यशम्यं यजतो बृहन्तम् ।
आस्थाद्रथं सविता चित्रभानुः
कृष्णा रजांसि तविषीं दधानः ॥ ४ ॥

वि जनाञ्छ्यावाः शितिपादो अख्य-
न्रथं हिरण्यप्रउगं वहन्तः ।
शश्वद्विशः सवितुर्दैव्यस्योपस्थे
विश्वा भुवनानि तस्थुः ॥ ५ ॥

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ
एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थु-
रिह ब्रवीतु य उ तच्चिकेतत् ॥ ६ ॥

वि सुपर्णो अन्तरिक्षाण्यख्यद्-
गभीरवेपा असुरः सुनीथः ।
क्वेदानीं सूर्यः कश्चिकेत
कतमां द्यां रश्मिरस्या ततान ॥ ७ ॥

अष्टौ व्यख्यत्ककुभः पृथिव्या-
स्त्री धन्व योजना सप्त सिन्धून् ।
हिरण्याक्षः सविता देव आगा-
द्दधद्रत्ना दाशुषे वार्याणि ॥ ८ ॥

हिरण्यपाणिः सविता विचर्षणि-
उभे द्यावापृथिवी अन्तरीयते ।
अपामीवां बाधते वेति सूर्य-
मभि कृष्णेन रजसा द्यामृणोति ॥ ९ ॥

हिरण्यहस्तो असुरः सुनीथः
सुमृळीकः स्ववाँ यात्वर्वाङ् ।
अपसेधन्रक्षसो यातुधाना-
नस्थाद्देवः प्रतिदोषं गृणानः ॥१०॥

ये ते पन्थाः सवितः पूर्व्यासो-
ऽरेणवः सुकृता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी
रक्षा च नो अधि च ब्रूहि देव ॥११॥

---

No. 4 I. 38

## MARUTS

कद्ध नूनं कधप्रियः
पिता पुत्रं न हस्तयोः ।
दधिध्वे वृक्तबर्हिषः ॥ १ ॥

क्व नूनं कद्वो अर्थं
गन्ता दिवो न पृथिव्याः ।
क्व वो गावो न रण्यन्ति ॥ २ ॥

क्व वः सुम्ना नव्यांसि
मरुतः क्व सुविता ।
क्वो विश्वानि सौभगा ॥ ३ ॥

यद्यूयं पृश्निमातरो
मर्तासः स्यातन ।
स्तोता वो अमृतः स्यात् ॥ ४ ॥

मा वो मृगो न यवसे
जरिता भूदजोष्यः ।
पथा यमस्य गादुप ॥ ५ ॥

मो षु णः परापरा
निर्ऋतिर्दुर्हणा वधीत् ।
पदीष्ट तृष्णया सह ॥ ६ ॥

सत्यं त्वेषा अमवन्तो
धन्वञ्चिदा रुद्रियासः ।
मिहं कृण्वन्त्यवाताम् ॥ ७ ॥

वाश्रेव विद्युन्मिमाति
वत्सं न माता सिषक्ति ।
यदेषां वृष्टिरसर्जि ॥ ८ ॥

दिवा चित्तमः कृण्वन्ति
पर्जन्येनोदवाहेन ।
यत्पृथिवीं व्युन्दन्ति ॥ ९ ॥

अध स्वनान्मरुतां
विश्वमा सद्म पार्थिवम् ।
अरेजन्त प्र मानुषाः ॥१०॥

मरुतो वीळुपाणिभि-
श्चित्रा रोधस्वतीरनु ।
यातेमखिद्रयामभिः ॥११॥

स्थिरा वः सन्तु नेमयो
रथा अश्वास एषाम् ।
सुसंस्कृता अभीशवः ॥१२॥

अच्छा वदा तना गिरा
जरायै ब्रह्मणस्पतिम् ।
अग्निं मित्रं न दर्शतम् ॥१३॥

मिमीहि श्लोकमास्ये
पर्जन्यइव ततनः ।
गाय गायत्रमुक्थ्यम् ॥१४॥

वन्दस्व मारुतं गणं
त्वेषं पनस्युमर्किणम् ।
अस्मे वृद्धा असन्निह ॥१५॥

---

No. 5 I. 48

## UṢAS

सह वामेन न उषो
व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि
राया देवि दास्वती ॥ १ ॥

अश्वावतीर्गोमतीर्विश्वसुविदो
भूरि च्यवन्त वस्तवे ।
उदीरय प्रति मा सूनृता
उषश्चोद राधो मघोनाम् ॥ २ ॥

उवासोषा उच्छाच्च नु
देवी जीरा रथानाम् ।
ये अस्या आचरणेषु दध्रिरे
समुद्रे न श्रवस्यवः ॥ ३ ॥

उषो ये ते प्र यामेषु युञ्जते
मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो
नाम गृणाति नृणाम् ॥ ४ ॥

आ घा योषेव सूनर्-
युषा याति प्रभुञ्जती ।
जरयन्ती वृजनं पद्वदीयत
उत्पातयति पक्षिणः ॥ ५ ॥

वि या सृजति समनं व्यर्थिनः
पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते
व्युष्टौ वाजिनीवति ॥ ६ ॥

एषायुक्त परावतः
सूर्यस्योदयनादधि ।
शतं रथेभिः सुभगोषा इयं
वि यात्यभि मानुषान् ॥ ७ ॥

विश्वमस्या नानाम चक्षसे
जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव
उषा उच्छदप स्रिधः ॥८॥

उष आ भाहि भानुना
चन्द्रेण दुहितर्दिवः ।
आवहन्ती भूर्यस्मभ्यं सौभगं
व्युच्छन्ती दिविष्टिषु ॥९॥

विश्वस्य हि प्राणनं जीवनं त्वे
वि यदुच्छसि सूनरि ।
सा नो रथेन बृहता विभावरि
श्रुधि चित्रामघे हवम् ॥१०॥

उषो वाजं हि वंस्व
यश्चित्रो मानुषे जने ।
तेना वह सुकृतो अध्वराँ उप
ये त्वा गृणन्ति वह्नयः ॥११॥

विश्वान्देवाँ आ वह सोमपीतये-
ऽन्तरिक्षादुषस्त्वम् ।
सास्मासु धा गोमदश्ववदुक्थ्य1-
मुषो वाजं सुवीर्यम् ॥१२॥

यस्या रुशन्तो अर्चयः
प्रति भद्रा अदृक्षत ।
सा नो रयिं विश्ववारं सुपेशस-
मुषा ददातु सुग्म्यम् ॥१३॥

ये चिद्धि त्वामृषयः पूर्व ऊतये
जुहूरेऽवसे महि ।
सा नः स्तोमाँ अभि गृणीहि राधसो-
षः शुक्रेण शोचिषा ॥१४॥

उषो यदद्य भानुना
वि द्वारावृणवो दिवः ।
प्र नो यच्छतादवृकं पृथु च्छर्दिः
प्र देवि गोमतीरिषः ॥१५॥

सं नो राया बृहता विश्वपेशसा
मिमिक्ष्वा समिळाभिरा ।
सं द्युम्नेन विश्वतुरोषो महि
सं वाजैर्वाजिनीवति ॥१६॥



No 6 I. 116

## AŚVINĀ

नास॑त्याभ्यां ब॒र्हिरि॑व॒ प्र वृ॑ञ्जे॒
स्तोमाँ॑ इयर्म्य॒भ्रिये॑व॒ वातः॑ ।
याव॒र्भ॑गाय विम॒दाय॑ जा॒यां
से॑ना॒जुवा॑ न्यू॒हतू॒ रथे॑न ॥ १ ॥

वी॒ळु॒पत्म॑भिराशु॒हेम॑भिर्वा
दे॒वानां॑ वा जू॒तिभिः॒ शाश॑दाना ।
तद्रास॑भो नासत्या स॒हस्र॑-
मा॒जा य॒मस्य॑ प्र॒धने॑ जिगाय ॥ २ ॥

तुग्रो॑ ह भु॒ज्युम॑श्विनोदमे॒घे
र॒यिं न कश्चि॑न्ममृ॒वाँ अवा॑हाः ।
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भि-
रन्तरिक्ष॒प्रुद्भि॒रपो॑दकाभिः ॥ ३ ॥

ति॒स्रः क्षप॒स्त्रिरहा॑ति॒व्रज॑द्भि॒-
र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः ।
स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे
त्रि॒भी रथैः॑ श॒तप॑द्भिः॒ षळ॑श्वैः ॥ ४ ॥

अ॒ना॒र॒म्भ॒णे तद॑वीरयेथा-
मनास्था॒ने अ॑ग्रभ॒णे स॑मु॒द्रे ।

यदश्विना ऊहथुर्भुज्युमस्तं
शतारित्रां नावमातस्थिवांसम् ॥ ५ ॥

यमश्विना ददथुः श्वेतमश्व-
मघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भू-
त्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥ ६ ॥

युवं नरा स्तुवते पज्रियाय
कक्षीवते अरदतं पुरंन्धिम् ।
कारोतराच्छफादश्वस्य वृष्णः
शतं कुम्भाँ असिञ्चतं सुरायाः ॥ ७ ॥

हिमेनाग्निं घ्रंसमवारयेथां
पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीत-
मुन्निन्यथुः सर्वगणं स्वस्ति ॥ ८ ॥

परावतं नासत्यानुदेथा-
मुच्चाबुध्नं चक्रथुर्जिह्मबारम् ।
क्षरन्नापो न पायनाय राये
सहस्राय तृष्यते गोतमस्य ॥ ९ ॥

जुजुरुषो नासत्योत वव्रिं
प्रामुञ्चतं द्रापिमिव च्यवानात् ।

प्रातिरतं जहितस्यायुर्दस्रा-
दित्पतिमकृणुतं कनीनाम् ॥१०॥

तद्वां नरा शंस्यं राध्यं
चाभिष्टिमन्नासत्या वरूथम् ।
यद्विद्वांसा निधिमिवापगूळ्ह-
मुद्दर्शतादूपथुर्वन्दनाय ॥११॥

तद्वां नरा सनये दंस उग्र-
माविष्कृणोमि तन्यतुर्न वृष्टिम् ।
दध्यङ् ह यन्मध्वाथर्वणो वा-
मश्वस्य शीर्ष्णा प्र यदीमुवाच ॥१२॥

अजोहवीन्नासत्या करा वां
महे यामन्पुरुभुजा पुरंधिः ।
श्रुतं तच्छासुरिव वध्रिमत्या
हिरण्यहस्तमश्विनावदत्तम् ॥१३॥

आस्नो वृकस्य वर्तिकामभीके
युवं नरा नासत्यामुमुक्तम् ।
उतो कविं पुरुभुजा युवं ह
कृपमाणमकृणुतं विचक्षे ॥१४॥

चरित्रं हि वेरिवाच्छेदि पर्ण-
माजा खेलस्य परितक्म्यायाम् ।

सद्यो जङ्घामायसीं विश्पलायै
धने हिते सर्तवे प्रत्यधत्तम् ॥१५॥

शतं मेषान्वृक्ये चक्षदान-
मृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष
आधत्तं दस्रा भिषजावनर्वन् ॥१६॥

आ वां रथं दुहिता सूर्यस्य
कार्ष्मेवातिष्ठदर्वता जयन्ती ।
विश्वे देवा अन्वमन्यन्त हृद्भिः
समु श्रिया नासत्या सचेथे ॥१७॥

यदयातं दिवोदासाय वर्ति-
र्भरद्वाजायाश्विना हयन्ता ।
रेवदुवाह सचनो रथो वां
वृषभश्च शिंशुमारश्च युक्ता ॥१८॥

रयिं सुक्षत्रं स्वपत्यमायुः
सुवीर्यं नासत्या वहन्ता ।
आ जह्नावीं समनसोप वाजै-
स्त्रिरह्नो भागं दधतीमयातम् ॥१९॥

परिविष्टं जाहुषं विश्वतः सीं
सुगेभिर्नक्तमूहथू रजोभिः ।

विभिन्दुना नासत्या रथेन
वि पर्वताँ अजरयू अयातम् ॥२०॥

एकस्या वस्तोरावतं रणाय
वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इन्द्रवन्ता
पृथुश्रवसो वृषणावरातीः ॥२१॥

शरस्य चिदार्चत्कस्यावतादा
नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभि-
र्जसुरये स्तर्यं पिप्यथुर्गाम् ॥२२॥

अवस्यते स्तुवते कृष्णियाय
ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय
विष्णाप्वं ददथुर्विश्वकाय ॥२३॥

दश रात्रीरशिवेना नव द्यू-
नवनद्धं श्नथितमप्स्वन्तः ।
विप्रुतं रेभमुदनि प्रवृक्त-
मुन्निन्यथुः सोममिव स्रुवेण ॥२४॥

प्र वां दंसांस्यश्विनाववोच-
मस्य पतिः स्यां सुगवः सुवीरः ।

उत पश्यन्नश्नुवन्दीर्घमायु-
रस्तमिवेज्जरिमाणं जगम्याम् ॥२५॥

---

No. 7 I. 154

## VIṢṆU

विष्णोर्नु कं वीर्याणि प्र वोचं
यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं
विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥

प्र तद्विष्णुः स्तवते वीर्येण
मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणे-
ष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥

प्र विष्णवे शूषमेतु मन्म
गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थ-
मेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥

यस्य त्री पूर्णा मधुना पदा-
न्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्या-
मेको दाधार भुवनानि विश्वा ॥ ४ ॥

तदस्य प्रियमभि पाथो अश्यां
नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था
विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥

ता वां वास्तून्युश्मसि गमध्यै
यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः
परमं पदमव भाति भूरि ॥ ६ ॥

---

No. 8 II. 12

## INDRA

यो जात एव प्रथमो मनस्वा-
न्देवो देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां
नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥

यः पृथिवीं व्यथमानामदृंह-
यः पर्वतान्प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो
यो द्यामस्तभ्नात्स जनास इन्द्रः ॥ २ ॥

यो हत्वाहिमरिणात्सप्त सिन्धू-
न्यो गा उदाजदपधा वलस्य ।
यो अश्मनोरन्तरग्निं जजान
संवृक्समत्सु स जनास इन्द्रः ॥ ३ ॥

येनेमा विश्वा च्यवना कृतानि
यो दासं वर्णमधरं गुहाकः ।
श्वघ्नीव यो जिगीवां लक्षमाद-
दर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥

यं स्मा पृच्छन्ति कुह सेति घोर-
मुतेमाहुर्नैषो अस्तीत्येनम् ।
सो अर्यः पुष्टीर्विज इवा मिनाति
श्रदस्मै धत्त स जनास इन्द्रः ॥ ५ ॥

यो रध्रस्य चोदिता यः कृशस्य
यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो योऽविता सुशिप्रः
सुतसोमस्य स जनास इन्द्रः ॥ ६ ॥

यस्याश्वा॑सः प्र॒दिशि॒ यस्य॒ गावो॒
यस्य॒ ग्रामा॒ यस्य॒ विश्वे॒ रथा॑सः ।
यः सूर्यं॒ य उ॒षसं॑ ज॒जान॒
यो अ॒पां ने॒ता स ज॑नास॒ इन्द्रः॑ ॥ ७ ॥

यं क्रन्द॑सी संय॒ती वि॒ह्वये॑ते॒
परेऽव॑र उ॒भया॑ अ॒मित्राः॑ ।
स॒मा॒नं चि॒द्रथ॑मातस्थि॒वांसा॒
नाना॑ हवेते॒ स ज॑नास॒ इन्द्रः॑ ॥ ८ ॥

यस्मा॒न्न ऋ॒ते वि॒जय॑न्ते॒ जना॑सो॒
यं युध्य॑माना॒ अव॑से॒ हव॑न्ते ।
यो विश्व॑स्य प्रति॒मानं॑ ब॒भूव॒
यो अ॑च्युत॒च्युत्स ज॑नास॒ इन्द्रः॑ ॥ ९ ॥

यः शश्व॑तो॒ मह्येनो॒ दधा॑ना॒-
नम॑न्यमाना॒ञ्छर्वा॑ ज॒घान॑ ।
यः शर्ध॑ते॒ नानु॒ददा॑ति शृ॒ध्यां
यो दस्यो॑र्ह॒न्ता स ज॑नास॒ इन्द्रः॑ ॥१०॥

यः शम्ब॑रं॒ पर्व॑तेषु क्षि॒यन्तं॑
चत्वारि॒श्यां श॒रद्य॒न्ववि॑न्दत् ।
ओ॒जा॒यमा॑नं॒ यो अहिं॑ ज॒घान॒
दानुं॒ शया॑नं॒ स ज॑नास॒ इन्द्रः॑ ॥११॥

यः सप्तरश्मिर्वृषभस्तुविष्मा-
नवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहु-
र्द्यामारोहन्तं स जनास इन्द्रः ॥१२॥

द्यावा चिदस्मै पृथिवी नमेते
शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहु-
र्यो वज्रहस्तः स जनास इन्द्रः ॥१३॥

यः सुन्वन्तमवति यः पचन्तं
यः शंसन्तं यः शशमानमूती ।
यस्य ब्रह्म वर्धनं यस्य सोमो
यस्येदं राधः स जनास इन्द्रः ॥१४॥

यः सुन्वते पचते दुध्र आ चि-
द्वाजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः
सुवीरासो विदथमा वदेम ॥१५॥

No. 9 II. 23

## BRAHMANASPATI

गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमम् ।

ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत
आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ १ ॥

देवाश्चित्ते असुर्य प्रचेतसो
बृहस्पते यज्ञियं भागमानशुः ।
उस्राइव सूर्यो ज्योतिषा महो
विश्वेषामिज्जनिता ब्रह्मणामसि ॥ २ ॥

आ विबाध्या परिरापस्तमांसि च
ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीममममित्रदम्भनं
रक्षोहणं गोत्रभिदं स्वर्विदम् ॥ ३ ॥

सुनीतिभिर्नयसि त्रायसे जनं
यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।
ब्रह्मद्विषस्तपनो मन्युमीरसि
बृहस्पते महि तत्ते महित्वनम् ॥ ४ ॥

न तमंहो न दुरितं कुतश्चन
नारातयस्तितिरुर्न द्वयाविनः ।
विश्वा इदस्माद्ध्वरसो वि बाधसे
यं सुगोपा रक्षसि ब्रह्मणस्पते ॥ ५ ॥

त्वं नो गोपाः पथिकृद्विचक्षण-
स्तव व्रताय मतिभिर्जरामहे ।

बृह॑स्पते॒ यो नो॑ अ॒भि ह्वरो॑ द॒धे
स्वा तं म॑र्मर्तु दु॒च्छुना॒ हर॑स्वती ॥ ६ ॥

उ॒त वा॒ यो नो॑ म॒र्चया॒दना॑गसो-
ऽराती॒वा मर्तः॑ सानु॒को वृकः॑ ।
बृह॑स्पते॒ अप॒ तं व॑र्तया प॒थः
सु॒गं नो॑ अ॒स्यै दे॒ववी॑तये कृधि ॥ ७ ॥

त्रा॒तारं॑ त्वा त॒नूनां॑ हवाम॒हे-
ऽव॑स्पर्तरधिव॒क्तार॑मस्म॒युम् ।
बृह॑स्पते देव॒निदो॒ नि ब॑र्हय॒
मा दु॒रेवा॒ उत्त॑रं सु॒म्नमुन्न॑शन् ॥ ८ ॥

त्वया॑ व॒यं सु॒वृधा॑ ब्रह्मणस्पते
स्पा॒र्हा वसु॑ मनु॒ष्या द॑दीमहि ।
या नो॑ दू॒रे त॒ळितो॒ या अरा॑तयो-
ऽभि सन्ति॑ ज॒म्भया॒ ता अ॑न॒प्नसः॑ ॥ ९ ॥

त्वया॑ व॒यमु॑त्त॒मं धी॑महे॒ वयो॒
बृह॑स्पते॒ पप्रि॑णा॒ सस्नि॑ना यु॒जा ।
मा नो॑ दुः॒शंसो॑ अभिदि॒प्सुरी॑शत॒
प्र सु॒शंसा॑ म॒तिभि॑स्तारिषीमहि ॥१०॥

अ॒ना॒नु॒दो वृ॑ष॒भो जग्मि॑राह॒वं
निष्ट॑प्ता॒ शत्रुं॒ पृत॑नासु सास॒हिः ।

असि॑ स॒त्य ऋ॑ण॒या ब्र॑ह्मणस्पत
उ॒ग्रस्य॑ चिद्दमि॒ता वी॑ळुह॒र्षिणः॑ ॥११॥

अदे॑वेन॒ मन॑सा॒ यो रि॑ष॒ण्यति॑
शा॒साम॒ग्रो मन्य॑मानो॒ जिघां॑सति ।
बृह॑स्पते॒ मा प्रण॒क्तस्य॑ नो व॒धो
नि क॑र्म म॒न्युं दु॒रेव॑स्य॒ शर्ध॑तः ॥१२॥

भरे॑षु॒ हव्यो॒ नम॑सोप॒सद्यो॒
गन्ता॒ वाजे॑षु॒ सनि॑ता॒ धनं॑धनम् ।
विश्वा॒ इद॒र्यो अ॑भिदि॒प्स्वो॒३॒॑ मृधो॒
बृह॒स्पति॒र्वि व॑वर्हा॒ रथाँ॑इव ॥१३॥

तेजि॑ष्ठया तप॒नी र॒क्षस॑स्तप॒
ये त्वा॑ नि॒दे द॑धि॒रे दृ॒ष्टवी॑र्यम् ।
आ॒विस्तत्कृ॑ष्व॒ यदस॑त्त उ॒क्थ्यं१॒॑
बृह॑स्पते॒ वि प॑रि॒रापो॑ अर्दय ॥१४॥

बृह॑स्पते॒ अति॒ यद॒र्यो अर्हा॑द्
द्यु॒मद्वि॒भाति॒ क्रतु॑म॒ज्जने॑षु ।
यद्दी॒दय॒च्छव॑स ऋतप्रजात॒
तद॒स्मासु॒ द्रवि॑णं धेहि चि॒त्रम् ॥१५॥

मा नः॑ स्ते॒नेभ्यो॒ ये अ॒भि द्रु॒हस्प॒दे
नि॑रा॒मिणो॑ रि॒पवोऽन्ने॑षु जागृ॒धुः ।

आ दे॒वाना॒मोह॑ते॒ वि व्रयो॑ हृ॒दि
बृह॑स्पते॒ न प॒रः साम्नो॑ विदुः ॥१६॥

विश्वे॑भ्यो॒ हि त्वा॒ भुव॑नेभ्य॒स्परि॒
त्वष्टाज॑न॒त्साम्नः॑साम्नः क॒विः ।
स ऋ॑ण॒चिदृ॑ण॒या ब्रह्म॑ण॒स्पति॑-
र्द्रु॒हो ह॒न्ता म॒ह ऋ॒तस्य॑ ध॒र्तरि॑ ॥ १७ ॥

तव॑ श्रि॒ये व्य॑जिहीत॒ पर्व॑तो॒
गवां॑ गो॒त्रमु॒दसृ॑जो॒ यद॑ङ्गिरः ।
इन्द्रे॑ण यु॒जा तम॑सा॒ परी॑वृतं॒
बृह॑स्पते॒ निर॒पामौ॑ब्जो अर्ण॒वम् ॥१८॥

ब्रह्म॑णस्पते॒ त्वम॒स्य य॒न्ता
सू॒क्तस्य॑ बोधि॒ तन॑यं च जिन्व ।
विश्वं॒ तद्भ॒द्रं यदव॑न्ति दे॒वा
बृ॒हद्व॑देम वि॒दथे॑ सु॒वीराः॑ ॥१९॥

---

No. 10 II. 33

## RUDRA

आ ते॑ पितर्मरुतां सु॒म्नमे॑तु॒
मा नः॒ सूर्य॑स्य सं॒दृशो॑ युयोथाः ।

अभि नो वीरो अर्वति क्षमेत
प्र जायेमहि रुद्र प्रजाभिः ॥ १ ॥

त्वादत्तेभी रुद्र शन्तमेभिः
शतं हिमा अशीय भेषजेभिः ।
व्य१स्मद्द्वेषो वितरं व्यंहो
व्यमीवाश्चातयस्वा विषूचीः ॥ २ ॥

श्रेष्ठो जातस्य रुद्र श्रियासि
तवस्तमस्तवसां वज्रबाहो ।
पर्षि णः पारमंहसः स्वस्ति
विश्वा अभीती रपसो युयोधि ॥ ३ ॥

मा त्वा रुद्र चुक्रुधामा नमोभि-
र्मा दुष्टुती वृषभ मा सहूती ।
उन्नो वीराँ अर्पय भेषजेभि-
र्भिषक्तमं त्वा भिषजां शृणोमि ॥ ४ ॥

हवीमभिर्हवते यो हविर्भि-
रव स्तोमेभी रुद्रं दिषीय ।
ऋदूदरः सुहवो मा नो अस्यै
बभ्रुः सुशिप्रो रीरधन्मनायै ॥ ५ ॥

उन्मा ममन्द वृषभो मरुत्वा-
न्त्वक्षीयसा वयसा नाधमानम् ।

घृणीव च्छायामरपा अशीया
विवासेयं रुद्रस्य सुम्नम् ॥ ६ ॥

क्व१स्य ते रुद्र मृळयाकु-
र्हस्तो यो अस्ति भेषजो जलाषः ।
अपभर्ता रपसो दैव्यस्या-
भी नु मा वृषभ चक्षमीथाः ॥ ७ ॥

प्र बभ्रवे वृषभाय श्वितीचे
महो महीं सुष्टुतिमीरयामि ।
नमस्या कल्मलीकिनं नमोभि-
र्गृणीमसि त्वेषं रुद्रस्य नाम ॥ ८ ॥

स्थिरेभिरङ्गैः पुरुरूप उग्रो
बभ्रुः शुक्रेभिः पिपिशे हिरण्यैः ।
ईशानादस्य भुवनस्य भूरे-
र्न वा उ योषद्रुद्रादसुर्यम् ॥ ९ ॥

अर्हन्बिभर्षि सायकानि धन्वार्ह-
न्निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं
न वा ओजीयो रुद्र त्वदस्ति ॥१०॥

स्तुहि श्रुतं गर्तसदं युवानं
मृगं न भीममुपहत्नुमुग्रम् ।

मृळा जरित्रे रुद्र स्तवानो-
ऽन्यं ते अस्मन्नि वपन्तु सेनाः ॥११॥

कुमारश्चित्पितरं वन्दमानं
प्रति नानाम रुद्रोपयन्तम् ।
भूरेर्दातारं सत्पतिं गृणीषे
स्तुतस्त्वं भेषजा रास्यस्मे ॥१२॥

या वो भेषजा मरुतः शुचीनि
या शंतमा वृषणो या मयोभु ।
यानि मनुरवृणीता पिता न-
स्ता शं च योश्च रुद्रस्य वश्मि ॥१३॥

परि णो हेती रुद्रस्य वृज्याः
त्वेषस्य दुर्मतिर्मही गात् ।
अव स्थिरा मघवद्भ्यस्तनुष्व
मीढ्वस्तोकाय तनयाय मृळ ॥१४॥

एवा बभ्रो वृषभ चेकितान
यथा देव न हृणीषे न हंसि ।
हवनश्रुन्नो रुद्रेह बोधि
बृहद्वदेम विदथे सुवीराः ॥१५॥

---

No. 11 II. 35

## APĀṀ NAPĀT =

उपे॑मसृक्षि वाज॒युर्व॑च॒स्यां
  चनो॑ दधीत ना॒द्यो गिरो॑ मे ।
अ॒पां नपा॑दाशु॒हेमा॑ कु॒वित्स
  सु॒पेश॑सस्करति॒ जोषि॑ष॒द्धि ॥ १ ॥

इ॒मं स्व॑स्मै हृ॒द आ सुत॑ष्टं॒
  मन्त्रं॑ वोचेम कु॒विद॑स्य॒ वेद॑त् ।
अ॒पां नपा॑दसु॒र्य॑स्य म॒ह्ना
  विश्वा॑न्य॒र्यो भुव॑ना जजान ॥ २ ॥

सम॒न्या यन्त्युप॑ यन्त्य॒न्याः
  स॑मा॒नमू॒र्वं न॒द्यः॑ पृणन्ति ।
तमू॒ शुचिं॒ शुच॑यो दीदि॒वांस॑-
  म॒पां नपा॑तं॒ परि॑ तस्थु॒रापः॑ ॥ ३ ॥

तमस्मे॑रा युव॒तयो॒ युवा॑नं
  मर्मृ॒ज्यमा॑नाः॒ परि॑ य॒न्त्यापः॑ ।
स शु॒क्रेभिः॒ शिक्व॑भी रे॒वद॒स्मे
  दी॒दाया॑नि॒ध्मो घृ॒तनि॑र्णिग॒प्सु ॥ ४ ॥

अ॒स्मै ति॒स्रो अ॑व्य॒थ्याय॒ नारी॑-
  र्दे॒वाय॑ दे॒वीर्दि॑धिष॒न्त्यन्न॑म् ।

कृता इवोप हि प्रसर्स्रे अप्सु
स पीयूषं धयति पूर्वसूनाम् ॥ ५ ॥

अश्वस्यात्र जनिमास्य च स्वर्-
द्रुहो रिषः सम्पृचः पाहि सूरीन् ।
आमासु पूर्षु परो अप्रमृष्यं
नारातयो वि नशन्नानृतानि ॥ ६ ॥

स्व आ दमे सुदुघा यस्य धेनुः
स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादूर्जयन्नप्स्वन्त-
र्वसुदेयाय विधते वि भाति ॥ ७ ॥

यो अप्स्वा शुचिना दैव्येन
ऋतावाजस्र उर्विया विभाति ।
वया इदन्या भुवनान्यस्य
प्र जायन्ते वीरुधश्च प्रजाभिः ॥ ८ ॥

अपां नपादा ह्यस्थादुपस्थं
जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहन्ती-
र्हिरण्यवर्णाः परि यन्ति यह्वीः ॥ ९ ॥

हिरण्यरूपः स हिरण्यसन्दृ-
गपां नपात्सेदु हिरण्यवर्णः ।

हिरण्ययात्परि योनेर्निषद्या
हिरण्यदा ददत्यन्नमस्मै ॥१०॥

तदस्यानीकमुत चारु नामा-
पीच्यं वर्धते नप्तुरपाम् ।
यमिन्धते युवतयः समित्था
हिरण्यवर्णं घृतमन्नमस्य ॥११॥

अस्मै बहूनामवमाय सख्ये
यज्ञैर्विधेम नमसा हविर्भिः ।
सं सानु मार्ज्मि दिधिषामि बिल्मै-
र्दधाम्यन्नैः परि वन्द ऋग्भिः ॥१२॥

स ईं वृषाजनयत्तासु गर्भं
स ईं शिशुर्धयति तं रिहन्ति ।
सो अपां नपादनभिम्लातवर्णो-
ऽन्यस्येवेह तन्वा विवेष ॥१३॥

अस्मिन्पदे परमे तस्थिवांस-
मध्वस्मभिर्विश्वहा दीदिवांसम् ।
आपो नप्त्रे घृतमन्नं वहन्तीः
स्वयमत्कैः परि दीयन्ति यह्वीः ॥१४॥

अयांसमग्ने सुक्षितिं जनाया-
यांसमु मघवद्भ्यः सुवृक्तिम् ।

विश्वं तद्भद्रं यदवन्ति देवा
बृहद्वदेम विदथे सुवीराः ॥१५॥

---

No. 12 II. 38

## SAVITṚ

उदु ष्य देवः सविता सवाय
शश्वत्तमं तदपा वह्निरस्थात् ।
नूनं देवेभ्यो वि हि धाति
रत्नमथाभजद्वीतिहोत्रं स्वस्तौ ॥ १ ॥

विश्वस्य हि श्रुष्टये देव ऊर्ध्वः
प्र बाहवा पृथुपाणिः सिसर्ति ।
आपश्चिदस्य व्रत आ निमृग्रा
अयं चिद्वातो रमते परिज्मन् ॥ २ ॥

आशुभिश्चिद्यान्वि मुचाति नून-
मरीरमदतमानं चिदेतोः ।
अह्यर्षूणां चिन्न्ययाँ अविष्या-
मनु व्रतं सवितुर्मोक्यागात् ॥ ३ ॥

पुनः समव्यद्विततं वयन्ती
मध्या कर्तोर्न्यधाच्छक्म धीरः ।

उत्संहायास्थाद्व्यृ१तूँरदर्ध-
ररमतिः सविता देव आगात् ॥ ४ ॥

नानौकांसि दुर्यो विश्वमायु-
र्वि तिष्ठते प्रभवः शोको अग्नेः ।
ज्येष्ठं माता सूनवे भागमाधा-
दन्वस्य केतमिषितं सवित्रा ॥ ५ ॥

समाववर्ति विष्ठितो जिगीषु-
र्विश्वेषां कामश्चरताममाभूत् ।
शश्वाँ अपो विकृतं हित्व्यागा-
दनु व्रतं सवितुर्दैव्यस्य ॥ ६ ॥

त्वया हितमप्यमप्सु भागं
धन्वान्या मृगयसो वि तस्थुः ।
वनानि विभ्यो नकिरस्य तानि
व्रता देवस्य सवितुर्मिनन्ति ॥ ७ ॥

याद्राध्यं१ वरुणो योनिमप्य-
मनिशितं निमिषि जर्भुराणः ।
विश्वो मार्ताण्डो व्रजमा पशुर्गा-
त्स्थशो जन्मानि सविता व्याकः ॥ ८ ॥

न यस्येन्द्रो वरुणो न मित्रो
व्रतमर्यमा न मिनन्ति रुद्रः ।

ना॒रा॑तय॒स्तमि॒दं स्व॒स्ति
हु॒वे दे॒वं स॑वि॒तारं॒ नमो॑भिः ॥ ९ ॥

भगं॒ धियं॑ वा॒जय॑न्तः॒ पुरं॑धिं॒
नरा॒शंसो॒ ग्नास्पति॑र्नो अव्याः ।
आ॒ये वा॒मस्य॑ सङ्ग॒थे र॑यी॒णां
प्रि॒या दे॒वस्य॑ सवि॒तुः स्या॑म ॥१०॥

अ॒स्मभ्यं॒ तद्दि॒वो अ॒द्भ्यः पृ॑थि॒व्या-
स्त्वया॑ द॒त्तं काम्यं॒ राध॒ आ गा॑त् ।
शं यत्स्तो॒तृभ्य॑ आ॒पये॒ भवा॑-
त्युरु॒शंसा॑य सवितर्जरि॒त्रे ॥११॥

---

No. 13  III. 33

## NADYAḤ

प्र पर्व॑तानामुश॒ती उ॒पस्था॑-
दश्वे॑इव॒ विषि॑ते॒ हास॑माने ।
गावे॑व शु॒भ्रे मा॒तरा॑ रिहा॒णे
विपा॑ट्छुतु॒द्री पय॑सा जवेते ॥ १ ॥

इन्द्रे॑षिते प्रस॒वं भिक्ष॑माणे॒
अच्छा॑ समु॒द्रं र॒थ्ये॑व याथः ।

समाराणे ऊर्मिभिः पिन्वमाने
अन्या वामन्यामप्येति शुभ्रे ॥ २ ॥

अच्छा सिन्धुं मातृतमामयासं
विपाशमुर्वीं सुभगामगन्म ।
वत्समिव मातरा संरिहाणे
समानं योनिमनु संचरन्ती ॥ ३ ॥

एना वयं पयसा पिन्वमाना
अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः
किंयुर्विप्रो नद्यो जोहवीति ॥ ४ ॥

रमध्वं मे वचसे सोम्याय
ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषा-
वस्युरह्वे कुशिकस्य सूनुः ॥ ५ ॥

इन्द्रो अस्माँ अरदद्वज्रबाहु-
रपाहन्वृत्रं परिधिं नदीनाम् ।
देवोऽनयत्सविता सुपाणि-
स्तस्य वयं प्रसवे याम उर्वीः ॥ ६ ॥

प्रवाच्यं शश्वधा वीर्यं त-
दिन्द्रस्य कर्म यदहिं विवृश्चत् ।

वि वज्रेण परिषदो जघाना-
यन्नापोऽयनमिच्छमानाः ॥ ७ ॥

एतद्वचो जरितर्मापि मृष्ठा
आ यत्ते घोषानुत्तरा युगानि ।
उक्थेषु कारो प्रति नो जुषस्व
मा नो नि कः पुरुषत्रा नमस्ते ॥ ८ ॥

ओ षु स्वसारः कारवे शृणोत
ययौ वो दूरादनसा रथेन ।
नि षू नमध्वं भवता सुपारा
अधोअक्षाः सिन्धवः स्रोत्याभिः ॥ ९ ॥

आ ते कारो शृणवामा वचांसि
ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा
मर्यायेव कन्या शश्वचै ते ॥१०॥

यदङ्ग त्वा भरताः सन्तरेयु-
र्गव्यन्ग्राम इषित इन्द्रजूतः ।
अर्षादह प्रसवः सर्गतक्त
आ वो वृणे सुमतिं यज्ञियानाम् ॥११॥

अतारिषुर्भरता गव्यवः स-
मभक्त विप्रः सुमतिं नदीनाम् ।

प्र पिन्वध्वमिषयन्तीः सुराधा
आ वक्षणाः पृणध्वं यात शीभम् ॥१२॥

उद्व ऊर्मिः शम्या ह-
न्त्वापो योक्त्राणि मुञ्चत ।
माऽदुष्कृतौ व्येनसा-
ऽघ्न्यौ शूनमारताम् ॥१३॥

---

No. 14 IV. 7

## AGNI

अयमिह प्रथमो धायि धातृभि-
र्होता यजिष्ठो अध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचु-
र्वनेषु चित्रं विभ्वं विशेविशे ॥ १ ॥

अग्ने कदा त आनुष-
ग्भुवद्देवस्य चेतनम् ।
अधा हि त्वा जगृभ्रिरे-
मर्तासो विक्ष्वीड्यम् ॥ २ ॥

ऋतावानं विचेतसं
पश्यन्तो द्यामिव स्तृभिः ।

विश्वेषामध्वराणां
हस्कर्तारं दमेदमे ॥ ३ ॥

आशुं दूतं विवस्वतो
विश्वा यश्चर्षणीरभि ।
आ जभ्रुः केतुमायवो
भृगवाणं विशेविशे ॥ ४ ॥

तमीं होतारमानुष-
क्चिकित्वांसं नि षेदिरे ।
रण्वं पावकशोचिषं
यजिष्ठं सप्त धामभिः ॥ ५ ॥

तं शश्वतीषु मातृषु
वन आ वीतमश्रितम् ।
चित्रं सन्तं गुहा हितं
सुवेदं कूचिदर्थिनम् ॥ ६ ॥

ससस्य यद्वियुता सस्मिन्नूध-
न्नृतस्य धामन्रणयन्त देवाः ।
महाँ अग्निर्नमसा रातहव्यो
वेरध्वराय सदमिदृतावा ॥ ७ ॥

वेरध्वरस्य दूत्यानि विद्वा-
नुभे अन्ता रोदसी सञ्चिकित्वान् ।

दू॒त ई॑यसे प्र॒दिव॑ उरा॒णो
वि॒दुष्ट॑रो दि॒व आ॒रोध॑नानि ॥ ८ ॥

कृ॒ष्णं त॒ एम॒ रुश॑तः पु॒रो भा-
श्चरि॒ष्ण्व१॒॑र्चिर्वपु॑षा॒मिदेक॑म् ।
यदप्र॑वीता॒ दध॑ते ह॒ गर्भं॑
स॒द्यश्चि॑ज्जा॒तो भव॒सीदु॑ दू॒तः ॥ ९ ॥

स॒द्यो जा॒तस्य॒ ददृ॑शान॒मोजो॒
यद॑स्य॒ वातो॑ अनु॒वाति॑ शो॒चिः ।
वृ॒णक्ति॑ ति॒ग्माम॑त॒सेषु॑ जि॒ह्वां
स्थि॒रा चि॒दन्ना॑ दयते॒ वि जम्भैः॑ ॥१०॥

तृ॒षु यदन्ना॑ तृ॒षुणा॑ व॒वक्ष॑
तृ॒षुं दू॒तं कृ॑णुते य॒ह्वो अ॒ग्निः ।
वात॑स्य मे॒ळिं स॑चते नि॒जूर्व-
न्ना॒शुं न वा॑जयते हि॒न्वे अर्वा॑ ॥११॥

---

No. 15 IV. 12

## AGNI

यस्त्वाम॑ग्न इ॒नध॑ते य॒तस्रु॑क्
त्रिस्ते॒ अन्नं॑ कृ॒णव॒त्सस्मि॒न्नह॑न् ।

स सु द्युम्नैरभ्यस्तु प्रसक्ष-
त्तव क्रत्वा जातवेदश्चिकित्वान् ॥ १ ॥

इध्मं यस्ते जभरच्छश्रमाणो
महो अग्ने अनीकमा सपर्यन् ।
स इधानः प्रति दोषामुषासं
पुष्यन्रयिं सचते घ्नन्नमित्रान् ॥ २ ॥

अग्निरीशे बृहतः क्षत्रियस्या-
ग्निर्वाजस्य परमस्य रायः ।
दधाति रत्नं विधते यविष्ठो
व्यानुषङ्मर्त्याय स्वधावान् ॥ ३ ॥

यच्चिद्धि ते पुरुषत्रा यविष्ठा-
चित्तिभिश्चकृमा कच्चिदागः ।
कृधी ष्व१स्माँ अदितेरनागा-
न्व्येनांसि शिश्रथो विष्वगग्ने ॥ ४ ॥

महश्चिदग्न एनसो अभीके
ऊर्वाद्देवानामुत मर्त्यानाम् ।
मा ते सखायः सदमिद्रिषाम
यच्छा तोकाय तनयाय शं योः ॥ ५ ॥

यथा ह त्यद्वसवो गौर्यं चि-
त्पदि षिताममुञ्चता यजत्राः ।

एवो ष्व१स्मन्मुमुग्धा व्यंहः
प्र तार्यग्ने प्रतरं न आयुः ॥ ६ ॥

---

No. 16 V. 83

## PARJANYA

अच्छा वद तवसं गीर्भिराभिः
स्तुहि पर्जन्यं नमसा विवास ।
कनिक्रदद्वृषभो जीरदानू
रेतो दधात्योषधीषु गर्भम् ॥ १ ॥

वि वृक्षान् हन्त्युत हन्ति रक्षसो
विश्वं बिभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो
यत्पर्जन्यः स्तनयन् हन्ति दुष्कृतः ॥ २ ॥

रथीव कशयाश्वाँ अभिक्षिप-
न्नाविर्दूतान्कृणुते वर्ष्याँ३ अह ।
दूरात्सिंहस्य स्तनथा उदीरते
यत्पर्जन्यः कृणुते वर्ष्यं१ नभः ॥ ३ ॥

प्र वाता वान्ति पतयन्ति विद्युत
उदोषधीर्जिहते पिन्वते स्वः ।

इरा विश्वस्मै भुवनाय जायते
यत्पर्जन्यः पृथिवीं रेतसावति ॥ ४ ॥

यस्य व्रते पृथिवी नन्नमीति
यस्य व्रते शफवज्जर्भुरीति ।
यस्य व्रत ओषधीर्विश्वरूपाः
स नः पर्जन्य महि शर्म यच्छ ॥ ५ ॥

दिवो नो वृष्टिं मरुतो ररीध्वं
प्र पिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुने-
ह्यपो निषिञ्चन्नसुरः पिता नः ॥ ६ ॥

अभि क्रन्द स्तनय गर्भमा धा
उदन्वता परि दीया रथेन ।
दृतिं सु कर्ष विषितं न्यञ्चं
समा भवन्तूद्वतो निपादाः ॥ ७ ॥

महान्तं कोशमुदचा नि षिञ्च
स्यन्दन्तां कुल्या विषिताः पुरस्तात् ।
घृतेन द्यावापृथिवी व्युन्धि
सुप्रपाणं भवत्वघ्न्याभ्यः ॥ ८ ॥

यत्पर्जन्य कनिक्रद-
त्स्तनयन् हंसि दुष्कृतः ।

प्रतीदं विश्वं मोदते,
यत्किं च पृथिव्यामधि ॥ ९ ॥

अवर्षीर्वर्षमुदु षू गृभाया-
कर्धन्वान्यत्येतवा उ ।
अजीजन ओषधीर्भोजनाय क-
मुत प्रजाभ्योऽविदो मनीषाम् ॥१०॥

---

No. 17 VI. 54

## PŪṢAN

सं पूषन् विदुषा नय
यो अञ्जसानुशासति ।
य एवेदमिति ब्रवत् ॥ १ ॥

समु पूष्णा गमेमहि
यो गृहाँ अभिशासति ।
इम एवेति च ब्रवत् ॥ २ ॥

पूष्णश्चक्रं न रिष्यति
न कोशोऽव पद्यते ।
नो अस्य व्यथते पविः ॥ ३ ॥

यो अस्मै हविषाविध-
न तं पूषापि मृष्यते ।
प्रथमो विन्दते वसु ॥ ४ ॥

पूषा गा अन्वेतु नः
पूषा रक्षत्वर्वतः ।
पूषा वाजं सनोतु नः ॥ ५ ॥

पूषन्ननु प्र गा इहि
यजमानस्य सुन्वतः ।
अस्माकं स्तुवतामुत ॥ ६ ॥

माकिर्नेशन्माकीं रिषन्
माकीं सं शारि केवटे ।
अथारिष्टाभिरा गहि ॥ ७ ॥

शृण्वन्तं पूषणं वय-
मिर्यमनष्टवेदसम् ।
ईशानं राय ईमहे ॥ ८ ॥

पूषन्तव व्रते वयं
न रिष्येम कदा चन ।
स्तोतारस्त इह स्मसि ॥ ९ ॥

परि पूषा परस्ता-
द्धस्तं दधातु दक्षिणम्।
पुनर्नो नष्टमाजतु ॥१०॥

---

No. 18 VII. 86

## VARUṆA

धीरा त्वस्य महिना जनूंषि
वि यस्तस्तम्भ रोदसी चिदुर्वी।
प्र नाकमृष्वं नुनुदे बृहन्तं
द्विता नक्षत्रं पप्रथच्च भूम ॥ १ ॥

उत स्वया तन्वा३ सं वदे त-
त्कदा न्व१न्तर्वरुणे भुवानि।
किं मे हव्यमहृणानो जुषेत
कदा मृळीकं सुमना अभि ख्यम् ॥ २ ॥

पृच्छे तदेनो वरुण दिदृ-
क्षूपो एमि चिकितुषो विपृच्छम्।
समानमिन्मे कवयश्चिदाहु-
रयं ह तुभ्यं वरुणो हृणीते ॥ ३ ॥

किमाग आस वरुण ज्येष्ठं
यत्स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावो-
ऽव त्वानेना नमसा तुर इयाम् ॥ ४ ॥

अव द्रुग्धानि पित्र्या सृजा नो-
ऽव या वयं चकृमा तनूभिः ।
अव राजन्पशुतृपं न तायुं
सृजा वत्सं न दाम्नो वसिष्ठम् ॥ ५ ॥

न स स्वो दक्षो वरुण ध्रुतिः सा
सुरा मन्युर्विभीदको अचित्तिः ।
अस्ति ज्यायान्कनीयस उपारे
स्वप्नश्चनेदनृतस्य प्रयोता ॥ ६ ॥

अरं दासो न मीळ्हुषे करा-
ण्यहं देवाय भूर्णयेऽनागाः ।
अचेतयदचितो देवो अर्यो
गृत्सं राये कवितरो जुनाति ॥ ७ ॥

अयं सु तुभ्यं वरुण स्वधावो
हृदि स्तोम उपश्रितश्चिदस्तु ।
शं नः क्षेमे शमु योगे नो अस्तु
यूयं पात स्वस्तिभिः सदा नः ॥ ८ ॥

---

No. 19 VII. 103

## MAṆḌŪKA

संवत्सरं शशयाना
ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्वितां
प्र मण्डूका अवादिषुः ॥ १ ॥

दिव्या आपो अभि यदेनमाय-
न्दृतिं न शुष्कं सरसी शयानम् ।
गवामह न मायुर्वत्सिनीनां
मण्डूकानां वग्नुरत्रा समेति ॥ २ ॥

यदीमेनाँ उशतो अभ्यवर्षी-
त्तृष्यावतः प्रावृष्यागतायाम् ।
अख्खलीकृत्या पितरं न पुत्रो
अन्यो अन्यमुप वदन्तमेति ॥ ३ ॥

अन्यो अन्यमनु गृभ्णात्येनो-
रपां प्रसर्गे यदमन्दिषाताम् ।
मण्डूको यदभिवृष्टः कनिष्क-
न्पृश्निः सम्पृङ्क्ते हरितेन वाचम् ॥ ४ ॥

यदेषामन्यो अन्यस्य वाचं
शाक्तस्येव वदति शिक्षमाणः ।
सर्वं तदेषां समृधेव पर्व
यत्सुवाचो वदथनाध्यप्सु ॥ ५ ॥

गोमायुरेको अजमायुरेकः
पृश्निरेको हरित एक एषाम् ।
समानं नाम बिभ्रतो विरूपाः
पुरुत्रा वाचं पिपिशुर्वदन्तः ॥ ६ ॥

ब्राह्मणासो अतिरात्रे न सोमे
सरो न पूर्णमभितो वदन्तः ।
संवत्सरस्य तदहः परि ष्ठ
यन्मण्डूकाः प्रावृषीणं बभूव ॥ ७ ॥

ब्राह्मणासः सोमिनो वाचमक्रत
ब्रह्म कृण्वन्तः परिवत्सरीणम् ।
अध्वर्यवो घर्मिणः सिष्विदाना
आविर्भवन्ति गुह्या न के चित् ॥ ८ ॥

देवहितिं जुगुपुर्द्वादशस्य
ऋतुं नरो न प्र मिनन्त्येते ।
संवत्सरे प्रावृष्यागतायां
तप्ता घर्मा अश्नुवते विसर्गम् ॥ ९ ॥

गोमा॑युरदादु॒जमा॑युरदा॒-
त्पृश्नि॑रदा॒द्धरि॑तो नो॒ वसू॑नि ।
गवां॑ म॒ण्डूका॒ दद॑तः श॒तानि॑
सहस्रसा॒वे प्र ति॑रन्त॒ आयुः॑ ॥१०॥



*No. 20* *IX. 80*

## SOMA

सोम॑स्य॒ धारा॑ पवते नृ॒चक्ष॑स
ऋ॒तेन॑ दे॒वान्ह॑वते दि॒वस्परि॑ ।
बृह॒स्पते॑ र॒वथे॑ना॒ वि दि॑द्युते
समु॒द्रासो॒ न सव॑नानि विव्यचुः ॥ १ ॥

यं त्वा॑ वाजिन्न॒घ्न्या अ॒भ्यनू॑ष॒ता-
योह॑तं॒ योनि॒मा रो॑हसि द्यु॒मान् ।
म॒घोना॒मायुः॑ प्रति॒रन्महि॒ श्रव॒
इन्द्रा॑य सोम पवसे॒ वृषा॒ मदः॑ ॥ २ ॥

एन्द्र॑स्य कु॒क्षा प॑वते म॒दिन्त॑म॒
ऊर्जं॒ वसा॑नः॒ श्रव॑से सुम॒ङ्गलः॑ ।
प्र॒त्यङ् स विश्वा॒ भुव॑ना॒भि प॑प्रथे॒
क्रीळ॒न्हरि॒रत्यः॑ स्यन्दते॒ वृषा॑ ॥ ३ ॥

तं त्वा देवेभ्यो मधुमत्तमं नरः
सहस्रधारं दुहते दश क्षिपः ।
नृभिः सोम प्रच्युतो ग्रावभिः सुतो
विश्वान्देवाँ आ पवस्वा सहस्रजित् ॥ ४ ॥

तं त्वा हस्तिनो मधुमन्तमद्रिभि-
र्दुहन्त्यप्सु वृषभं दश क्षिपः ।
इन्द्रं सोम मादयन्दैव्यं जनं
सिन्धोरिवोर्मिः पवमानो अर्षसि ॥ ५ ॥

---

No. 21   X, 34

## KITAVA

प्रावेपा मा बृहतो मादयन्ति
प्रवातेजा इरिणे वर्वृतानाः
सोमस्येव मौजवतस्य भक्षो
विभीदको जागृविर्मह्यमच्छान् ॥ १ ॥

न मा मिमेथ न जिहीळ एषा
शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतो-
रनुव्रतामप जायामरोधम् ॥ २ ॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि
न नाथितो विन्दते मर्डितारम् ।
अश्वस्येव जरतो वस्न्यस्य
नाहं विन्दामि कितवस्य भोगम् ॥ ३ ॥

अन्ये जायां परि मृशन्त्यस्य
यस्यागृधद्वेदने वाज्यक्षः ।
पिता माता भ्रातर एनमाहु-
र्न जानीमो नयता बद्धमेतम् ॥ ४ ॥

यदादीध्ये न दविषाण्येभिः
परायद्भ्योऽव हीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रतँ
एमीदेषां निष्कृतं जारिणीव ॥ ५ ॥

सभामेति कितवः पृच्छमानो
जेष्यामीति तन्वा शूशुजानः ।
अक्षासो अस्य वि तिरन्ति कामं
प्रतिदीव्ने दधत आ कृतानि ॥ ६ ॥

अक्षास इदङ्कुशिनो नितोदिनो
निकृत्वानस्तपनास्तापयिष्णवः ।
कुमारदेष्णा जयतः पुनर्हणो
मध्वा सम्पृक्ताः कितवस्य बर्हणा ॥ ७ ॥

त्रिपञ्चाशः क्रीळति व्रात एषां
देवइव सविता सत्यधर्मा ।
उग्रस्य चिन्मन्यवे ना नमन्ते
राजा चिदेभ्यो नम इत्कृणोति ॥ ८ ॥

नीचा वर्तन्त उपरि स्फुर-
न्त्यहस्तासो हस्तवन्तं सहन्ते ।
दिव्या अङ्गारा इरिणे न्युप्ताः
शीताः सन्तो हृदयं निर्दहन्ति ॥ ९ ॥

जाया तप्यते कितवस्य हीना
माता पुत्रस्य चरतः क्व स्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानो-
ऽन्येषामस्तमुप नक्तमेति ॥१०॥

स्त्रियं दृष्ट्वाय कितवं ततापा-
न्येषां जायां सुकृतं च योनिम् ।
पूर्वाह्णे अश्वान्युयुजे हि बभ्रू-
न्त्सो अग्नेरन्ते वृषलः पपाद ॥११॥

यो वः सेनानीर्महतो गणस्य
राजा व्रातस्य प्रथमो बभूव ।
तस्मै कृणोमि न धना रुणध्मि
दशाहं प्राचीस्तदृतं वदामि ॥१२॥

अक्षैर्मा दीव्यः कृषिमित्कृषस्व
वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया
तन्मे वि चष्टे सवितायमर्यः ॥१३॥

मित्रं कृणुध्वं खलु मृळता नो
मा नो घोरेण चरताभि धृष्णु ।
नि वो नु मन्युर्विशतामराति-
रन्यो बभ्रूणां प्रसितौ न्वस्तु ॥१४॥

---

No. 22 X. 71

## JÑĀNA

बृहस्पते प्रथमं वाचो अग्रं
यत्प्रैरत नामधेयं दधानाः ।
यदेषां श्रेष्ठं यदरिप्रमासीत्-
प्रेणा तदेषां निहितं गुहाविः ॥ १ ॥

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥ २ ॥

यज्ञेन वाचः पदवीयमाय-
न्तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा
तां सप्त रेभा अभि सं नवन्ते ॥ ३ ॥

उत त्वः पश्यन्न ददर्श वाच-
मुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं१ वि सस्रे
जायेव पत्य उशती सुवासाः ॥ ४ ॥

उत त्वं सख्ये स्थिरपीतमाहु-
र्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैष
वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ५ ॥

यस्तित्याज सचिविदं सखायं
न तस्य वाच्यपि भागो अस्ति ।
यदीं शृणोत्यलकं शृणोति
नहि प्रवेद सुकृतस्य पन्थाम् ॥ ६ ॥

अक्षण्वन्तः कर्णवन्तः सखायो
मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे
ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥ ७ ॥

विजेषकृदिन्द्रइवानवब्रवो३-
स्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि
विद्मा तमुत्सं यत आबभूथ ॥ ५ ॥

आभूत्या सहजा वज्र सायक
सहो बिभर्ष्यभिभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येधि
महाधनस्य पुरुहूत संसृजि ॥ ६ ॥

संसृष्टं धनमुभयं समाकृत-
मस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः
पराजितासो अप नि लयन्ताम् ॥ ७ ॥

---

No. 25 X. 90

## PURUSA

सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा-
ऽत्यदशाङ्गुलम् ॥ १ ॥

No. 24  X. 84

## MANYU

त्वया मन्यो सरथमारुजन्तो
हर्षमाणासो धृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना
अभि प्र यन्तु नरो अग्निरूपाः ॥ १ ॥

अग्निरिव मन्यो त्विषितः सहस्व
सेनानीर्नः सहुरे हूत एधि ।
हत्वाय शत्रून्वि भजस्व वेद
ओजो मिमानो वि मृधो नुदस्व ॥ २ ॥

सहस्व मन्यो अभिमातिमस्मे
रुजन्मृणन्प्रमृणन्प्रेहि शत्रून् ।
उग्रं ते पाजो नन्वा रुरुध्रे
वशी वशं नयस एकज त्वम् ॥ ३ ॥

एको बहूनामसि मन्यवीळितो
विशंविशं युधये सं शिशाधि ।
अकृत्तरुक्त्वया युजा वयं
द्युमन्तं घोषं विजयाय कृण्महे ॥ ४ ॥

विजेषकृदिन्द्र इवानवब्रवो३-
स्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि
विद्मा तमुत्सं यत आबभूथ ॥ ५ ॥

आभूत्या सहजा वज्र सायक
सहो बिभर्ष्यभिभूत उत्तरम् ।
क्रत्वा नो मन्यो सह मेद्येधि
महाधनस्य पुरुहूत संसृजि ॥ ६ ॥

संसृष्टं धनमुभयं समाकृत-
मस्मभ्यं दत्तां वरुणश्च मन्युः ।
भियं दधाना हृदयेषु शत्रवः
पराजितासो अप नि लयन्ताम् ॥ ७ ॥

---

No. 25 X. 90

## PURUSA

सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा-
त्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

No. 23 X, 72

# DEVA

देवानां नु वयं जाना
प्र वोचाम विपन्यया ।
उक्थेषु शस्यमानेषु
यः पश्यादुत्तरे युगे ॥ १ ॥

ब्रह्मणस्पतिरेता
सं कर्मार इवाधमत् ।
देवानां पूर्व्ये युगे-
ऽसतः सदजायत ॥ २ ॥

देवानां युगे प्रथमे-
ऽसतः सदजायत ।
तदाशा अन्वजायन्त
तदुत्तानपदस्परि ॥ ३ ॥

भूर्जज्ञ उत्तानपदो
भुव आशा अजायन्त ।
अदितेर्दक्षो अजायत
दक्षाद्वदितिः परि ॥ ४ ॥

अदि॑ति॒र्ह्यज॑निष्ट
दक्ष॒ या दु॑हि॒ता तव॑ ।
तां दे॒वा अन्व॑जायन्त
भ॒द्रा अ॒मृत॑बन्धवः ॥ ५ ॥

यद्दे॑वा अ॒दः स॑लि॒ले
सु॒संर॑ब्धा॒ अति॑ष्ठत ।
अत्रा॑ वो॒ नृत्य॑तामिव
ती॒व्रो रे॒णुरपा॑यत ॥ ६ ॥

यद्दे॑वा॒ यत॑यो यथा
भुव॑ना॒न्यपि॑न्वत ।
अत्रा॑ समु॒द्र आ गू॒ळ्ह-
मा सूर्य॑मजभर्तन ॥ ७ ॥

अ॒ष्टौ पु॒त्रासो॒ अदि॑ते-
र्ये जा॒तास्त॒न्व१॒ स्परि॑ ।
दे॒वाँ उप॒ प्रैत्स॒प्तभिः॒
परा॑ मार्ता॒ण्डमा॑स्यत् ॥ ८ ॥

स॒प्तभिः॑ पु॒त्रैरदि॑ति॒-
रुप॒ प्रैत्पू॒र्व्यं यु॒गम् ।
प्र॒जायै॑ मृ॒त्यवे॑ त्व॒-
त्पुन॑र्मार्ता॒ण्डमाभ॑रत् ॥ ९ ॥

पुरुष एवेदं सर्वं
यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥ २ ॥

एतावानस्य महिमा-
तो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवि ॥ ३ ॥

त्रिपादूर्ध्व उदैत्पुरुषः
पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्राम-
त्साशनानशने अभि ॥ ४ ॥

तस्माद्विराळजायत
विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत
पश्चाद्भूमिमथो पुरः ॥ ५ ॥

यत्पुरुषेण हविषा
देवा यज्ञमतन्वत ।
वसन्तो अस्यासीदाज्यं
ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥

तं यज्ञं बर्हिषि प्रौक्ष-
न्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त
साध्या ऋषयश्च ये ॥ ७ ॥

तस्माद्यज्ञात्सर्वहुतः
सम्भृतं पृषदाज्यम् ।
पशून्ताँश्चक्रे वायव्या-
नारण्यान्ग्राम्याश्च ये ॥ ८ ॥

तस्माद्यज्ञात्सर्वहुत
ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्मा-
द्यजुस्तस्मादजायत ॥ ९ ॥

तस्मादश्वा अजायन्त
ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मा-
त्तस्माज्जाता अजावयः ॥१०॥

यत्पुरुषं व्यदधुः
कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू
का ऊरू पादा उच्येते ॥११॥

ब्रा॒ह्म॒णो॑ऽस्य॒ मुख॑मासीद्

बा॒हू रा॑ज॒न्यः॑ कृ॒तः ।

ऊ॒रू तद॑स्य॒ यद्वैश्यः॑

प॒द्भ्यां शू॒द्रो अ॑जायत ॥१२॥

च॒न्द्रमा॒ मन॑सो जा॒त-

श्चक्षोः॒ सूर्यो॑ अजायत ।

मुखा॒दिन्द्र॑श्चा॒ग्निश्च॑

प्रा॒णाद्वा॒युर॑जायत ॥१३॥

नाभ्या॑ आसीद॒न्तरि॑क्षं

शी॒र्ष्णो द्यौः सम॑वर्तत ।

प॒द्भ्यां भूमि॒र्दिशः॒ श्रोत्रा॒-

त्तथा॑ लो॒काँ अ॑कल्पयन् ॥१४॥

स॒प्तास्या॑सन्परि॒धय॒-

स्त्रिः स॒प्त स॒मिधः॑ कृ॒ताः ।

दे॒वा यद्य॒ज्ञं त॑न्वा॒ना

अब॑ध्न॒न्पुरु॑षं प॒शुम् ॥१५॥

य॒ज्ञेन॑ य॒ज्ञम॑यजन्त दे॒वा-

स्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन् ।

ते ह॒ नाकं॑ महि॒मानः॑ सचन्त॒

यत्र॒ पूर्वे॑ सा॒ध्याः सन्ति॑ दे॒वाः ॥१६॥

---

No. 26 X. 108

## SARAMĀ-PAṆI SAṀVĀDA

किमिच्छन्ती सरमा प्रेदमानड्
दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासी-
त्कथं रसाया अतरः पयांसि ॥ १ ॥

इन्द्रस्य दूतीरिषिता चरामि
मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आव-
त्तथा रसाया अतरं पयांसि ॥ २ ॥

कीदृङ्ङिन्द्रः सरमे का दृशीका
यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधा-
माथा गवां गोपतिर्नो भवाति ॥ ३ ॥

नाहं तं वेद दभ्यं दभत्स
यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीरा
हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥

इमा गावः सरमे या ऐच्छः
परि दिवो अन्तान्त्सुभगे पतन्ती ।
कस्त एना अव सृजादयु-
ध्व्युतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥

असेन्या वः पणयो वचां-
स्यनिषव्यास्तन्वः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्था
बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

अयं निधिः सरमे अद्रिबुध्नो
गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपा
रेकु पदमलकमा जगन्थ ॥ ७ ॥

एह गमन्नृषयः सोमशिता
अयास्यो अङ्गिरसो नवग्वाः ।
त एतमूर्वं वि भजन्त गोना-
मथैतद्वचः पणयो वमन्नित् ॥ ८ ॥

एवा च त्वं सरम आजगन्थ
प्रबाधिता सहसा दैव्येन ।
स्वसारं त्वा कृणवै मा पुनर्गा
अप ते गवां सुभगे भजाम ॥ ९ ॥

नाहं वेद भ्रातृत्वं नो स्वसृत्व-
मिन्द्रो विदुरङ्गिरसश्च घोराः ।
गोकामा मे अच्छदयन्यदाय-
मपात इत पणयो वरीयः ॥१०॥

दूरमित पणयो वरीय उ-
द्गावो यन्तु मिनतीरृतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः
सोमो ग्रावाण ऋषयश्च विप्राः ॥११॥

---

No. 27 X 121

## HIRAṆYAGARBHA

हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम ॥ १ ॥

य आत्मदा बलदा यस्य विश्व
उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः
कस्मै देवाय हविषा विधेम ॥ २ ॥

यः प्राणतो निमिषतो महि-
त्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम ॥ ३ ॥

यस्येमे हिमवन्तो महित्वा
यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू
कस्मै देवाय हविषा विधेम ॥ ४ ॥

येन द्यौरुग्रा पृथिवी च दृळ्हा
येन स्वः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः
कस्मै देवाय हविषा विधेम ॥ ५ ॥

यं क्रन्दसी अवसा तस्तभाने
अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितो विभाति
कस्मै देवाय हविषा विधेम ॥ ६ ॥

आपो ह यद् बृहतीर्विश्वमाय-
न्गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः
कस्मै देवाय हविषा विधेम ॥ ७ ॥

यश्चिदापो महिना पर्यपश्य-
द्दक्षं दधाना जनयन्तीर्यज्ञम् ।
यो देवेष्वधि देव एक आसी-
त्कस्मै देवाय हविषा विधेम ॥ ८ ॥

मा नो हिंसीज्जनिता यः पृथिव्या
यो वा दिवं सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान
कस्मै देवाय हविषा विधेम ॥ ९ ॥

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम् ॥१०॥

---

No. 28 X 129

## NĀSADĪYA

नासदासीन्नो सदासीत्तदानीं
नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्म-
न्नम्भः किमासीद्गहनं गभीरम् ॥ १ ॥

न मृत्युरासीदमृतं न तर्हि
न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं
तस्माद्धान्यन्न परः किं चनास ॥ २ ॥

तम आसीत्तमसा गूळ्हमग्रे-
ऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासी-
त्तपसस्तन्महिनाजायतैकम् ॥ ३ ॥

कामस्तदग्रे समवर्तताधि
मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्द-
न्हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥

तिरश्चीनो विततो रश्मिरेषा-
मधः स्विदासी३दुपरि स्विदासी३त् ।
रेतोधा आसन्महिमान आस-
न्त्स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ५ ॥

को अद्धा वेद क इह प्र वोच-
त्कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनेना-
था को वेद यत आबभूव ॥ ६ ॥

इ॒यं विसृ॑ष्टि॒र्यत॑ आब॒भूव॒
यदि॑ वा द॒धे यदि॑ वा॒ न ।
यो अ॒स्याध्य॑क्षः पर॒मे व्यो॑मन्-
त्सो अ॒ङ्ग वे॑द॒ यदि॑ वा॒ न वेद॑ ॥ ७ ॥

No. 29 X. 151

## ŚRADDHĀ

श्र॒द्धया॒ग्निः समि॑ध्यते
श्र॒द्धया॑ हूयते ह॒विः ।
श्र॒द्धां भग॑स्य मू॒र्धनि॑
वच॒सा वे॑दयामसि ॥ १ ॥

प्रि॒यं श्र॑द्धे॒ दद॑तः
प्रि॒यं श्र॑द्धे॒ दिदा॑सतः ।
प्रि॒यं भो॒जेषु॒ यज्व॑-
स्वि॒दं म॒ उदि॒तं कृ॑धि ॥ २ ॥

यथा॑ दे॒वा असु॑रेषु
श्र॒द्धामु॒ग्रेषु॑ चक्रि॒रे ।
ए॒वं भो॒जेषु॒ यज्व॑-
स्व॒स्माक॑मुदि॒तं कृ॑धि ॥ ३ ॥

श्रद्धां देवा यजमाना
वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या
श्रद्धया विन्दते वसु ॥ ४ ॥

श्रद्धां प्रातर्हवामहे
श्रद्धां मध्यन्दिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि
श्रद्धे श्रद्धापयेह नः ॥ ५ ॥

---

No. 30 X. 191

## SAJÑĀNA

संसमिद्युवसे वृष-
न्नग्ने विश्वान्यर्य आ ।
इळस्पदे समिध्यसे
स नो वसून्या भर ॥ १ ॥

सं गच्छध्वं सं वदध्वं
सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे
संजानाना उपासते ॥ २ ॥

समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम् ।
समानं मन्त्रमभि मन्त्रये वः
समानेन वो हविषा जुहोमि ॥ ३ ॥

समानी व आकूतिः
समाना हृदयानि वः ।
समानमस्तु वो मनो
यथा वः सुसहासति ॥ ४ ॥

---

No. 31 XXII. 22

## YOGA-KSEMA

आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥२२॥

---

No. 32 XXXII. 1-5

## PRAJĀPATI

तदेवाग्निस्तदादित्य-
स्तद्वायुस्तदु चन्द्रमाः ।
तदेव शुक्रं तद्ब्रह्म
ता आपः स प्रजापतिः ॥ १ ॥

सर्वे निमेषा जज्ञिरे
विद्युतः पुरुषादधि ।
नैनमूर्ध्वं न तिर्यञ्चं
न मध्ये परिजग्रभत् ॥ २ ॥

न तस्य प्रतिमा अस्ति
यस्य नाम महद्यशः ।
हिरण्यगर्भ इत्येष मा मा हिंसी-
दित्येषा यस्मान्न जात इत्येषः ॥ ३ ॥

एषो ह देवः प्रदिशोऽनु सर्वाः
पूर्वो ह जातः स उ गर्भे अन्तः ।
म एव जातः स जनिष्यमाणः
प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ ४ ॥

यस्माज्जातं न पुरा किं च नैव
य आबभूव भुवनानि विश्वा ।
प्रजापतिः प्रजया सꣳरराणस्त्रीणि
ज्योतीꣳषि सचते स षोडशी ॥ ५ ॥

No. 33 XXXIV. 1-6

## ŚIVA-SAṀKALPA

यज्जाग्रतो दूरमुदैति दैवं
तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं
तन्मे मनः शिवसंकल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो
यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तः प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥ २ ॥

यत्प्रज्ञानमुत चेतो धृतिश्च
यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किंचन कर्म क्रियते
तन्मे मनः शिवसंकल्पमस्तु ॥ ३ ॥

येनेदं भूतं भुवनं भविष्य-
त्परि गृहीतममृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता
तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥

यस्मिन्नृचः साम यजूꣳषि यस्मि-
न्प्रतिष्ठिता रथनाभाविवाराः।
यस्मिꣳश्चित्तꣳ सर्वमोतं प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्या-
न्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं
तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

---

No. 34  I. 1. 4

## AGNI

२ १ २        ३ १ २
यज्ञायज्ञा वो अग्नये
३ १ २     ३   १ २
गिरागिरा च दक्षसे।

१२ ३२३१२ ३१२
प्रप्र वयममृतं जातवेदसं

३२ ३१र २र
प्रियं मित्रं न शꣳसिषम् ॥ १ ॥

३ १ २ २ २१
पाहि नो अग्न एकया

३ २ ३ ३ १ २
पाह्यू३त द्वितीयया ।

१ २ ३ २ ३ १ २
पाहि गीर्भिस्तिसृभिरूर्जां पते

३ १ २३१२
पाहि चतसृभिर्वसो ॥ २ ॥

३ १२ ३ १ २
बृहद्भिरग्ने अर्चिभिः

३१२ ३ १ २
शुक्रेण देव शोचिषा ॥

११२ ३ १ २
भरद्वाजे समिधानो यविष्ठ

३१ २
रेवत्पावक दीदिहि ॥ ३ ॥

१ २
त्वे अग्ने स्वाहुत

३१ २ २१२
प्रियासः सन्तु सूरयः ।

३ २ ३ २ ३ १ २ ३
यन्तारो ये मघवानो

१ २ ३ १२ २२ ३ १ २
जनानामूर्वं दयन्त गोनाम् ॥ ४ ॥

१ ३ १ २ ३ १ २
अग्ने जरितर्विश्पति-

३ १ २ ३ १ २
स्तपानो देव रक्षसः ।

१ २ ३ १
अप्रोषिवान् गृहपते महाँ

२ ३ १ ३ १ २ ३ २
असि दिवस्पायुर्दुरोणयुः ॥ ५ ॥

१ ३ १ २ ३ १ २
अग्ने विवस्वदुषस-

३ १२ २२
श्चित्रँ राधो अमर्त्य ।

२ ३ १ १ ३
आ दाशुषे जातवेदो वहा

२ ३ १ ३ १ २ ३ १ २
त्वमद्या देवाँ उषर्बुधः ॥ ६ ॥

१ २ ३ २ ३ १२
त्वं नश्चित्र ऊत्या

३ १ २
वसो राधाँसि चोदय ।

३ २ ३ १र ३ १ २
अध रायस्त्वमग्ने रथीरसि
३ २ ३ २ ३ २र २र
विदा गाधं तुचे तु नः ॥ ७ ॥

२उ ३ १ २ ३ १ २
त्वमित्सप्रथा अस्यग्ने
३ २ ३ २
त्रातर्ऋतः कविः ।
१र २र ३
त्वां विप्रासः समिधान दीदिव
१ २ ३ १ २
आ विवासन्ति वेधसः ॥ ८ ॥

१ २ ३ १ २
आ नो अग्ने वयोवृधं
३ १ २ ३ १ २
रयिं पावक शंस्यम् ।
१ २ ३ १ ३
रास्वा च न उपमाते पुरुस्पृहं
३ १ ३ १ २
सुनीती सुयशस्तरम् ॥ ९ ॥

२उ ३ १ २ ३ २ ३
यो विश्वा दयते वसु
१ २ ३ १र २र
होता मन्द्रो जनानाम् ।

२३१र २र ३ १ २ ३
मधोर्न पात्रा प्रथमान्यस्मै
१र २र ३ १ २
प्र स्तोमा यंत्वग्नये ॥१०॥

---

No. 35 III 1. 1.

## INDRA

१ २ ३ १ २
उत्त्वा मंदन्तु सोमाः
३ १र २र
कृणुष्व राधो अद्रिवः ।
१ २ ३ १ २
अव ब्रह्मद्विषो जहि ॥ १ ॥

१ २ ३ १ २ ३२३
गिर्वणः पाहि नः सुतं
३ १ २
मधोर्धाराभिरज्यसे ।
२ ३ १ २ ३ १र २र
इन्द्र त्वादातमिद्यशः ॥ २ ॥

१ २ ३ २ ३ १ २३
सदा व इन्द्रश्चर्कृष-
२३ ३ १र २र३१
दा उपो नु स सपर्यन् ।

२ ३ २ ३१२उ ३ १ २
न देवो वृतः शूर इन्द्रः ॥ ३ ॥

१ २ ३ १ २
आ त्वा विशन्त्विन्दवः
३ १ २ ३ १ २
समुद्रमिव सिन्धवः ।
२उ ३ १ २
न त्वामिन्द्राति रिच्यते ॥४॥

२ ३ २ ३ १ २ ३ १र
इन्द्रमिद्गाथिनो बृह-
२र ३ १ २ ३ १ २
दिन्द्रमर्केभिरर्किणः ।
१ ३ १ २
इन्द्रं वाणीरनूषत ॥ ५ ॥

१ २ ३१ २
इन्द्र इषे ददातु न
३ १ २ ३ २ ३२
ऋभुक्षणमृभुं रयिम् ।
३ १ २ ३ १ २
वाजी ददातु वाजिनम् ॥ ६ ॥

१ २ ३ २ ३ २ ३ २
इन्द्रो अङ्ग महद्भय-
३१र २र
मभी षदप चुच्यवत् ।

२उ ३१र २र
स हि स्थिरो विचर्षणि ॥ ७ ॥

२ १ २ ३ १ २३
इमा उ त्वा सुतेसुते
१ २ ३ १ २
नक्षन्ते गिर्वणो गिरः ।
१ २ ३ २उ ३ १ २
गावो वत्सं न धेनवः ॥ ८ ॥

१ ३ २ ३ १ २
इन्द्रा नु पूषणा
३ २ ३ १ २ ३ १ २
वयᳬं सख्याय स्वस्तये ।
३ १ ३ १ २
हुवेम वाजसातये ॥ ९ ॥

१ २ ३ १र २र ३
न कि इन्द्र त्वदुत्तर
१र २र
न ज्यायो अस्ति वृत्रहन् ।
२ ३ २उ ३ २
न क्येवं यथा त्वम् ॥१०॥

---

No. 36 VI. 1. 4

## SOMA

१र ३र३ २३२३ १२३
प्र तु द्रव परिकोशं निषीद

१ २ ३२ ३१र २र
नृभिः पुनानो अभि वाजमर्ष ।

२ ३ १ ३ ३ १२३२३ १
अश्वं न त्वा वाजिनं मर्जयन्तो

२ ३१ २३१ २
ऽच्छा बर्ही रशनाभिर्नयन्ति ॥ १ ॥

१र ३र३१२ ३ २
प्र काव्यमुशनेव ब्रुवाणो

३२ ३२३ १२
देवो देवानां जनिमा विवक्ति ।

१२३१ १२ ३२
महिव्रतः शुचिबन्धुः पावकः

३१ २३२ ३क२र३ १२
पदा वराहो अभ्येति रेभन् ॥ २ ॥

३१र २र ३ १र २र
तिस्रो वाच ईरयति प्र वह्नि

३१२३१र २र ३१
ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।

१ २   ३ १ २   ३ १ २ ३
गावो यन्ति गोपतिं पृच्छमानाः

१ २   ३ १ २   ३ २
सोमं यन्ति मतयो वावशानाः ॥ ३ ॥

३ २  ३ २  ३ १ २  ३ १ २
असा प्रेषा हेमना पूयमानो

३ २  ३ २ ३  १ २  ३ १ २
देवो देवेभिः समपृक्त रसम् ।

१ २   ३ २ ३  १ २ ३  १ २
सुतः पवित्रं पर्य्येति रेभ-

३ १ ३ १ २ ३ २ ३ १ २
न्मितेव सद्म पशुमन्ति होता ॥ ४ ॥

१ २   ३ १  २ ३ १
सोमः पवते जनिता मतीनां

२ ३ २ ३ १ २ ३ १ २ ३  २
जनिता दिवो जनिता पृथिव्याः ।

३  १र  २र ३ १र   २र
जनिताग्नेर्जनिता सूर्य्यस्य

३ १ २   ३ १र   २र
जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥

२ १  २ ३ १र  २र   ३ १
अभि त्रिपृष्ठं वृषणं वयोधा-

२ ३ १ २   ३  १ ३
मङ्गोषिणमवावशन्त वाणीः ।

२ ३ १ २ ३ १ २ ३ २उ ३
वना वसानो वरुणो न सिन्धु-

१ २ ३ १ २ ३ १ २
र्वि रत्नधा दयते वार्याणि ॥ ६ ॥

१ २ ३ १ २ ३ १र २र
अक्रान्त्समुद्रः प्रथमे विधर्मे·

३ १ २ ३ १र २र ३ २
जनयन् प्रजा भुवनस्य गोपाः ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वृषा पवित्रे अधि सानो अव्ये

३ १र २र ३ १र २र
बृहत्सोमो वावृधे स्वानो अद्रिः ॥ ७ ॥

१ २ ३ २ ३ १ २ ३ १ २ ३
कनिक्रन्ति हरिरा सृज्यमानः

२ ३ १ २ ३ १ २ ३ २
सीदन् वनस्य जठरे पुनानः ।

१ २ ३ १ २ ३ २ ३ १र
नृभिर्यतः कृणुते निर्णिजं गा-

२र ३ १ २ ३ १ २
मतो मतिं जनयत स्वधाभिः ॥ ८ ॥

३ २उ ३ १ २ ३ २ ३
एष स्य ते मधुमाँ इन्द्र सोमो

२ ३ २ ३ १ २ ३ १ २
वृषा वृष्णः परि पवित्रे अक्षाः ।

१ १ २३१ २३१२
सहस्रदाः शतदा भूरिदावा
३२ ३२उ ३क २र
शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ९ ॥

१२ ३१२ ३१२
पवस्व सोम मधुमाँ ऋतावा-
२र ३२ ३ १३ २३ १ २
पो वसानो अधि सानो अव्ये ।
१३ १२ ३१२
अव द्रोणानि घृतवन्ति रोह
३१२ ३१ २३१२
मदिन्तमो मत्सर इन्द्रपानः ॥१०॥

---

No. 37 I. 29

## RĀJYA-KĀMANĀ

अभीवर्तेन मणिना
येनेन्द्रो अभिवावृधे ।
तेनास्मान् ब्रह्मणस्पते-
ऽभि राष्ट्राय वर्धय ॥ १ ॥

अभिवृत्य सपत्ना-
नभि या नो अरातयः ।

अभि पृतन्यन्तं
    तिष्ठाभि यो नो दुरस्यति ॥ २ ॥

अभि त्वा देवः सवि-
    ताभि सोमो अवीवृधत् ।
अभि त्वा विश्वा भूता-
    न्यभीवर्तो यथाससि ॥ ३ ॥

अभीवर्तो अभिभवः
    सपत्नक्षयणो मणिः ।
राष्ट्राय मह्यं बध्यतां
    सपत्नेभ्यः पराभुवे ॥ ४ ॥

उदसौ सूर्यो अगा-
    दुदिदं मामकं वचः ।
यथाहं शत्रुहोऽसा-
    न्यसपत्नः सपत्नहा ॥ ५ ॥

सपत्नक्षयणो वृषा-
    भिराष्ट्रो विषासहिः ।
यथाहमेषां वीराणां
    विराजानि जनस्य च ॥ ६ ॥

---

No. 38 III. 30

## SĀṀMANASYA

सहृदयं सांमनस्य-
मविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत
वत्सं जातमिवाघ्न्या ॥ १ ॥

अनुव्रतः पितुः पुत्रो
मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं
वाचं वदतु शन्तिवाम् ॥ २ ॥

मा भ्राता भ्रातरं द्विक्ष-
न्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा
वाचं वदत भद्रया ॥ ३ ॥

येन देवा न वियन्ति
नो च विद्विषते मिथः ।
तत्कृण्मो ब्रह्म वो गृहे
संज्ञानं पुरुषेभ्यः ॥ ४ ॥

ज्याय॑स्वन्तश्चि॒त्तिनो॒
मा वि यौ॑ष्ट संरा॒धय॑न्त॒ः सधु॑रा॒श्चर॑न्तः ।
अ॒न्यो अ॒न्यस्मै॑ व॒ल्गु वद॑न्त॒
एत॑ सध्री॒चीना॑न् वः॒ संम॑नसस्कृणोमि ॥५॥

स॒मा॒नी प्र॒पा स॒ह वो॑ऽन्नभा॒गः
स॑मा॒ने योक्त्रे॑ स॒ह वो॑ युनज्मि ।
स॒म्यञ्चो॒ऽग्निं सप॑र्यता॒रा
नाभि॑मिवा॒भितः॑ ॥ ६ ॥

स॒ध्री॒चीना॑न् वः॒ संम॑नसस्कृणो-
म्येक॑श्नुष्टीन्त्सं॒वन॑नेन॒ सर्वा॑न् ।
दे॒वा इ॑वा॒मृतं॒ रक्ष॑माणाः
सा॒यंप्रा॑तः सौमन॒सो वो॑ अस्तु ॥ ७ ॥

---

No. 39 VI. 20

## TAKMAN

अ॒ग्नेरि॑वास्य॒ दह॑त एति शु॒ष्मिण॑
उ॒तेव॑ म॒त्तो वि॒लप॒न्नपा॑यति ।
अ॒न्यम॒स्मदि॑च्छतु॒ कं चि॑दव्र॒त-
स्तपु॑र्वधाय॒ नमो॑ अस्तु त॒क्मने॑ ॥ १ ॥

नमो॑ रु॒द्राय॒ नमो॑ अस्तु त॒क्मने॒
नमो॒ राज्ञे॒ वरु॑णाय॒ त्विषी॑मते ।
नमो॑ दि॒वे नम॑: पृथि॒व्यै
नम॒ ओष॑धीभ्यः ॥ २ ॥

अ॒यं यो अ॑भिशोचयि॒ष्णु-
र्विश्वा॑ रू॒पाणि॒ हरि॑ता कृ॒णोषि॑ ।
तस्मै॑ तेऽरु॒णाय॑ ब॒भ्रवे॒
नम॑: कृणोमि॒ वन्या॑य त॒क्मने॑ ॥ ३ ॥

---

No. 40 I. 2. 5. 1–10

## VEDI

दे॒वाश्च॒ वाऽअ॒सुराश्च । उ॒भये प्राजापत्या॒: पस्पृधिरे॒ त॒तो दे॒वाऽअनु॒व्यमि॑वासु॒रथ॒ हासु॒रा मेनि॑रेऽस्मा॒कमे॒वेदं॑ ख॒लु भुवन-मि॒ति ॥ १ ॥ ते॑ होचुः । ह॒न्तेमां॒ पृथि॒वीं वि॑भ॒जामहै ता॒ं विभ-ज्यो॒पजीवामे॒ति तामौ॒क्ष्णैश्चर्म॑भिः पश्चात्प्रा॒ञ्चो विभ॒जमानाऽ-अभीयुः ॥ २ ॥ तद्वै॒ देवाः शुश्रुवुः । वि॒भजन्ते ह वा॒ऽइमाम॒सुराः थिवीं प्रे॒त त॒देष्या॒मो यत्रे॒माम॒सुरा व्वि॒भुजन्ते के त॒तः स्याम दस्यै न भ॒जेमही॒ति ते॒ यज्ञ॒मेव वि॒ष्णुं पु॒रस्कृत्ये॒युः ॥ ३ ॥ ते॒ चुः । अ॒नु नोऽस्यां॒ पृथिव्या॒माभजता॒स्त्वेव नो॒ऽप्यस्यां भाग-

ऽइति ते हासुराऽअसूयन्तऽइवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो
दद्मऽइति ॥ ४ ॥ वामनो ह विष्णुरास । तद्देवा न जिहीडिरे
महद्वै नोऽदुर्ये नो यज्ञसम्मितमदुरिति ॥ ५ ॥ ते प्राञ्चं विष्णुं
निपाद्य । छन्दोभिरभितः पर्यगृह्णन्गायत्रेण त्वा छन्दसा
परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा छन्दसा परिगृह्णामीति
पश्चाज्जागतेन त्वा छन्दसा परिगृह्णामीत्युत्तरतः ॥ ६ ॥ तं
छन्दोभिरभितः परिगृह्य । अग्निं पुरस्तात्समाधाय तेनार्चन्तः
श्राम्यन्तश्चेरुस्तेनेमाꣳ सर्वां पृथिवीꣳ समविन्दन्त तद्यदेने-
नेमाꣳ सर्वाꣳ समविन्दन्त तस्माद्वेदिर्नाम तस्मादाहुर्यावती
वेदिस्तावती पृथिवीत्येतया हीमाꣳ सर्वाꣳ समविन्दन्तैवꣳ
ह वाऽइमाꣳ सर्वाꣳ सपत्नानाꣳ संवृङ्क्ते निर्भजत्यस्यै
सपत्नान्यऽएवमेतद्वेद ॥ ७ ॥ सोऽयं विष्णुर्ग्लानः । छन्दो-
भिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास स तत एवौ-
षधीनां मूलान्युपमुम्लोच ॥ ८ ॥ ते ह देवाऽऊचुः । क्व न
विष्णुरभूत्क्व नु यज्ञोऽभूदिति ते होचुश्छन्दोभिरभितः परि-
गृहीतोऽग्निः पुरस्तान्नापक्रमणमस्त्यत्रैवान्विच्छतेति तं खनन्त-
ऽइवान्वीषुस्तं त्र्यङ्गुलेऽन्वविन्दंस्तस्मात्त्र्यङ्गुला वेदिः स्यात्तदु
हापि पाञ्चिस्त्र्यङ्गुलामेव सौम्यस्याध्वरस्य वेदिं चक्रे ॥ ९ ॥
तदु तथा न कुर्यात् । ओषधीनां वै स मूलान्युपाम्लोचत्तस्मा-
दोषधीनामेव मूलान्युच्छेत्तवै ब्रूयाद्यन्वेवात्र विष्णुमन्वविन्दंस्त-
स्माद्वेदिर्नाम ॥ १० ॥

NO. 41  I. 4, 5, 8-13

# VĀK-MANA-SAṀVĀDA

अथातो मनसश्चैव वाचश्च । अहं भद्रऽउदितं मनश्च ह वै वाक्चाहं भद्रऽऊदाते ॥ ८ ॥ तद्ध मन ऽउवाच । अहमेव त्वच्छ्रेयोऽस्मि न वै मया त्वं किंच नानभिगतं वदसि सा यन्मम त्वं कृतानुकरानुवर्त्मास्यहमेव त्वच्छ्रेयोऽस्मीति ॥ ९ ॥ अथ ह वागुवाच । अहमेव त्वच्छ्रेयस्यस्मि । यद्वै त्वं वेत्थाहं तद्विज्ञापयाम्यहं सञ्ज्ञपयामीति ॥ १० ॥ ते प्रजापतिं प्रति प्रश्नमेयतुः । स प्रजापतिर्मनसऽएवानूवाच मनऽएव त्वच्छ्रेयो मनसो वै त्वं कृतानुकरानुवर्त्मासि श्रेयसो वै पापीयान्कृतानुकरोऽनुवर्त्मा भवतीति ॥ ११ ॥ सा ह वाक् परोक्ता विसिष्मिये । तस्यै गर्भः पपात सा ह वाक्प्रजापतिमुवाचाहव्यवाडेवाहं तुभ्यं भूयासं यां मा परावोच ऽइति तस्माद्यत्किंच प्राजापत्यं यज्ञे क्रियत ऽउपांश्वेव तत्क्रियतेऽहव्यवाड्ढि वाक्प्रजापतयऽआसीत् ॥१२॥ तदेतद्देवाः रेतश्चर्मन्वा यस्मिन्वा बभ्रुस्तद्ध स्म पृच्छन्त्यत्रैवत्या३दिति ततोऽत्रिः सम्बभूव तस्मादप्यात्रेय्या योषितैनस्व्येतस्यै हि योषायै वाचो देवतायाऽ एते सम्भूताः ॥ १३ ॥

---

No. 42 II. 1. 7

# PURUṢA-VIBHŪTI

अथातो विभूतयोऽस्य पुरुषस्य । तस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च ।

यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद ।

प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यन्ते ( ते ) ऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद ।

चक्षुषा सृष्टौ द्यौश्चाऽऽदित्यश्च द्यौर्हास्मै वृष्टिमन्नाद्यं संप्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चाऽऽदित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते दिवश्चाऽऽदित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद ।

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायती३ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मण एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद ।

मनसा सृष्टा आपश्च वरुणश्चाऽऽपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ॥

No. 43 X. 10

## PAÑCA MAHĀYAJÑYA

पञ्च वा एते महायज्ञाः सतति प्रतायन्ते सतति संतिष्ठन्ते । देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः संतिष्ठते यत्पितृभ्यः स्वधा करोत्यप्यपस्तत्पितृयज्ञः संतिष्ठते यद्भूतेभ्यो बलिं हरति तद्भूतयज्ञः संतिष्ठते यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः संतिष्ठते यदृचोऽधीते पयसः कूल्या अस्य पितॄन्स्वधा अभिवहन्ति यद्यजूंषि घृतस्य कूल्या यत्सामानि सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कूल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीर्मेदसः कूल्या अस्य पितॄन्स्वधा अभिवहन्ति यदृचोऽधीते पयआहुतिभिरेव तद्देवांस्तर्पयति यद्यजूंषि घृताहुतिभिर्यत्सामानि सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशंसीर्मेदाहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेनान्नाद्येन च तर्पयन्ति ।

No. 44 II. 4

## ĀTMA-TATTVA-VIVECANA

मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मा-
त्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥
सा होवाच मैत्रेयी यन्नु म इयम्भगोः सर्व्वा पृथिवी वित्तेन पूर्णा
स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोप-
करणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाऽऽशा-
ऽस्ति वित्तेनेति ॥ २ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां
किमहं तेन कुर्य्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ३ ॥
स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस
एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्या-
सस्वेति ॥ ४ ॥ स होवाच न वा अरे पत्युः कामाय पतिः
प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति; न वा अरे
जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया
प्रिया भवति; न वा अरे सर्व्वस्य कामाय सर्व्वं प्रियं भवत्यात्मनस्तु
कामाय सर्व्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो
मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन
मत्या विज्ञानेनेदꣳ सर्व्वं विदितम् ॥ ५ ॥ भूतानि तं परादुर्यो-
ऽन्यत्रात्मनो भूतानि वेद; सर्व्वं तं परादाद्योऽन्यत्राऽऽत्मनः
सर्व्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ
सर्व्वं यदयमात्मा ॥ ६ ॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याँ-

श्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य
वा शब्दो गृहीतः ॥ ७ ॥ स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा
विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो
यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः
श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि
सर्व्वाणि निश्वसितानि ॥ १० ॥ स यथा सर्व्वासामपाꣳ समुद्र
एकायनमेवꣳसर्व्वेषाꣳसङ्कल्पानां मन एकायनमेवꣳसर्व्वासां
विद्यानाꣳहृदयमेकायनमेवꣳसर्व्वेषां वेदानां वागेकायनम् ॥११॥
स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नाहा-
स्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं
महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय
तान्येवाऽनुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच
याज्ञवल्क्यः ॥१२॥ सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न
प्रेत्य संज्ञाऽस्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं
ब्रवीम्यलं वा अर इदं विज्ञानाय ॥१३॥ यत्र हि द्वैतमिव
भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति यत्र वा अस्य
सर्व्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येद्येनेदꣳसर्वं विजा-
नाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥१४॥

No. 45 III, 7-21

## PURUṢA SVARŪPA

ततः परं ब्रह्म परं बृहन्तं
यथा निकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं
ईशं तं ज्ञात्वाऽमृता भवन्ति ॥ ७ ॥

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥

यस्मात्परं नापरमस्ति किंचित्
यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येक-
स्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥

ततो यदुत्तरतरं
तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भव-
न्त्यथेतरे दुःखमेवापि यन्ति ॥१०॥

सर्व्वाननशिरोग्रीवः
सर्वभूतगुहाशयः ।
सर्व्वव्यापी स भगवान्
तस्मात् सर्वगतः शिवः ॥११॥

महान् प्रभुर्वै पुरुषः
सत्त्वस्यैष प्रवर्त्तकः ।
सुनिर्मलामिमां प्राप्ति-
मीशानो ज्योतिरव्ययः ॥१२॥

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
सदा जनानां हृदये सन्निविष्टः ।
हृदा मनीषा मनसाभिक्लृप्तो
य एतद्विदुरमृतास्ते भवन्ति ॥१३॥

सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा-
त्यतिष्ठद्दशाङ्गुलम् ॥१४॥

पुरुष एवेदꣳसर्वं
यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो
यदन्नेनातिरोहति ॥१५॥

सर्वतःपाणिपादं तत्
सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके
सर्वमावृत्य तिष्ठति ॥१६॥

सर्व्वेन्द्रियगुणाभासं
सर्व्वेन्द्रियविवर्जितम् ।
सर्व्वस्य प्रभुमीशानं
सर्व्वस्य शरणं बृहत् ॥१७॥

नवद्वारे पुरे देही
हꣳसो लेलायते बहिः ।
वशी सर्वस्य लोकस्य
स्थावरस्य चरस्य च ॥१८॥

अपाणिपादो जवनो ग्रहीता
पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता
तमाहुरग्र्यं पुरुषं महान्तम् ॥१९॥

अणोरणीयान् महतो महीया-
नात्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुं पश्यति वीतशोको
धातुः प्रसादान्महिमानमीशम् ॥२०॥

वेदाहमेतमजरं पुराणं
सर्वात्मानं सर्वगतं विभुत्वात् ।
जन्मनिरोधं प्रवदन्ति यस्य
ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥२१॥



No. 46 II. 1

## ŚABDA NIRVACANA SIDDHĀNTA

अथ निर्वचनम् । तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेन अन्वितौ स्याताम्, तथा तानि निर्ब्रूयात् । अथ अनन्विते अर्थे, अप्रादेशिके विकारे अर्थनित्यः परीक्षेत केनचित् वृत्तिसामान्येन । अविद्यमाने सामान्येऽपि अक्षरवर्णसामान्यात् निर्ब्रूयात् । न तु एव न निर्ब्रूयात् । न संस्कारमाद्रियेत । विशयवत्यो हि वृत्तयो भवन्ति । यथार्थं विभक्तीः संनमयेत् ।

प्रत्तम् अवत्तम् इति धात्वादी एव शिष्येते । अथापि अस्तेः निर्वृत्तिस्थानेषु आदिलोपो भवति—स्तः सन्तीति । अथापि अन्तलोपो भवति—गत्वा गतमिति । अथापि उपधालोपो भवति—जग्मतुः, जग्मुः इति । अथापि उपधाविकारो भवति—राजा, दण्डी इति । अथापि वर्णलोपो भवति—'तत्त्वा यामि' ( ऋ० सं० १।२४।११ ) इति । अथापि द्विवर्णलोपः—तृचः इति । अथापि आदिविपर्ययो भवति—ज्योतिः, घनः यात्यः

इति। अथापि आद्यन्तविपर्ययो भवति—स्तोकाः, रज्जुः, सिकताः, तर्कुः इति। अथापि अन्तव्यापत्तिः भवति। ओघः, मेघः, नाघः, गाधः, वधूः, मधु इति। अथापि वर्णोपजनः—आस्थत्, द्वारः, भरुजा इति। तद् यत्र स्वरात् अनन्तरान्तस्थान्तर्धातुः भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति। तत्र सिद्धायामनुपपद्यमानायाम् इतरया उपपिपादयिषेत्। तत्रापि एके अल्पनिष्पत्तयः भवन्ति। तद् यथा एतत्—ऊतिः, मृदुः, पृथुः, पृषतः, कुणारुम् इति।

अथापि भाषिकेभ्यः धातुभ्यः नैगमाः कृतः भाष्यन्ते—दमूनाः क्षेत्रसाधाः इति। अथापि नैगमेभ्यः भाषिकाः—उष्णं घृतमिति। अथापि प्रकृतयः एव एकेषु भाष्यन्ते, विकृतयः एकेषु—शवति गतिकर्मा कम्बोजेष्वेव भाष्यते। कम्बोजाः कम्बलभोजाः। कमनीयभोजाः वा। कम्बलः कमनीयो भवति। विकारमस्य आर्येषु भाषन्ते शव इति। दातिः लवनार्थे प्राच्येषु। दात्रम् उदीच्येषु। एवं एकपदानि निर्ब्रूयात्।



No. 47 VII. 2

# DEVATĀ-ĀKĀRA-CINTANA

तिस्रः एव देवताः इति नैरुक्ताः । अग्निः पृथिवीस्थानः वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थानः तासां माहाभाग्यात् एकैकस्याः अपि बहूनि नामधेयानि भवन्ति । अपि वा, कर्मपृथक्त्वात् । यथा होता, अध्वर्युः, ब्रह्मा, उद्गाता, इति, अपि एकस्य सतः । अपि वा पृथगेव स्युः पृथक् हि स्तुतयः भवन्ति । तथा अभिधानानि ।

यथो एतत्—'कर्मपृथक्त्वात्' इति, बहवोऽपि विभज्य कर्माणि कुर्युः । तत्र संस्थानैकत्वं संभोगैकत्वं च उपेक्षितव्यम् । यथा, पृथिव्यां मनुष्याः, पशवः, देवाः इति स्थानैकत्वं संभोगैकत्वं च दृश्यते । यथा पृथिव्याः पर्जन्येन च, वाय्वादित्याभ्यां च संभोगः । अग्निना च इतरस्य लोकस्य । तत्र एतत् नरराष्ट्रमिव ।

अथ आकारचिन्तनं देवतानाम् । पुरुषविधाः स्युः इत्येकम् । चेतनावद्वत् हि स्तुतयो भवन्ति, तथा अभिधानानि । अथापि पौरुषविधिकैः अङ्गैः संस्तूयन्ते—'ऋष्वा त इन्द्र स्थविरस्य बाहू' ( ऋ० सं० ६।४७।८ ) । 'यत्संगृभ्णा मघवन् काशिरित्ते' ( ऋ० सं० ३।३०।५ ) । अथापि पौरुषविधिकैः द्रव्यसंयोगैः—'आ द्वाभ्यां हरिभ्यामिन्द्र याहि' ( ऋ०सं० २।१८।४ ) ।

'कल्याणीर्जाया सुरणं गृहे ते' ( ऋ० सं० ३।५३।६ )। अथापि पौरुषविधिकैः कर्मभिः—'अद्धीन्द्र पिब च प्रस्थितस्य' (ऋ० सं० १०।११६।७)। 'आश्रुत्कर्ण श्रुधी हवम्' (१।१०।९)।

अपुरुषविधाः स्युः इत्यपरम्। अपि तु यद् दृश्यते अपुरुषविधं तत्। यथा अग्निः, वायुः, आदित्यः, पृथिवी, चन्द्रमाः इति।

यथो एतत्। 'चेतनावद्वत् हि स्तुतयो भवन्ति' इति। अचेतनानि अपि एवं स्तूयन्ते। यथा अक्षप्रभृतीनि ओषधि-पर्यन्तानि ( नि० ५।३।४-२२ )। यथो एतत्—'पौरुषविधिकैः अङ्गैः संस्तूयन्ते' इति। अचेतनेष्वपि एतत् भवति—'अभि-क्रन्दन्ति हरितेभिरासभिः' ( ऋ० सं० १०।९४।२ ) इति ग्राव-स्तुतिः। यथो एतत्—'पौरुषविधिकैः द्रव्यसंयोगैः' इति। एत-दपि तादृशमेव—'सुखं रथं युयुजे सिन्धुरश्विनम्' ( ऋ० सं० ( १०।७५।९ ) इति नदीस्तुतिः। यथो एतत्—'पौरुषविधिकैः कर्मभिः' इति। एतदपि तादृशमेव—'होतुश्चित्पूर्वे हविरद्यमाशत' ( ऋ० सं० १०।९४।२ ) इति ग्रावस्तुतिः एव।

अपि वा उभयविधाः स्युः। अपि वा अपुरुषविधानाम् एव सतां कर्मात्मानः एते स्युः। यथा यज्ञो यजमानस्य। एष च आख्यानसमयः॥

No. 48 III. 17-24

# DADHYAÑ AND MADHU-VIDYĀ

यः सहस्रतमो रश्मी
रवेश्चन्द्रमुपाश्रितः ।
सोऽपि त्वष्टारमेवाग्निं
परं चेह च यन्मधु ॥१७॥

प्रादाद्ब्रह्मापि सुप्रीतः
सुताय तदथर्वणः ।
स चाभवदृषिस्तेन
ब्रह्मणा दीप्तिमत्तरः ॥१८॥

तमृषिं निषिषेधेन्द्रो
मैवं वोचः कस्यचिन्मधु ।
न हि प्रोक्ते मधुन्यस्मि-
ञ्जीवन्तं त्वोत्सृजाम्यहम् ॥१९॥

तमृषिं त्वश्विनौ देवौ
विविक्ते मध्वयाचताम् ।
स च ताभ्यां तदाचष्टे
यदुवाच शचीपतिः ॥२०॥

तमब्रूतां तु नासत्या-
वाश्व्येन शिरसा भवान् ।
मध्वाशु ग्राहयत्वावां
मेन्द्रस्त्वा वधीत्ततः ॥२१॥

आश्व्येन शिरसा तौ तु
दध्यङ्ङाह यदश्विनौ ।
तदस्येन्द्रोऽहरत्स्वं तन्-
न्यधत्तामस्य यच्छिरः ॥२२॥

दधीचश्च शिरश्चाश्व्यं
कृत्तं वज्रेण वज्रिणा ।
पपात सरसो मध्ये
पर्वते शर्यणावति ॥२३॥

तदश्वस्तु समुत्थाय
भूतेभ्यो विविधान्वरान् ।
प्रादाय युगपर्यन्तं
तास्वेवाप्सु निमज्जति ॥२४॥

No. 49 VII. 147–52

## PURŪRAVĀ-URVAŚI-VṚTTA

पुरूरवसि राजर्षा-
वप्सरास्तूर्वशी पुरा ।
न्यवसत्संविदं कृत्वा
तस्मिन्धर्मं चचार च ॥१४७॥

तया तस्य च संवासम्
अबुध्यन् पाकशासनः ।
पैतामहं चानुरागम्
इन्द्रवज्रापि तस्य तु ॥१४८॥

स तयोस्तु वियोगार्थं
पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिं भिन्द्धि तयोर्वज्र
मम चेदिच्छसि प्रियम् ॥१४९॥

तथेत्युक्त्वा तयोः प्रीतिं
वज्रोऽभिनत्स्वमायया ।
ततस्तया विहीनस्तु
चचारोन्मत्तवन्नृपः ॥१५०॥

चरन्सरसि सोऽपश्यद्
अभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः
पञ्चभिः पार्थिवो वृताम् ॥१५१॥

तामाह पुनरेहीति
दुःखार्ता त्वब्रवीन्नृपम् ।
आप्राप्याहं त्वयायेह
स्वर्गे प्राप्स्यसि मां पुनः ॥१५२॥

---

No. 50 I

## ŚABDĀNUŚĀSANA PRAYOJANA

कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? रक्षोहागमलघ्वसन्देहाः प्रयोजनम् । रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति ।

ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ।

आगमः खल्वपि—'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो

वेदोऽध्येयो ज्ञेयश्च' इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।

लघ्वर्थं चाध्येयं व्याकरणम्—'ब्राह्मणेनावश्यं शब्दा ज्ञेयाः' इति। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्।

असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति तस्यां सन्देहः स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सा स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति॥

---

'चित' इत्यन्तोदात्तत्वम् । अमृतानाम् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नञो जरमरमित्रमृता' इत्युत्तरपदाद्युदात्तत्वम् । मनामहे । 'मन ज्ञाने' । व्यत्ययेन शप् । पादादित्वादनिघात । मह्ना । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । दात् । 'गातिस्था०' (पा० सू० २ ४ ७७) इति सिचो लुक् । 'बहुल छन्दस्यमाङ्योगेऽपि' इति अडागमाभाव । दृशेयम् । 'दृशिर् प्रेक्षणे' । आशीर्लिङि मिप अम् । 'दृशेरग्वक्तव्य' (पा० म० ३ १ ८६ २) इति अङ्प्रत्यय शपोऽपवाद । ङित्वात् लघूपधगुणाभाव । 'लिङ्याशिष्यङ्' (पा० सू० ३ १ ८६) इति अङि हि सति 'ऋदृशोऽङि गुण' (पा० सू० ७ ४ १६) इति गुण स्यात् । यासुट् । सलोप । 'अतो येय' । 'आद्गुण' । यासुट स्वरेण एकार उदात्त । मातर च इत्यत्र चशब्दात् दृशेयम् इति अनुपज्यते । अत तदपेक्षयैषा तिङ्विभक्ति प्रथमा इति 'चवायोगे प्रथमा' इति न निहन्यते ।

शब्दा०—कस्य=किसका, नूनम्=अब, कतमस्य=किसका, अमृतानाम्=देवताओ में, मनामहे=पुकारें, चारु=सुन्दर देवस्य=देव का, नाम=नाम, कः=कौन, नः=हमको, मह्यै=महान्, अदितये=अदिति को, पुनः=फिर, दात्=देगा, पितरम्=पिता को, च=और, दृशेयम्=देखूं, मातरं=माता को, च=और ।

हि० अ०—किसका, देवताओ में किस देव का सुन्दर नाम, अब हम पुकारें ? कौन हमें पुन श्रेष्ठ अदिति को सौंपेगा ? (जिससे) मैं (अपने) पिता तथा (अपनी) माता को देखूं ।

*Trans* —Of whom, the auspicious name of which God among the immortals, now we should invoke ? Who will restore us to the great Aditi, that I may see (my) father and (my) mother

*Notes*—कतमस्य—From किम् by adding the suffix डतमच् implying question regarding class The suffix being चित् the last syllable of कतम is accented अमृतानाम्—The first syllable of मृत is accented, when it comes after the negative particle 'अ' in a Bahuvrihi compd. (नञो जरमरमित्रमृता—Pān VI 2 116) मनामहे—$\sqrt{}$*man* to think, mid pres 1st, plu, accented because beginning of the pāda Sāyana explains मनामहे by उच्चारयाम ; Wilson

takes it to mean 'shall invoke', and Griffith 'may bethink' चारु—Yāska derives it from $\sqrt{ruc}$ to shine, this change of the place of letter is called metathesis (चारु रुचे. विपरीतस्य Nir XI 5). नः—The optional forms of युष्मद् and अस्मद् (viz मे, मा, नौ, नः, त्वा, ते, वाम्, वः) are regularly unaccented (अनुदात्त सर्वमपादादौ—Pān VIII 1 18) अदितये—Yāska takes Aditi to mean 'undivided' (अदिति अदीना—Nir IV 22) In the Nighantu (III 30 21) it is enumerated in the list of the names of Dyāvāprthivī According to Sāyana अदिति means 'earth' Max Müller takes it to mean 'infinite' J Muir understands it to mean 'nature' Roth explains अदिति as 'freedom' or 'security' Benfey understands it as 'sinlessness' दात्—$\sqrt{da}$ to give, root aorist, subju 3rd sing, unaccented because it is not at the beginning of the pāda (तिङ्ङतिङः—Pān VIII 1 28) दृशेयम्—$\sqrt{drs}$ to see, a-aorist, opt first sing, accented because of the particle च In the fourth foot of the verse one दृशेयम् is understood after मातरं च, hence, दृशेयम् after पितरं च, being first of the series and connected with च, is not unaccented The general rule is when more than one verb is used with one agent, and each of them is connected with च or वा, the first verb of the series is not unaccented (चवायोगे प्रथमा—Pān VIII 1 49)

अग्नेः । वयम् । प्रथमस्य । अमृतानाम् । मनामहे । चारु । देवस्य । नाम ॥ सः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥२॥

सा० भा०—इत्य प्रथमया ऋचा विचिकित्सां कृत्वा प्रजापते सकाशात् .. देवम अग्नि निश्चित्य अनया तुष्टाव । तथा च श्रूयते—'स प्रजापति-

प्रथममण्डलस्य षष्ठे अनुवाके सप्त सूक्तानि । तत्र 'कस्य नूनम्' इति पञ्चदशर्चं प्रथमं सूक्तम् । अजीगर्तपुत्रस्य शुनःशेपस्य आर्षं त्रैष्टुभम् । 'अभित्वा देव' इति तृचो गायत्रः । आद्याया अनिरुक्तत्वात् प्रजापतिर्देवता । 'अग्नेर्वयम्' इत्यस्य अग्निः । 'अभि त्वा देव' इत्यस्य तृचस्य सविता । 'भगभक्तस्य' इत्येषा भगदेवताका वा । शेषा वारुण्यः । तथा च अनुक्रान्तं —'कस्य पञ्चोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमाद्या काय्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यान्त्या भाग्यौ वा' इति । राजसूये अभिषेचनीयेऽहनि मरुत्वतीये परिसमाप्ते सति एतदादिकं सूक्तसप्तकम् अभिषिक्तस्य पुत्रादिभिः परिवृतस्य राज्ञः पुरस्तात् होत्राख्यातव्यम् । तथा च सूत्रेऽभिहितम्—'सस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य हिरण्यकशिपावासीनोऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत' (आश्व० श्रौ० ९ ३) इति । ब्राह्मणं च भवति-सत्वेतत्परऋक्शतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति (ऐ० ब्रा० ७ १८) इति ॥

कस्य॑ । नू॒नम् । क॒त॒मस्य॑ । अ॒मृता॑नाम् । मना॑महे । चारु॑ । दे॒वस्य॑ । नाम॑ । कः । नः॒ । म॒ह्यै । अदि॑तये । पुनः॑ । दा॒त् । पि॒तर॑म् । च॒ । दृ॒शेय॑म् । मा॒तर॑म् । च॒ ॥१॥

सा० भा०—'कस्य' इत्यनयर्चा शुनःशेपो यूपे बद्धः कारिशोकः कं देवम् उपधावानि इति विचिकित्सति । तथा च आम्नायते— 'हन्ताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार (ऐ० ब्रा० ७ १६) इति । वयं शुनःशेपनामकाः अमृतानां देवतानां मध्ये कतमस्य किंजातीयस्य कस्य देवस्य चारु शोभनं नाम मनामहे उच्चारयाम । कः देवो मा मुमूर्षुं पुनः अपि मह्यै महत्यै अदितये पृथिव्यै दात् दद्यात् । तेन दानेन अहममृतः सन् पितरं मातरं च दृशेयं पश्येयम् । 'को वै नाम प्रजापतिः' (ऐ० ब्रा० ३ २१) इति श्रुतेः कस्य इति शब्दसामान्यात् अनया प्रजापतिरेव उपसृत इति गम्यते । कतमस्य । किंशब्दात् 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा० सू० ५ ३ ९३) ।

रुवाचाग्निर्वै देवाना नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा' (ऐ० ब्रा० ७ १६) इति। पूर्ववत् योजना। दात् ददातु दृशेय पश्यानि इत्येवम् आशी परत्वेन पदद्वय योज्यम्।

प्रथमे छन्दोमे वैश्वदेवशस्त्रे 'अभि त्वा देव सवित, इति सावित्रस्तृच' सूक्तस्थानीय.। 'अथ च्छन्दोमा' इति खण्डे 'अभि त्वा देव सवित प्रेता यज्ञस्य शभुवा' (आश्व० श्रौ० ८.९) इति सूत्रितम्। 'अभि त्वा' इत्येषा अग्निमन्थनेऽपि विनियुक्ता। 'प्रातर्वैश्वदेव्याम्' इति खण्डे 'अभि त्वा देव सवितर्मही द्यौ पृथिवी च न.' (आश्व० श्रौ० २.१६) इति सूत्रितम्। श्रूयते च —'अभि त्वा देव सवितरिति सावित्रीमन्वाह' (ऐ० ब्रा० १ १६) इति। तथा प्रवर्ग्येऽपि एषैव विनियुक्ता। 'अथोत्तरम्, इति खण्डे 'अभि त्वा देव सवित समी वत्स न मातृभि' (आश्व० श्रौ० ४ ७) इति सूत्रितम्। तथा प्रायस्तोत्रेऽपि। 'एतस्मिन् काले प्रावस्तुत्' इति खण्डे 'मध्यमस्वरेणैव सवतमभि त्वा देव सवित' (आश्व० श्रौ० ५ १६) इति सूत्रितम्।

शब्दा०— अग्ने:=अग्नि का, वयम्=हम लोग, प्रथमस्य=प्रथम का, अमृतानाम्=देवताओ में, मनामहे=पुकारें, चारु=सुन्दर, नाम=नाम, सः=वह, नः=हम लोगो को, मह्यै=महान्, अदितये=अदिति को, पुनः=फिर, दात्=सौंपेगा, पितरम्=पिता को, च=और, दृशेयम्=देखू, मातरम्=माता को, च=और।

हि० अ०—देवताओ में प्रथम, अग्नि देव का शुभ नाम हम लोग पुकारें, वह हम लोगो को पुन अदिति को सौंपेगा; (जिससे) मैं (अपने) पिता तथा (अपनी) माता को देखू।

*Trans.*—Let us invoke the auspicious name of Agni, the first God among the immortals He will restore us again to the great Aditi, that I may see (my) father and (my) mother

अ॒भि । त्वा॒ । दे॒व॒ । स॒वि॒तः॒ । ईशा॑नम् । वार्या॑णाम् । सदा॑ । अ॒वन् । भा॒गम् । ई॒म॒हे॒ ॥३॥

सा० भा०—अथ अग्निना प्रेरितः सन् सवितारम् 'अभि त्वा' इत्यनेन तृचेन प्रार्थयते। तथैव श्रूयते—तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन (ऐ० ब्रा० ७ १६) इति। हे सदावन् सदा सर्वदा रक्षक हे सवितः देव वार्याणां वरणीयानां धनानाम् ईशानं स्वामिनं त्वा प्रति भागं भजनीयं धनम् अभि सर्वतः ईमहे याचामहे॥ ईशानम्। ईश ऐश्वर्ये। लटः शानच्। 'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः। वार्याणाम्। वृङ् संभक्तौ। 'ऋहलोर्ण्यत्'। 'ईडवन्द' इत्यादिनाद्युदात्तत्वम्। अवन्। आमन्त्रितनिघातः। भागम्। 'कर्षात्वत' इति घञोऽन्त उदात्तः॥

शब्दा०—अभि त्वा=तुम्हारे पास, देव=ओ देव, सवितः=ओ सवितृ ईशानम्=मालिक, वार्याणाम्=अभिलषित धनों के, सदा=सर्वदा अवन्=ओ रक्षा करने वाले भागम्=हिस्से के लिये ईमहे=आते हैं।

हि० अ०—ओ सदा रक्षा करने वाले सविता देवता, सम्पूर्ण अभिलषित धनों के मालिक तुम्हारे पास (अपने) हिस्से के लिये (हम) आते हैं।

*Trans*—O everprotecting God savitar, we come to thee, the lord of riches, for (our) share

*Notes*—अभि—A particle used in the sense of 'towards' (अभीत्याभिमुख्यम्—Nir 1 3) देव सवितः—Both the words are vocatives and do not come at the beginning of the pāda, hence, unaccented (आमन्त्रितस्य च—Pān VIII 1 19) ईशानम्—√īs to be master perf part acc sing वार्याणाम् From √vr to choose, the words derived from ईड, वन्द वृ, शंस् and दुह्, and ending in ण्यत, accent the first syllable (ईडवन्दवृशंसदुहां ण्यतः—Pān VI 1 214) अवन् From √av to protect, vocative not coming at the beginning of the pāda, is unaccented भागम्—Words ending in घञ् accent the last syllable (कर्षात्वतो घञोऽन्त उदात्तः—Pān VI 1 159) ईमहे—√i to go, mid pres 1st plu, verbs of the principal clause, not coming in the beginning of the pāda, are unaccented (तिङ्ङतिङः—Pān VIII 1.28).

यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः । अद्वेषः । हस्तयोः । दधे ॥४॥

सा० भा०—हे सवितः यः भगः भजनीयो धनविशेषः ते तव हस्तयोर्दधे धृतोऽभूत् तं धनविशेषम् ईमहे इति पूर्वत्रान्वयः । चिच्छब्दः पूजार्थे हिशब्दः प्रसिद्धौ । धनस्य पूज्यत्वं सर्वत्र प्रसिद्धम् । तामेव पूज्यत्वप्रसिद्धिं विशदयति । इत्था शशमानः अनेन प्रकारेण शस्यमानः स्तूयमानः । धनस्तुतिप्रकारं च सर्वे जानन्ति । ननु स्वकीये धने वैरिभिः अपहृते सति वैरिगृहीतं धनं सर्वो लोको निन्दति द्वेष्टि च । अतो धनस्तुतिः न नियता इत्याशङ्क्याह । निदः पुरा अद्वेषः निन्दायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः । तस्मात् स्वकीयत्वाभिप्रायेण स्तूयमानत्वमुक्तमित्यर्थः ॥ इत्था । प्रकारवचने 'इदमस्थमुः' (पा० सू० ५.३ २४) । 'सुपां सुलुक्' इति व्यत्ययेन विभक्तेः आदेशः । टिलोपे उदात्तनिवृत्तिस्वरेण आकार उदात्तः । शशमानः । 'शश प्लुतगतौ' । इह तु स्तुत्यर्थः । 'ताच्छील्यवयोवचन०' (पा० सू० ३ २.१२९) इति ताच्छीलिकश्चानश् । कर्तरि शप् । 'चितः' इत्यन्तोदात्तत्वम् । निदः । 'णिदि कुत्सायाम्' । संपदादिलक्षण. क्विप् । 'सावेकाचः' इति पञ्चम्या उदात्तत्वम् । अद्वेषः । न विद्यते द्वेषोऽस्य इति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । दधे । धर्मणि लिट् । तस्य आर्धधातुकत्वेन 'अभ्यस्तानामादिः' इत्याद्युदात्तो न भवति । प्रत्ययस्वर एव शिष्यते । यद्वृत्तयोगात् निघाताभावः ।

शब्दा०—यः=जो, चित्=भी, हि=प्रसिद्ध अर्थ का वाचक निपात, ते=तुम्हारे, इत्था=इस प्रकार, भगः=धन, शशमानः=प्रशंसनीय, पुरा निदः=अनिन्दित, अद्वेषः=द्वेष रहित, हस्तयोः=हाथों में, दधे=रखा हुआ है ।

हि०अ०—(हे सविता), प्रशंसनीय, अनिन्दित, द्वेषरहित जो कुछ भी धन तुम्हारे हाथों में इस प्रकार रखा हुआ है (उसके लिये हम तुम्हारे पास आते हैं ।

*Trans*—(O Savitar), whatever wealth, adorable, free from reproach, and free from enemy, is thus retained in thy hands (we come to thee for that).

*Notes*—चित्—An enclitic particle very frequently used

to emphasize the preceding word. According to Yāska it is used in the sense of reverence, comparison and utter contempt. It is always unaccented (चिदिति निपातोऽनुदात्त —Nir. V. 5). हि—An emphatic particle employed throughout as a subordinating conjunction. It regularly throws the accent on the verb. इत्था—Adverb of manner, formed from the pronominal stem 'इ' with the suffix 'था'. The meaning it expresses is 'thus', 'so' भग —Wealth, fortune, derived from √*bhaj* (भगो भजते —Nir I. 7), शशमानः—√*śaś* to praise, pres part अद्वेषः-One who has no enemy, Bahuvrīhi compd. accented on the final syllable of the second member (नञ्सुभ्याम्—Pān VI 2. 172). दधे—√*dhā* to put, mid perf 3rd sing, accented because the particle हि is there in the same clause (हि च—Pān VIII. 1. 34).

भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा ।
मूर्धानम् । रायः । आऽरभे ॥५॥

सा० भा०—हे सवित ते त्वदीया वय शुन शेपनामान भगभक्तस्य धनेन सपुक्तस्य तवावसा रक्षणेन उदशेम उत्कर्षेण व्याप्नुम । किं कर्तुम् । रायः धनस्य मूर्धानम् उत्कर्षम् आरभे प्रारब्धुम् । धनित्वप्रसिद्ध्या व्याप्ता भूयामेत्यर्थ ॥ भगशब्दो वृषादित्वादाद्युदात्त । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अशेम । 'अशू व्याप्तौ' । लिङि व्यत्ययेन परस्मैपदम् । शप् । राय । 'ऊडिदम्' इति षष्ठ्या उदात्तत्वम् । आरभे । 'कृत्यार्थे तवैकेन्' इति तुमर्थे केन्प्रत्यय । नित्स्वरेणाद्युदात्तत्वम् ॥५॥

शब्दा०—भगभक्तस्य=प्रचुर धन से सम्पन्न, ते=तुम्हारे, वयम्=हम लोग, उत् अशेम—प्राप्त करें, तव=तुम्हारी, अवसा=रक्षा से, मूर्धानम्—श्रेष्ठ, रायः=धन के हिस्से को आरभे=पाने के लिये।

हि० अ० तुम्हारे (भक्त) हम लोग, प्रचुर धन से सम्पन्न (जो तुम हो) उस तुम्हारी सहायता से धन के श्रेष्ठ अंश को पाने के लिये आये हैं।

*Trans*—We thy (men) have come to attain the loftiest of wealth with the protection of thee, who art endowed with prosperity.

*Notes*—भगभक्तस्य—Endowed with prosperity or fortune-favoured Sayana construes it with तवावसा and accordingly wilson renders as 'through the protection of thee who art the possessor of wealth' Griffith takes it in apposition of राय and translates as 'the highest of affluence which Bhaga has dealt out to us', Tatpurusa compd in its instrumental form accents the first member, if the second member has क्त ending (तृतीया कर्मणि—Pān -VI 2 48) उत्—A particle and prefix to verbs and nouns implying superiority or separation and disjunction It is not used as a separable adverb or preposition, in those rare cases in which it appears uncompounded with verb the latter has to be supplied from the context अशेम—$\sqrt{ams}$ to attain 'a'—aorist 1rst plu अवसा—With protection, derived from $\sqrt{av}$ to protect आरभे—Dat infinitive in 'ए' from $\sqrt{rabh}$ to grasp, radical infinitives, compounded with preposition, accent the root , the preposition, being unaccented, is separated by avagraha in the Padatext

नुहि । ते । क्षुत्रम् । न । सहः । न । मुन्युम् । वयः । चुन । अमी इति । पुतयन्तः । आपुः । न । इमाः । आपः । अनिऽमिषम् । चरन्तीः । न । ये । वातस्य । प्रऽमिनन्ति । अभ्वम् ॥६॥

सा० भा० —अथ सविता प्रेरितः शुनःशेप एतदादिसूक्तशेषेण उत्तरेण च सूक्तेन वरुणं तुष्टाव । तथा च श्रूयते—'तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता'

(ऐ० ब्रा० ७ १६) इति। हे वरुण पतयन्तः प्रौढे वियत्युत्पतन्त अमी दृश्यमाना वयश्चन श्येनादय पक्षिणोऽपि ते क्षत्रं त्वदीय शरीर बल नहि आपुः नैव प्राप्ता । त्वत्सदृश शरीरबल पक्षिणामपि नास्तीत्यर्थ । तथा सहः त्वदीय पराक्रम तव सामर्थ्यमपि न प्रापु । तथा मन्युं त्वदीय कोपमपि न प्रापु । त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थ । अनिमिषं सर्वदा चरन्तीः प्रवाहरूपेण गच्छन्त्य आपः त्वदीय बल न प्रापु । वातस्य वायो ये गतिविशेषा त्वदीयम् अभ्वं वेग न प्रमिनन्ति न हिंसन्ति । अतिक्रम कर्तुं न शक्ता इत्यर्थ । तेऽपि न प्रापुरिति पूर्वनान्वय ॥ पतयन्त । 'पत गतौ' । चुरादिरदन्त । लट् शतृ । शप । गुणायादेशौ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे णिच स्वर । आपु । आप्लृ व्याप्तौ । लिट्युसि द्विर्भावहलादिशेषौ । 'अत आदे' (पा० सू० ७ ४ ७०) इत्यात्व । अत्र न सहो न मन्युमित्यादिभिरापुरित्यस्य सर्वथा-प्यपेक्षया प्राथम्यात 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । चरन्ती । 'वा छन्दसि' इति पूर्वसवर्णदीर्घ । प्रमिनन्ति । 'मीञ् हिंसायाम् । 'क्र्यादिभ्य श्ना'। श्नाभ्यस्तयोरात' (पा० सू० ६ ४ ११२) इति आकारलोप । 'मीनातेर्निगमे' (पा० सू० ७ ३ ८१) इति ह्रस्वत्वम् । प्रत्ययस्वर' । 'तिङि चोदात्तवति' (पा० सू० ८ १ ७१) इति गतिरनुदात्त । यदवृत्तयोगादनिघात ।

शब्दा०—नहि —नतो, ते=तुम्हारे, क्षत्रम्=आधिपत्य को, न=नहीं, सहः=शक्ति को, न=नहीं, मन्युम्=क्रोध को, वयः=पक्षी, चन=भी, अमी—ये, पतयन्तः=उडने वाले, आपुः=प्राप्त करते है, न=नहीं, इमा =ये, आपः=जल, अनिमिषम्=सदा, चरन्तीः=बहता हुआ न=नहीं, ये=जो, वातस्य=वायु के प्रचण्ड तूफान, प्रमिनन्ति=उलघन करते है, अभ्वम्=विशाल शक्ति का ।

हि० अ०—(ओ वरुण), ये उडने वाले पक्षी भी न तो तुम्हारे आधिपत्य को, न तो शक्ति को, न तो क्रोध को ही प्राप्त करते हैं, न ये सदा बहने वाला जल, न तो वायु के जो प्रचण्ड तूफान हैं वे ही (तुम्हारी) विशाल शक्ति का उलघन करते हैं ।

*Trans* (O Varuna) even these birds flying can attain neither thy sovereignty, nor the prowess nor the wrath nor these waters moving without waiting even for a winkling of eye (i e unceasingly), nor these gales of wind can resist (thy) immense power

*Notes*—क्षत्रम्—Derived from √*kṣi* to possess, क्षत्रम् is especially applied to the power of Varuṇa चन—A particle usually employed after a negative particle and is rendered as 'not even' In a few passages it loses its negative sense and is rendered as 'even' It is placed after the word to which it gives the force It accents the preceding verb in the sentence or pada in which it occurs अमी—Final ई is pragṛhya, hence, इति is added to it in the Padatext पतयन्तः—√*pat* to fly, pres part आपुः—√āp to obtain perf 3rd plu, accented because in the first hemistich, न क्षत्रम्, न सह, न मन्युम् which are syntactically connected with आपु, have no conjunctive च The general rule is that in a hemistich when च, वा, हा, अह एव are silent the verb is not unaccented (चादिलोपे विभाषा—Pan VIII 1 63) अनिमिषम्—Not waiting even for a winking of eye, i e unceasingly, Bahuvrihi compd accents the final syllable of the second member, if the first member is a prohibitive particle 'अ' or सु (नञ्सुभ्याम्—Pān VI 2 172) चरन्ती—√*car* to move pres part वातस्य—The word वातस्य in genitive indicates that the subject of प्रमिनन्ति is understood Sāyana Supplies 'ये गतिविशेषाः,' Wilson 'gales' and Griffith 'wild fury' प्रमिनन्ति—√*mī* to damage, pres 3rd plu, not-unaccented because connected with conjunctive ये (निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्—Pan VIII 1 30) In such subordinate clauses the preposition is generally compounded with the verb and is unaccented (तिङि चोदात्तवति—Pān VIII 1 2) Preposition is separated from the root by avagraha in the Padatext

अबुध्ने । राजा । वरुणः । वनस्य । ऊर्ध्वम् । स्तूपम् । ददते । पूतऽदक्षः ॥ नीचीनाः । स्थुः । उपरि । बुध्नः । एषाम् । अस्मे इति । अन्तः । निऽहिताः । केतवः । स्युरिति स्युः ॥७॥

सा० भा०—पूतदक्षः शुद्धबल वरुणः राजा अबुध्ने मूलरहिते अन्तरिक्षे तिष्ठन् वनस्य वननीयस्य तेजस स्तूपं सघम् ऊर्ध्वम् उपरिदेशे ददते धारयति । नीचीनाः स्थुः । ऊर्ध्वदेशे वर्तमानस्य वरुणस्य रश्मय इत्यध्याहार्यम् । ते ह्यधोमुखास्तिष्ठन्ति । एषां रश्मीनां बुध्नः मूलम् उपरि तिष्ठतीति शेष । तथा सति केतवः प्रज्ञापका प्राणा अस्मे अस्मासु अन्तर्निहिताः स्थापिता स्यु । मरण न भविष्यतीत्यर्थं । अबुध्ने न विद्यते बुध्न मूलमस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । 'स्तूपं शब्दसघातयो'। 'स्त्य सम्प्रसारणमूच्च' इति पप्रत्यय , तत्सनियोगेन यकारस्य सम्प्रसारण परपूर्वत्वे ऊकारादेशश्च । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् । ददते । औणादिक । नीचीना । निपूर्वादञ्चते 'ऋत्विक्०' इत्यादिना क्विन् । 'अनिदिताम्' इति नलोप । न्यच्शब्दात्स्वार्थे 'विभाषाञ्चेरदिक्स्त्रियाम्' (पा०सू० ५ ४ ८) इति ख । 'आयन्०' इत्यादिना तस्य ईनादेश । 'आयनादिषूपदेशिवद्वचन स्वरसिद्ध्यर्थम्' (पा० सू ७ १ २ १) इति वचनात् ईकार उदात्त । 'अच' इति अकारलोपे 'चौ' इति दीर्घत्वम् । स्थु । 'गातिस्था०'(पा०सू०२.४ ७७ इत्यादिना सिचो लुक् । आत' (पा०सू०३ ४ ११०) इति झे जुसादेश । 'उस्यपदान्तात्' (पा०सू० ६ १ ९६) इति पररूपत्वम् । 'बहुलञ्छन्दस्यमाङ्योगेऽपि इति अडागमाभाव । अस्मे । सुपा सुलुक्' इति सप्तम्या शेआदेश । निहिता । 'गतिरनन्तर' इति गते प्रकृतिस्वरत्वम् । अस्तेलिङि 'श्नसोरल्लोप' ।

शब्दा०—अबुध्ने=आधार रहित, राजा=राजा, वरुणः=वरुण देवता वनस्य=प्रकाश के, ऊर्ध्वम्=ऊपर, स्तूपम्=पुञ्ज को, समूह को, ददते=धारण करता है, पूतदक्षः=पवित्र सामर्थ्यवाला, नीचीनाः=नीचे जाने वाली, स्थुः=स्थित रहती हैं, उपरि=ऊपर, बुध्नः=स्रोत, एषाम्=इनका, अस्मे=हमारे, निहिताः स्युः=पड़ी रहें, केतवः=किरणें ।

हि० अ०—पवित्र सामर्थ्य वाला राजा वरुण आधाररहित (अन्तरिक्ष) में (रहता हुआ) प्रकाश के पुञ्ज को ऊपर धारण करता है; इस (प्रकाशपुञ्ज सूर्य) की किरणें नीचे की तरफ जाने वाली हैं, (यद्यपि) उनका स्रोत ऊपर है । (प्राण सचार करने वाली) रश्मियां हमारे अन्दर पड़ी रहें ।

*Trans*—King Varuna of pure Vigour, (residing) in the baseless (region) holds high a heap of light, its rays are directed downwards the base being above May the rays be placed within us

*Notes* —अबुध्ने—Bahuvrihi compd accents the final syllable, if its first member is नञ् or सु (नञ्सुभ्याम्—Pan VI 2 172) Wilson following Sayana connects अबुध्ने with वरुण and render 'abiding in the baseless firmament Griffith construes it with ऊर्ध्वं स्तूपम् According to him Varuna sustains erect the tree s stem in the baseless region स्तूपम्—'Heap' ( Wilson ) 'stem' ( Griffith ) Sayana derives it from √*styai* to pile, the Samprasarana of 'यृ' is 'इ', but this इ has changed into ऊ ददते—√*da* to give pres mid 3rd sing पूतदक्ष —of pure vigour, Bahu vrihi compd accented on the first member (बहुव्रीहौ प्रकृत्या पूर्वपदम्—Pan VI 2 1) नीचीना—From नि+ √*añc* to go downward स्थु— √*stha* to stand, root aorist, injun 3rd plu Generally the injunctive is used with the prohibitive particle मा, but it is also used even without मा (बहुलं छन्दस्यमाङ्योगेऽपि—Pan VI 4 75) एषाम्—All the cases of the pronoun एन are unaccented अस्मे—For अस्मासु, final ए is pragrhya hence इति is added to it in the Padatext निहिता—Past pass part from नि+√*dha* to put Past pass part is always accented on the final syllable but when it is compounded with a preposition the latter is accented (गतिरनन्तरः—Pan VI 2 49) केतवः—Sayana renders it by प्रज्ञापकाः प्राणाः Wilson following Sayana takes it to mean 'the sources of existence, Griffith renders it as 'rays' स्युः—√*as* to be,

pres opt 3rd plu In the Padatext इति is added to it and it is again repeated after इति, for general rule see Appendix—'B' under rules of adding इति in the Padatext (*II, B, (c)*)

उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अनुऽएतवे । ऊं इति ॥ अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥८॥

सा० भा०—वरुणः राजा सूर्याय सूर्यस्य पन्था मार्गम् उरुं विस्तीर्णं चकार । हि शब्द प्रसिद्धौ । उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः । किमर्थमेवं कृतवान् इति तदुच्यते । अन्वेतवा उ अनुक्रमेणोदयास्तमयौ गन्तुमेव । तथा अपदे पादरहिते अन्तरिक्षे पादा प्रतिधातवे पादौ प्रक्षेप्तुम् । अकः मार्गं कृतवान् । पूर्वेण रथस्य गमनं अत्र पादयोरिति विशेषः । यद्वा । अपदे यूपे बद्धेन मया गन्तुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुमुपायं स धर्मविमोचनरूपं करोत्वित्यर्थः । उत अपि च हृदयाविधश्चित् अस्मदीयहृदयस्य व्यधकस्य शत्रोरपि अपवक्ता अपवदिता निराकर्ता भवतु ॥ चकार । लित् स्वरेण आकार उदात्तः । हि च' इति निघातप्रतिषेधः । पन्थाम् । पथिमथ्यृभुक्षामात्' (पा० सू० ७ १ ८५) इति द्वितीयायामपि व्यत्ययेन आत्वम् । पथिन्शब्दस्य पतेस्थ च' (उ० सू० ४ ४५२) इति प्रत्ययान्तत्वेन अन्तोदात्तत्वे प्राप्ते पथिमथोः सर्वनामस्थाने' (पा० सू० ६ १ १९९) इत्याद्युदात्तत्वम् । अन्वेतवे । अनुपूर्वात् एतेः तुमर्थे सेसेन्' इति तवेप्रत्ययः । 'तवै चान्तश्च युगपत्' (पा० सू० ६ २ ५१) इति आद्यन्तयोरुदात्तत्वम् । पादा । सुपां सुलुक्' इति आकारः । प्रतिधातवे । दधातेः तुमर्थे०' इति सूत्रेणैव तवे प्रत्ययः । तादौ च निति०' (पा० सू० ६ २ ५०) इति गतेः प्रकृतिस्वरत्वम् । अकः । करोतेः 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ् । तस्य तिप् । मन्त्रे घस०' (पा० सू० २ ४ ८०) इत्यादिना च्लेर्लुक् । गुणो रपरत्वम् । हल्ङ्याब्भ्यः' (पा० सू० ६ १ ६८) इति तिपो लोपः । अडागमः । हृदयाविध । हृञ् हरणे । वृह्रोः षुग्दुकौ च' (उ० ४ ५४०) इति कयन् । व्यध ताडने । क्विप् । नहिवृति०' (पा० सू० ६ ३ ११६) इत्यादिना पूर्वपदस्य दीर्घत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।

शब्दा०—उरुम् = विस्तृत हि = प्रसिद्धि का वाचक निपात, राजा = राजा, वरुण = वरुण देवता चकार — बनाया है, सूर्याय — सूर्य के लिये, पन्थाम्

=मार्ग, अन्वेतवै=चलने के लिये, उ=निश्चित अर्थ का वाचक निपात, अपदे=आश्रयरहित अन्तरिक्ष में, पादा=पैरों के, प्रतिधातवे=रखने के लिये, अकः=निर्माण किया है, उत=और, अपवक्ता—दूर करने वाला, हृदयाविधः=हृदय को चोट पहुँचाने वाले को, चित्=भी।

हि० अ०—राजा वरुण ने सूय के चलने के लिये विस्तृत मार्ग बनाया है, आश्रयरहित (अन्तरिक्ष) में पैर रखने के लिये (मार्ग का) निर्माण किया है, तथा जो कोई (हमारे) हृदय को चोट पहुँचाने वाला हो उसको (वरुण) दूर करने वाला होवे।

*Trans*—The King Varuna has made the path for sun wide to travel on, (he) has made (the path) to place the foot in footless (region), and may (Varuna) be the repeller of him who torments our heart

*Notes*—उरुम्—From √vr to cover by Samprasārana हि—See notes I 24 4 चकार—√kr to make perf 3rd sing not unaccented because preceded by the emphatic particle हि in the same clause (हि च—Pan VIII I 34) अन्वेतवै—एतवै is a dative infinitive in तवै from √i to go so it has double accent one on the root and other on the final syllable (तवै चान्तश्च युगपत—Pān VI 2 5), but when compounded with preposition, the preposition and the last syllable are accented and the preposition is separated by avagraha in the Padatext (पदार्दीस्तुद्रपुदातानामसहित वदुत्तरान्—Rg Prāt III 25) उ—An enclitic particle always unaccented In the Padatext इति is added to it, but before इति it becomes lengthened and nasalized (उकारश्चेतिकरणेन युक्तो रक्तोऽपृक्तो द्राघित शाकलेन—Rg Prāt I 75) अपदे—Bahuvrihi compd accented on the second member प्रतिधातवे—Dative infinitive in तवे from प्रति+√dhā to put अकः—√kr to make, root-aorist

3rd. sing उत—A conjunctive-particle meaning 'and' It is generally placed at the beginning of the second sentence अपवक्ता—Sāyana supplies भवतु to it and explains by 'अपवादिता निराकर्ता भवतु', Wilson following Sāyana translates as 'be repeller'. Griffith does not take it in imperative sense He renders it with 'warned afar' हृदयाविधः—Tatpurusa compd (first member in accusative), accented on the second member चित्—See notes I 24 4

शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गभीरा ।
सुऽमतिः । ते । अस्तु ॥ बाधस्व । दूरे । निःऽऋतिम् । पराचैः ।
कृतम् । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥९॥

सा० भा०—हे राजन् वरुण ते तव शतं भिषजः व्याधिनिवारकाणि शतसंख्याकान्यौषधानि वैद्या वा सन्ति । ते तव सुमतिः अस्मद्नु ग्रहबुद्धिः उर्वी विस्तीर्णा गभीरा गाम्भीर्योपेता स्थिरा अस्तु । निर्ऋतिम् अस्मदनिष्टकारिणीं निर्ऋतिं पापदेवतां पराचैः पराङ्मुखां कृत्वा दूरे अस्मत्तो व्यवहिते देशे स्थापयित्वा तां बाधस्व । कृतं चित् अस्माभिरनुष्ठितमपि एनः पापम् अस्मत् प्र मुमुग्धि प्रकर्षेण मुक्तं नष्टं कुरु ॥ सुमति । 'तादौ च' इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'मन्क्तिन्' इत्यादिनोत्तरपदान्तोदात्तत्वम् । संहितायां विसर्जनीयसकारस्य 'कुप्वोस्तत्पक्षुश्छन्दस्यपाणस' (पा० सू० ८ ३ १०३) इति षत्वम् । बाधस्व । 'बाधृ विलोडने' । शप पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । निर्ऋतिम । 'तादौ च' इति गते प्रकृतिस्वरत्वम् । मुमुग्धि । 'मुच्लृ मोक्षणे' । 'बहुलं छन्दसि' इति श्लुः । 'हुझल्भ्यो हेर्धिः' (पा० ६ ४ १०१) । तस्य अपित्त्वेन ङित्त्वाद्गुणाभाव । 'चो कुः' (पा० सू० ८ २ ३०) इति कुत्वम् ।

शब्दा० शतम्=सैकड़ों, ते=तुम्हारी, राजन्=ओ राजा, भिषजः=औषधियाँ, सहस्रम्=हजारों, उर्वी=विशाल, गभीरा=गम्भीर, सुमतिः=सुन्दर मति, ते=तुम्हारी, अस्तु=होवे बाधस्व=रोको, दूरे=बहुत दूर, निर्ऋतिम्=पाप को, पराचैः=हमसे अलग करके, कृतम्=किये गये,

चित्=भी, एनः=पापों को, प्र मुमुग्धि=अच्छी प्रकार से नष्ट करो, अस्मत्=हमसे।

हि० अ०—ओ राजन्, सैंकड़ों तथा सहस्रों तुम्हारी ओषधियाँ हैं; तुम्हारी सुन्दर मति (हमारे प्रति) विशाल एवं गम्भीर होवे, पाप देवता को बहुत दूर (हमसे) अलग कर रोको; हमारे द्वारा किये गये पापों को भी हमसे अच्छी प्रकार नष्ट करो।

*Trans*—O King, a hundred and a thousand are thy medicines, wide and deep be thy well disposed mind, remove afar (from us) Nirrti, release from us the sin even we have committed

*Notes*—शतम् and सहस्रम् are used in agreement with plurals They are generally treated as adjectives. According to Yāska सहस्रम् means powerful (सहस्र सहस्वत्) Durgā in his commentary breaks सहस्रम् in to सहस् and रम्, सहस् means strength (बलम्—Nigh II 9 17) and रम् means 'endowed with' (सह इति बलनाम, तेन तद्वत् दुर्बलानामपि सहस्र समुदित बलवदेव भवति सङ्घात् बलीयस्त्वात्—Durgā on Nir III 11) सुमति—Bahuvrihi compd accented on the second member, because the first member is सु अस्तु—√as to be pres impv 3rd sing बाधस्व—√bādh to oppress mid pres impv 2nd sing, beginning of the pāda, hence, not unaccented दूरे—From √dru to flee. Yāska derives it also from √i to go (दूरय वा—Nir III 19) Thus according to this derivation दूर is 'that going to which is difficult' According to Ksira-swāmi it is derived from √dū to torment (दूयते अत्र दूरम्—Amara III 1 69) निर्ऋतिम्—According to Sāyana Nirrti is the deity of sin In the Nighantu (I 1 16) it is enumerated in the list of the names of earth Yaska derives it from नि √ram or नि √r (तत्र निर्ऋतिर्निरमणात्। ऋच्छतेः कृच्छ्रापत्तिरितरा—Nir II 7).

Griffith takes it to mean 'decay' or 'destruction'. कृतम् —$\sqrt{kr}$ to make, past part प्र —A particle mostly connected with a verb which is often to be supplied In the principal clause preposition is generally detached from the verb and is accented मुमुग्धि —$\sqrt{muc}$ to release, perf impv 2nd sing अस्मत्—Abl plu. of अस्मद्

अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुहं । चित् । दिवा । ईयुः ॥ अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥१०॥

सा० भा०—अमी रात्रावस्माभिदृश्यमाना ऋक्षाः सप्त ऋषय । तथा च वाजसनेयिन आमनन्ति—'ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते' इति । यद्वा । ऋक्षा सर्वेऽपि नक्षत्रविशेषा । 'ऋक्षा स्तृभिरिति नक्षत्राणाम्' (नि० ३ २०) इति यास्केनोक्तत्वात् । उच्चा उच्चैं उपरि द्युप्रदेशे निहितास स्थापिता ये सन्ति ते ऋक्षा नक्तं रात्रौ ददृश्रे सर्वैरपि दृश्यन्ते । दिवा अहनि कुह चित् ईयु क्वापि गच्छेयु । न दृश्यन्ते इत्यर्थ । वरुणस्य राज्ञ व्रतानि कर्माणि नक्षत्रदर्शनादिरूपाणि अदब्धानि केनाप्यहिंसितानि । किंच वरुणस्याज्ञयैव चन्द्रमा नक्तं रात्रौ विचाकशत् विशेषेण दीप्यमान एति गच्छति ॥ निहितास । आज्जसेरसुक् । धातादिस्वरेणोत्तरपदान्तोदात्तत्वे (पा० सू० ६ २ १४४) प्राप्ते 'गतिरनन्तर' इति गते प्रकृतिस्वरत्वम् । ददृश्रे । दृशेर्लिटि इरयो रे (पा० सू० ६ ४ ७६) इति रे-आदेश । व्यत्ययेनाद्युदात्तत्वम् । यद्वृत्तयोगादनिघात । कुह । वा ह छन्दसि' (पा० सू० ५ ३ १३) । इति किंशब्दादुत्तरस्य ह्मलो हादेश । कु तिहो' (पा० सू० ७ २ १०४) इति किंशब्दस्य कुआदेश । स्थानिवद्भावात् लित्स्वरेणाद्युदात्तत्वम् । विचाकशत् । काशृदीप्त्यर्थात् यङ्लुगन्तात् शतृप्रत्यय । 'अभ्यस्तानामादि' इत्याद्युदात्तत्वम । समासे कृत्स्वर । यद्वा । काशतेर्वा व्यत्ययेनोपधाह्रस्वत्वम । चन्द्रमा । चन्द्र+मो+ङित् (उ० सू० ४ ६६७) इति असिप्रत्यय । कृदुत्तर पदप्रकृतिस्वरत्वे प्राप्ते दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् ।

शब्दा०—अमी=ये ये=जो, ऋक्षाः=नक्षत्र, निहितासः=रखे गये थे, उच्चा=ऊचे, नक्तम्=रात्रि में, ददृश्रे=दिखाई पडते थे कुह=कहां,

काष्ठा is enumerated in the list of the names of direc-
tion According to Yāska a good many things are
called काष्ठ—'काष्ठा दिशो भवन्ति । काष्ठा उपदिशो भवन्ति । आदित्योऽपि
काष्ठोच्यते । आज्यन्तोऽपि काष्ठोच्यते । आपोऽपि काष्ठा उच्यन्ते' (Nir
II 15) According to Ksīrasvāmi काष्ठा means—(I) a
direction (2) a certain measure of time (3) preemine-
nce and (4) boundary (see Amarakośa I 2 2, I 3 11,
III 3 41, I 2 6), MWD takes काष्ठा to mean 'a place
for running', 'race ground' 'the course of the wind
and cloud in the atmosphere' Griffith takes it to mean
'current' निहितम्—see notes on निहिता (I 24 7)
विचरन्ति—√car to move, pres 3rd plu

दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः ।
पणिनाऽइव । गावः ॥ अपाम् । बिलम् । अपिऽहितम् । यत् ।
आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥११॥

सा० भा०—दासपत्नीः दास विदवोपक्षपणहेतु वृत्र पति स्वामी
यासाम् अपा ता दासपत्नी । अत एव अहिगोपाः । अहिर्वृत्रो गोपा रक्षको
यासा ता । गोपन नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम । एतदेव
स्पष्टीक्रियते । आपः निरुद्धा अतिष्ठन इति । तत्र दृष्टान्त । पणिनेव गावः ।
पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्ध-
वास्तयेत्यय । अपा यत् बिल प्रवहणद्वारम् अपिहितं वृत्रेण निरुद्धम आसीत्
तत् बिल प्रवहणद्वार वृत्रं जघन्वान् हतवान इन्द्र अप ववार अपवृतमकरोत्
वृत्रकृतमपा निरोध परिहृतवान् । अत्र यास्क—दासपत्नीर्दासाधिपत्न्यो दासो
दस्यतेरुपदासयति [illegible] कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ता । अहिरयनादेत्यन्तरिक्षे
ऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति । निरुद्धा आप पणिनेव
गाव । पणिर्वणिग्भवति पणि पणनाद्वणिक पण्य नेनेक्ति । अपा बिलमपिहित
यदासीत् । बिल भर भवति बिभर्तेर्वृत्र जघ्निवानपववार तद्वृत्रो वृणोतेर्वा
वर्ततेर्वा वर्धतेर्वा । यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्वृत्रस्य
वृत्रत्वमिति विज्ञायते । यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते' (निरु०
२ १७) इति ॥ दासपत्नी । 'दसु उपक्षये' । दासयतीति दासो वृत्र । पचाद्यच् ।

'चित' इत्यन्तोदात्तत्वम् । दास पतिर्यासाम् । 'विभाषा सपूर्वस्य' (पा० सू० ४ १ ३४) इति डीप्, तत्सनियोगेन इकारस्य नकार । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । यद्वा दासस्य पालयित्र्य । पत्यावैश्वर्यें' इति पूर्वपदप्रकृतिस्वरत्वम् । अहिगोपा । 'गुपू रक्षणे' । गोपायतीति गोपा । 'आयादय आर्धधातुके वा' (पा० सू० ३ १ ३१) इति आयप्रत्यय । तत क्विप् । 'अतो लोप' । वेरपृक्तलोपाद्वलि लोपो बलीयान्' इति पूर्वं यकार लोप (पा० सू० ६ १ ६६–६७) । न च 'अच परस्मिन्' इति अतो लोपस्य स्थानिवत्त्व 'न पदान्तद्विर्वचन' इति प्रतिषेधात् । अहिर्गोपा यासाम् । पूर्ववत स्वर । निरुद्धा । 'रुधिर् आवरणे' । 'झषस्तथोर्धोऽध' (पा० सू० ८ २ ४०) इति निष्ठातकारस्य धकार । 'गतिरनन्तर' इति गते प्रकृतिस्वरत्वम् । जघन्वान् । हन्तेर्लिट क्वसु । 'अभ्यासाच्च' (पा० सू० ७ ३ ५५) इति अभ्यासादुत्तरस्य हकारस्य कुत्वम । क्रादिनियमप्राप्तस्य इट 'विभाषा गमहन' (पा० सू० ७ २ ६८) इत्याविना विकल्पविधानादभाव । संहितायां नकारस्य रुत्वानुनासिकादुवतौ ॥

शब्दा०—दासपत्नीः=दास हैं स्वामी जिनका, अहिगोपाः=अहि हैं रक्षक जिनका, अतिष्ठन्=पड़ा था, निरुद्धाः—रुका हुआ, आपः=जल, पणिनेव गाव =पणियों द्वारा रोकी गई गायों की तरह, अपाम्=जलों का, बिलम्=मार्ग सुरग, अपिहितम्=बन्द हो गया, यत्=जो, आसीत्=था, वृत्रम्=वृत्र को, जघन्वान्=मारकर, तत्=उसको, अपववार=खोला ।

हि० अ०—दास हैं पति जिनका तथा अहि हैं रक्षक जिनका ऐसा जल रुका हुआ पड़ा था, जिस प्रकार गायें पणियों द्वारा (रोक ली गई थीं), जल का मार्ग जो बन्द हो गया था वृत्र को मारकर (इन्द्र ने) उसे खोला ।

*Trans*—The waters, wives of the slave, having a dragon as their protector, stood obstructed like the cows (confined) by the Panis The hole of the waters, which was concealed, having killed Vrtra (Indra) made it open

*Notes*—दासपत्नीः—Having slave as their lord, Bahuvrihi compd accented on the first member अहिगोपाः—Having Ahi as their protector, Bahuvrihi compd accented on the first member अतिष्ठन्—√*sthā* to stand,

impf. 3rd. plu. निरुद्धाः—√*rudh* to obstruct, past part.; for accent see निहिताः (I. 24.7). विलम्—From √*bhṛ* to bear (बिलं भरं भवति बिभर्तेः Nir. II. 17). अपिहितम्—√*dhā* to put, past part; for accent see निहिताः (I. 24.7). आसीत्—√*as* to be, impf. 3rd. sing; not unaccented because preceded by यत्. जघन्वान्—√*han* to kill, perf. part. अप ववार—√*vṛ* with अप to uncover, perf. 3rd. sing.

अश्व्यः । वारः । अभवः । तत् । इन्द्र । सृके । यत् । त्वा । प्रतिऽअहन् । देवः । एकः ॥ अजयः । गाः । अजयः । शूर । सोमम् । अव । असृजः । सर्तवे । सप्त । सिन्धून् ॥१२॥

सा० भा०—सृके वज्रे । 'सृकः सृकः' (नि० २. २०. ६) इति वज्रनामसु पठितत्वात् देवः दीप्यमानः सर्वायुधकुशलः एकः अद्वितीयः वृत्रः यत् यदा त्वा त्वां प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् तत् तदानीं त्वम् अश्व्यो वारः अश्वसंबन्धी वालः अभवः । यथाश्वस्य वालोऽनायासेन मक्षिकादीन्निवारयति तद्वत् वृत्रमगणयित्वा निराकृतवानित्यर्थः । किं च गाः पणिनापहृताः त्वम् अजयः जितवान् । हे शूर शौर्ययुक्त इन्द्र सोमम् अजयः जितवान् । तथा च तैत्तिरीयाः—'त्वष्टा हतपुत्रः' इत्येतस्मिन्नुपाख्याने समामनन्ति—'स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्' (तै० सं० २. ४. १२. १) इति । सप्त सिन्धून् 'इमं मे गङ्गे' (ऋ० स० १०. ७५. ५) इत्यस्यामृच्याम्नाता गङ्गाद्याः सप्तसंख्याका नदीः सर्तवे सर्तुं प्रवाहरूपेण गन्तुम् अवासृजः त्यक्तवान् । वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थ. ॥ अश्व्यः । अश्वे भवः । 'भवे छन्दसि' इति यत् । 'यतोऽनाव.' इत्याद्युदात्तत्वम् । वारयति दंशमशकानिति वारः । पचाद्यच् । कपिलकादित्वात् लत्वविकल्पः (पा० म० ८. २. १८) । वृषादित्वादाद्युदात्तत्वम् । प्रत्यहन् । 'यद्वृत्तान्नित्यम्' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । अजयः । गाः इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य 'तिङ्ङतिङः' इति निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा० सू० ८. १ १८. ५) इति वचनात् । सर्तवे । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥

शब्दा०—अश्व्यः=अश्व के, वारः=बाल, अभवः=हो गये, तत्=उस

समय, इन्द्र=ओ इन्द्र, सृके=वज्र पर, यत्=जिस समय, त्वा=तुम्हारे, प्रत्यहन्=प्रहार किया, देवः=देव, एकः=अद्वितीय; अजयः=जीता, गाः=गायों को, अजयः=जीता, शूर=ओ बहादुर, सोमम्=सोम को, अव=नीचे की ओर, असृजः=प्रवाहित किया, सर्तवे=बहने के लिये, सप्त=सात, सिन्धून्=नदियों को।

हि० अ०—ओ इन्द्र, जिस समय (वृत्र ने) तुम्हारे वज्र पर उलटा प्रहार किया उस समय (तुम) अद्वितीय देव घोड़े की पूंछ के बाल बन गये। (तुमने) गायें जीतीं, ओ बहादुर, (तुमने) सोम जीता तथा सात नदियों को प्रवाहित होने के लिये मुक्त किया।

*Trans.*—O Indra, then, thou, the sole god, became the hair of the horse's tail, when he smote thee on thy thunderbolt in return. (Thou) won the cows, o hero, won the Soma, and released the seven rivers to flow.

*Notes*—अश्व्यः—Formed from अश्व with the suffix यत्. वारः—From √*vr* to protect; here अश्व्यो वारः is used metaphorically to mean 'Indra acted quickly in self defence' or brushed him aside quickly. अभवः—√*bhū* to be, impf. 2nd. sing. प्रत्यहन्—√*han* with प्रति to attack in return, impf. 3rd. sing.; not unaccented because preceded by यत् (see notes on पर्यतिष्ठत् (I. 32.8). अजयः—√*ji* to conquer, impf. 2nd. sing.; not unaccented because it comes at the beginning of the Pāda; the following अजयः too, is not unaccented, for it begins a new sentence. असृजः—√*srj* to emit, impf. 2nd. sing. सर्तवे—Dative infinitive in तवे from √*sṛ* to flow.

न । अस्मै । विऽद्युत् । न । तन्यतुः । सिसेध । न । याम् । मिहम् । अकिरत् । ह्रादुनिम् । च ॥ इन्द्रः । च । यत् । युयुधाते इति । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥१३॥

सा० भा०—इन्द्र निषेद्धुं वृत्रो यान् विद्युदादीन् मायया निर्मितवान् ते सर्वेऽप्यनेन निषेद्धुमशक्ता । सोऽयमर्थोऽनेन मन्त्रेणोच्यते । अस्मै इन्द्रार्थं निर्मिता विद्युत् न सिषेध इन्द्रं न प्राप्नोत् । तथा तन्यतुः गर्जनं या मिहं रोचन या वृष्टिम् अकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टि न सिषेध । ह्रादुनिं च अशनिमपि यां वृत्र प्रयुक्तवान् सापि न सिषेध । इन्द्रश्च अहिश्च इन्द्रवृत्रावुभावपि यत् यदा युयुधाते युद्धं कृतवन्तौ । तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वय । उत अपि च मघवा धनवानिन्द्र अपरीभ्यः अपराभ्य अन्यासामपि वृत्रनिर्मितानां मायानां सकाशात् वि जिग्ये विशेषेण जितवान् ॥ सिषेध । 'षिधु गत्याम्' । मिहम् । 'मिह सेचने' । मेहति सिञ्चतीति मिट् वृष्टि । 'क्विप् च' इति क्विप् । अकिरत् । कॄ विक्षेपे' । 'तुदादिभ्य श' । 'ॠत इद्धातो' इति इत्वम् । अडागम उदात्त । यद्वृत्त-योगादनिघात । युयुधाते । 'युध सम्प्रहारे' । लिटि प्रत्ययस्वर । जिग्ये । सन्लिटोर्जे' (पा० सू० ७ ३ ५७) इति अभ्यासादुत्तरस्य जकारस्य कुत्वम् ॥

शब्दा०—न=नहीं, अस्मै=उस (इन्द्र) के लिये, विद्युत्=बिजली, न=न तो, तन्यतुः=गर्जन, सिषेध=सफल हो सका, न=न तो, याम्=जिसको, मिहम्=मेघ, अकिरत्=फैलाया था, ह्रादुनिम्=वज्र च=और इन्द्र=इन्द्र, च=और, यत्=जिस समय, युयुधाते=एक साथ लड़े, अहिः=राक्षस बादल, च=और, उत=और, अपरीभ्यः=अन्य (प्रहारों को भी), मघवा=महान् (इन्द्र) ने वि जिग्ये=जीता ।

हि० अ०—उस समय न तो बिजली, न गर्जन न मेघ और न वज्र ही जिनको (वृत्र ने) उस (इन्द्र) के लिये फैलाया था, सफल हो सका, जब इन्द्र तथा अहि दोनों एक साथ लड़े । और महान् (इन्द्र) ने (वृत्र द्वारा प्रयुक्त) अन्य प्रहारों पर भी विजय प्राप्त की ।

*Trans*—Neither lightning nor thunder, nor rain, nor the thunderbolt, which (Vrtra) had spread around him could avail (Indra), when Indra and Ahi fought together And the bounteous one conquered also over other (attacks)

*Notes*—सिषेध—√*sidh* to avail, perf 3rd, sing
ह्रादुनिम्—'Thunderbolt' (Sayana), 'hailstorm' (Griffith)
अकिरत्—√*kr* to scatter, impf 3rd sing, not un-

accented because preceded by याम्. युयुधाते—$\sqrt{}$*yudh* to fight, mid. perf. 3rd. dual; not unaccented because preceded by यत्. ई, ऊ and ए forming the dual ending are called Pragṛhya (ईदूदेद् द्विवचनं प्रगृह्यम् Pāṇ. I. 1.11); hence, in the Pada-text इति is added after युयुधाते. उत–The use of उत here shows that the sentence beginning with उत is not connected with preceding *one* i.e. the 3rd. Pāda. Sāyaṇa takes a, b, and c in continuation and d as a separate sentence. अपरीत्यः—Griffith takes it to mean 'for ever' and Peterson as 'for all time to come'. जिग्ये—$\sqrt{}$*ji* to conquer, mid. perf. 3rd. sing.

अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते ।
जघ्नुषः । भीः । अगच्छत् ॥ नव । च । यत् । नवतिम् । च ।
स्रवन्तीः । श्येनः । न । भीतः । अतरः । रजांसि ॥१४॥

सा० भा०—हे इन्द्र जघ्नुषः वृत्रं हतवतः तव हृदि चित्ते यत् यदि भीरगच्छत् न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्हि अहेः वृत्रस्य यातारं हन्तारं कमपश्यः त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि। तादृशस्य पुरुषान्तरस्याभावात् मा भूत् तव भयमित्यर्थः। यत् यस्मात् कारणात् त्वं नव च नवतिं च स्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीर्नदीः प्राप्य रजांसि तत्रत्यान्युदकानि अतरः तीर्णवानसि। तत्र दृष्टान्तः। श्येनो न। श्येननामको बलवान् पक्षीव दूरगमनात्तव भयमासीदिति गम्यते। तादृशं मा भूदित्यभिप्रायः। तच्च दूरगमनं ब्राह्मणे समाम्नातम्—'इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत्' (ऐ० ब्रा० ३.१५) इति। तैत्तिरीयाश्चामनन्ति—'इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपराधमिति मन्यमानः' (तै०स० २ ५.३.६) इति॥ हृदि। 'पद्दन्' इत्यादिना हृदयशब्दस्य हृदादेशः। 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम्। जघ्नुषः। हन्तेर्लिटः क्वसुः। षष्ठ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणपरपूर्वत्वे। 'शासिवसिघसीनां च' इति षत्वम्। न च 'षत्वतुकोरसिद्धः' (पा० सू० ६ १.८६) इत्येकादेशस्यासिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यं, 'संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः' (का० ६.१.८६.१)

इति असिद्धवद्भावस्य प्रतिषिद्धत्वात् । 'गमहन्' इत्याविना उपधालोप । न च 'असिद्धवदत्रा भात्' इति सम्प्रसारणस्यासिद्धवद्भाव, भिन्नाश्रयत्वात् । सम्प्रसारण हि षष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वम् । स्रवन्ती । 'स्रु गतौ' । 'शप्श्यनोर्नित्यम्' (पा० सू० ७ १ ८१) इति नुमागम । शप पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेणानुदात्तत्वम् । अतर । यद्वृत्तयोगादनिघात ॥

शब्दा०—अहेः=राक्षस के, यातारम्=अनुयायी सहायक, कम्=किस को, अपश्यः=देखा, इन्द्र=ओ इन्द्र, हृदि=हृदय में, यत्=जिससे ते=तुम्हारे, जघ्नुषः=मारने वाले के, भी=भय, अगच्छत्=गया, प्रवेश किया, नव च नवतिम्=नौ और नब्बे अर्थात निन्यानबे, स्रवन्तीः=नदियों को, श्येनः=श्येन पक्षी, न=तरह, भीतः=डरे हुये, अतरः=पार कर गये, रजांसि=अन्तरिक्ष को ।

हि० अ०—ओ इन्द्र, अहि के किस अनुयायी (सहायक) को तुमने देखा कि (वृत्र को) मारने वाले, तुम्हारे हृदय में भय प्रवेश कर गया, कि भयभीत होकर ९९ नदियों तथा अन्तरिक्ष को (तुम) श्येन की तरह पार कर गये ।

*Trans* —O Indra, what follower of Ahi did thou see, that a fear entered the heart of thee, the killer, that thou affrighted crossed the nine and ninety streams and the aerial regions like a falcon

*Notes*—यातारम्—Derived from $\sqrt{y\bar{a}}$ to go by adding the suffix तृच्, acc sing, 'killer' (Sāyana), 'destroyer' (Wilson), 'avenger (SPD) 'follower' (Parāñjpe) अपश्य —$\sqrt{pa\acute{s}}$ to see, impf 2nd sing जघ्नुषः—Gen sing perf part of जघ्निवस् from $\sqrt{han}$ to kill अगच्छत्—$\sqrt{gam}$ to go, impf 3rd sing, not unaccented because preceded by यत् स्रवन्तीः—$\sqrt{sr}$ to flow, pres part भीतः—$\sqrt{bh\bar{\imath}}$ to fear, past part अतरः—$\sqrt{tr}$ to cross, impf 2nd sing, not unaccented because preceded by यत

इन्द्रः । यातः । अवंऽसितस्य । राजा । शमंस्य । च । शृङ्गिणः । वज्रंऽबाहुः॥ सः । इत् । ऊँ इति । राजा । क्षयति । चर्षणीनाम् । अरान् । न । नेमिः । परि । ता । बभूव ॥१५॥

सा० भा०—वज्रबाहु इन्द्र शत्रौ हते सति निःसपत्नो भूत्वा यातः गच्छतो जङ्गमस्य अवसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजा अभूत। सेदु स एवेन्द्र चर्षणीना मनुष्याणां राजा भूत्वा क्षयति निवसति। ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परि बभूव व्याप्तवान्। तत्र दृष्टान्त । अरान् न नेमिः। यथा रथचक्रस्य परितो वर्तमाना नेमि अरान् नाभौ कीलितान् काष्ठविशेषान् व्याप्नोति तद्वत ॥ यात । 'या प्रापणे' याति गच्छतीति यात्। लट शतृ। 'सावेकाच' इति विभक्तेरुदात्तत्वम्। स । 'सोऽचि लोपे चेत्' इति संहितायां सोर्लोप । ता। 'शेश्छन्दसि बहुलम्' इति शेर्लोप । बभूव। भवतेर्लिटो णलि 'भवतेर' (पा० सू० ७ ४ ७३) इति अभ्यासस्य अत्वम्। कृताकृतप्रसङ्गितया वुगागमस्य नित्यत्वात वृद्धे पूर्वं वुगागम । यद्वा। 'इन्धिभवतिभ्यां च' (पा० सू० १ २ ६) इति लिट कित्वात् वृद्ध्यभाव । न च 'असिद्धवदत्रा भात्' इति तस्यासिद्धत्वात उवङादेश शङ्कनीय, 'वुग्युटावुवङ्यणो सिद्धौ भवत' (पा० सू० ६ ४ २२ १४) इति तस्य सिद्धत्वात्। 'तिङ्ङतिङ' इति निघात ॥

शब्दा०—इन्द्र =इन्द्र, यातः=जाने वाले अर्थात् जगमो के अवसितस्य =स्थिर रहने वाले अर्थात् स्थावरो के, राजा=शासन करने वाले, शमस्य= शान्त का अर्थात् बिना सींग वालों का, च=और, शृङ्गिणः=सींग वालो का, वज्रबाहुः=हाथ में वज्र धारण करने वाले, सः=वह, इत्=निश्चित अर्थ का वाचक एक निपात, उ=निश्चित अर्थ का वाचक एक निपात,राजा= शासन करने वाला, क्षयति=शासन करता है चर्षणीनाम्=मनुष्यों का, अरान्=रथ के चक्र के धुरे में लगी हुई कीलें, न=तरह, नेमिः=पहिये की परिधि पर लगा हुआ लोहा या रबड़, ता=उनको, परिबभूव—चारो तरफ से घेरे हुये हैं।

हि० अ०—वज्र धारण करने वाला इन्द्र चलने वाले तथा स्थिर रहने वाले, शांत (बिना सींग वाले) तथा सींग वाले सबका राजा है; वही राजा

सभी मनुष्यो के उपर शासन करता है। जिस प्रकार लोहे की परिधि धुरे में लगे पहिये के सभी अरों को घेरे रहती हैं उसी प्रकार (वह इन्द्र) उन सबको चारो तरफ से घेरे हुये हैं।

*Trans.*—Indra, the wielder of the thunderbolt, is the king of all that moves and that moves not, of quiet (hornless-creatures) and horned. Verily he rules over all people, and surrounds them as does a rim the spokes (of a wheel).

*Notes*—यातः—Of moving; from √*yā* to go, pres. part. gen. sing.; monosyllabic words in instrumental etc. accent the termination (सावेकाचस्तृतीयादिर्विभक्तिः— Pāṇ. VI. 1. 168). अवसितस्य—Past. part. gen. sing, √*sā* with अव to let loose, to be unyoked, secondarily to take rest; for accent see note on निहिताः (I. 24.7). वज्रबाहुः—Having thunderbolt in his arms; Bahuvrīhi compd. accented on the first member. सेदु—The irregular euphonic combination of सः+vowel is mentioned by the Ṛg. Prāt. (II. 68-69). क्षयति—√*kṣi* to dwell or rule over, pres. 3rd sing.; it governs the gen. चर्षणीनाम्. परि बभूव—√*bhū* with परि to surround, perf. 3rd. sing.

'ह्वयाम्यग्निम्' इत्येकादशर्चं पञ्चमं सूक्तम् । हिरण्यस्तूप ऋषिः । आद्या नवमी च जगतीच्छन्दस्के । शिष्टास्त्रिष्टुभः । कृत्स्नस्य सूक्तस्य सविता देवता । आद्यायाः 'ह्वयाम्यग्निम्' इत्यस्या अग्निमित्रावरुणरात्रिसवित्राख्या लिङ्गोक्त-देवताः। तथा चानुक्रान्तं—'ह्वयाम्येकादश सावित्रं नवमी जगत्याद्या च लिङ्गोक्त-दैवतपादास्त्रयः' इति । अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्रे इदं सूक्तं सावित्रं निविद्धानम् । 'तृतीयस्य व्ययंमा' इति खण्डे सूत्रितं—'ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्र.' (आश्व श्रौ० ७ ७) इति ॥

ह्वया॑मि । अ॒ग्निम् । प्र॒थ॒मम् । स्व॒स्तये॑ । ह्वया॑मि । मि॒त्रावरु॑णौ । इ॒ह । अव॑से ॥ ह्वया॑मि । रात्री॑म् । जग॑तः । नि॒ऽवेश॑नीम् । ह्वया॑मि । दे॒वम् । स॒वि॒तार॑म् । ऊ॒तये॑ ॥१॥

सा० भा०—स्वस्तये अस्माकमविनाशाय । 'स्वस्तीत्यविनाशनाम' (निरु० ३.२१) इति यास्कः । प्रथमम् आदौ अग्निं ह्वयामि । इह अस्मिन् कर्मणि अवसे अस्मद्रक्षणाय मित्रावरुणौ ह्वयामि । जगतः जङ्गमस्य प्राणिजातस्य निवेशनीम् उपनिवेशनहेतुभूतां रात्रीं रात्रिदेवतां ह्वयामि । जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्वगृहे रात्रौ उपवि-शन्तीति प्रसिद्धम् । ऊतये अस्मद्रक्षणार्थं सवितारं देवं ह्वयामि ॥ मित्रा-वरुणौ । 'देवताद्वन्द्वे च' इति पूर्वपदस्य आनङादेशः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् । रात्रीम् । 'रात्रेश्चाजसौ' (पा० सू० ४.१.३१) इति ङीप् । निवेशनीम् । निविशन्त्यस्यामिति निवेशनी । 'करणाधिकरण-योश्च' इति ल्युट् । 'टिड्ढाणञ्' (पा० सू० ४.१.१५) इत्यादिना ङीप् । ऊतये । अवतेः क्तिनि 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वम् ॥

शब्दा० - ह्वयामि=बुलाता हूँ, अग्निम्=अग्नि को, प्रथमम्=प्रथम देव, स्वस्तये=कल्याण के लिये, ह्वयामि=बुलाता हूँ, मित्रावरुणौ=मित्र और वरुण को, इह=यहाँ, अवसे=रक्षा के लिए, ह्वयामि=बुलाता हूँ। रात्रीम्=रात्रि को, जगतः=सम्पूर्ण जंगम लोक को, निवेशनीम्=आराम देने वाली, ह्वयामि=बुलाता हूँ, देवम्=देव को, सवितारम्=सवितृ को, ऊतये=रक्षा के लिये।

हि० अ०—मैं प्रथम (देव) अग्नि को (अपन) कल्याण के लिये बुलाता हूँ, मित्र तथा वरुण को यहाँ रक्षा के लिये बुलाता हूँ, सम्पूर्ण जगम लोक को आराम देने वाली रात्रि को बुलाता हूँ, सवितृ देव को सहायता के लिये बुलाता हूँ।

*Trans*—I invoke Agni, the first, for welfare, I invoke Mitra and Varuna here for protection, I invoke Night that gives rest to all moving ones, I invoke god Savitar for help

*Notes*—ह्वयामि—√*hva* to call, pres 1st sing, not unaccented because beginning of the Pada मित्रावरुणाविह—For sandhi see Appendix A under *Bhugna* मित्रावरुणौ is a *Dvandva compd* comprising both the members as names of the deities, hence, both the members are accented (देवता द्वन्द्वे च—Pan VI 2 141) Such *compds* are not analysed in the Pada text अवसे—Dative sing from √*av to protect* निवेशनीम्—From नि+√*viś* (to enter) by adding the suffixes ल्युट and ङीप ऊतये—dative sing from √*av* to protect, व with its penultimate vowel has become ऊ (ज्वरत्वरश्रिव्यविमवामुपधायाश्च—Pan VI 4 20)

आ। कृष्णेन। रजसा। वर्तमानः। निऽवेशयन्। अमृतम्। मर्त्यम्। च॥ हिरण्ययेन। सविता। रथेन। आ। देवः। याति। भुवनानि। पश्यन् ॥२॥

सा० भा०—सविता सूर्य कृष्णेन रजसा कृष्णवर्णेन लोकेन। कृष्ण कृष्यतेर्निकृष्टो वर्ण' (निरु० २ २०) इति यास्क। लोका रजांस्युच्यन्ते' (निरु० ४ १९) इति च। अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति। तेनान्तरिक्षमार्गेण आ वर्तमान पुन पुनरागच्छन् अमृतं देव मर्त्यं मनुष्य च निवेशयन् स्वस्वस्थानेऽवस्थापयन्। यद्वा। अमृत मरणरहित प्राण मर्त्यं मरणसहित शरीर च निवेशयन्। तथा चारण्यकाण्ड अमर्त्यो मर्त्येना सयोनि'

(ऋ० सं० १ १६४ ३८) इत्येतस्य मन्त्रभागस्य व्याख्यानरूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते—'मर्त्यानि हीमानि शरीराणि अमृतैषा देवता' (ऐ० ब्रा० २ १ ८) इति। यथोक्तगुणोपेत सविता देवः भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाण प्रकाशयन्नित्यर्थं। हिरण्ययेन सुवर्णनिर्मितेन रथेन आ याति अस्मत्समीपमागच्छति॥ अमृतम्। मृत मरण नास्ति अस्येति बहुव्रीहौ 'नञो जरमरमित्रमृता' इत्युत्तरपदाद्युदात्तत्वम्। मर्त्यम्। मर्ते भवम्। 'भवे छन्दसि' इति यत। 'यतोऽनाव' इत्याद्युदात्तत्वम्। हिरण्ययेन। 'ऋत्व्यवास्त्व्य' (पा० सू० ६ ४ १७५) इत्यादिना मयटो मकारलोपो निपातित। यस्येति लोपे प्रत्ययस्वर। भुवनानि। 'भू सत्तायाम'। 'भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ० सू० २ २३८) इति क्युन्प्रत्यय। योरनादेशे उवङादेश। नित्वादाद्युदात्तत्वम्॥

शब्दा०—कृष्णेन=अन्धकारमय रजसा=अन्तरिक्ष से, आवर्तमानः=लौटते हुये, निवेशयन्=अपने अपने कार्य में लगाते हुये, अमृतम्=देवताओं को मर्त्यम्=मनुष्यों को च=और, हिरण्ययेन=स्वर्णमय, सविता=सवितृ देव, रथेन=रथ से देवः=देव, आयाति=आ रहे हैं भुवनानि=लोकों को, पश्यन्=देखते हुये।

हि० अ०—अन्धकारमय अन्तरिक्ष से (होकर) लौटते हुये, देवताओं तथा मनुष्यों को (अपने अपने कार्यों में) प्रवृत्त करते हुये, स्वर्णमय रथ पर (चढ़कर) सवितृ देव सम्पूर्ण प्राणियों को देखते हुये आ रहे हैं।

*Trans*—Returning through the darksome region, arousing the immortals and the mortals, God Savitar comes on the golden chariot beholding all the creatures

*Notes*—आ वर्तमानः—√वृत् to turn, pres part Preposition may be separated from the participle as from a verb, and then it retains the accent as an independent word निवेशयन्—√विश् to enter, caus pre part, a preposition compounded with pres part is unaccented and separated by avagraha in the Pada-text अमृतम्—See notes on अमृतानाम् (I 24 1) मर्त्यम्—Words ending in the suffix यत्, accent the first syllable (यतोऽनाव —

Pān VI 2 213) आ याति—√*yā* with आ to come, pres 3rd sing पश्यन्—√*paś* to see, pres part

याति । देवः । प्रऽवता । याति । उत्ऽवता । याति । शुभ्राभ्याम् । यजतः । हरिऽभ्याम् ॥ आ । देवः । याति । सविता । पराऽवतः । अप । विश्वा । दुःऽइता । बाधमानः ॥३॥

सा० भा०—देवः दीप्यमान सविता प्रवता प्रवणता मार्गेण याति गच्छति । तथा उद्वता उत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण याति । उदयान्तर आमध्याह्नमूर्ध्वो मार्ग, तत उपरि आसाय प्रवणो मार्ग इति विवेक । तथा यजतः यष्टव्य स देव शुभ्राभ्यां श्वेताभ्या हरिभ्याम् अश्वाभ्या याति देवयजनदेशे गच्छति । सविता देवः विश्वा दुरिता सर्वाणि पापानि अप बाधमानः विनाशयन् परावत दूरदेशात् । परावत' (नि० ३ २६ ५) इति दूरनामसु पठितत्वात् । तादृशात् द्युलोकात् आ याति यागदेशे आगच्छति ॥ प्रवता । 'वन षण सम्भक्तौ' । अस्मात् प्रपूर्वात् क्विप् । 'गमादीनामिति वक्तव्यम्' (पा० सू० ६. ४ ४० १) इत्यनुनासिकलोप । तत तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । उद्वता । उत्पूर्वात् वनते पूर्ववत्प्रक्रिया । यजत । 'भृमृदृशि' (उ० सू० ३ ३९०) इत्यादिना यजते कर्मणि अतच्प्रत्यय । विश्वा दुरिता । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोप ।

शब्दा०—याति=जाते हैं, देवः=देव, प्रवता=नीचे मार्ग से, याति=जाते हैं, उद्वता=उपर मार्ग से, याति=जाते हैं, शुभ्राभ्याम्=सफेद रग के, यजतः—पूजनीय, हरिभ्याम्=दो अश्वो के साथ, देवः=देव, आ याति =आ रहे हैं, सविता=सवितृ, परावतः=बहुत दूर से, विश्वा=सम्पूर्ण, दुरिता=पापो को, अपबाधमानः=दूर करते हुये ।

हि० अ०—(सवितृ) देव नीचे (मार्ग) से जाते हैं, ऊपर (मार्ग) से जाते हैं, पूजनीय (सवितृ देव) श्वेत रग के दो अश्वों के साथ आते हैं । सम्पूर्ण बुराइयों को दूर करते हुये सवितृ देव बहुत दूर से आ रहे हैं ।

*Trans* —God (Savitar) goes by a downward, goes by an upward (path), adorable (God) goes with two white horses God Savitar comes from afar obstructing all the evils

*Notes*—याति—$\sqrt{}$*yā* to go, not unaccented because it begins the pāda ; so also the 3rd याति in the second Pāda ; second याति is not unaccented because it begins a new sentence. अप बाधमानः $\sqrt{}$*bādh* with अप to destroy pres. part. For accent see आ वर्तमानः (I.35.2).

अभिऽवृतम् । कृशनैः । विश्वऽरूपम् । हिरण्यऽशम्यम् । यजतः । बृहन्तम् ॥ आ । अस्थात् । रथम् । सविता । चित्रऽभानुः । कृष्णा । रजांसि । तविषीम् । दधानः ॥४॥

सा० भा०—सविता रथम् आस्थात् आस्थितवान् आरूढवानित्यर्थः । कीदृशम् । अभीवृतम् अभितो वर्तमानम् । तथा कृशनैर्विश्वरूपं सुवर्णेन नानारूपम् । 'कृशनं लोहम्' (नि० १.२.७) इति सुवर्णनामसु पाठात् । क्वचित् सुवर्णनिर्मितगजपङ्क्तिः क्वचिदश्वपङ्क्तिः क्वचिन्मनुष्यपङ्क्तिरित्येवं बहुरूपत्वम् । हिरण्यशम्यम् । अश्वानां स्कन्धेषु रथयोजनवेलायां नियन्तुं प्रक्षेप्यमाणाः शङ्कवः शम्याः । ताः सुवर्णमय्यो रथे वर्तन्ते । बृहन्तं प्रौढम् । कीदृशः सविता । यजतः यष्टव्यः चित्रभानुः विविधरश्मियुक्तः कृष्णा रजांसि अन्धकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य तमोनिवारणार्थं तविषीं बलं स्वकीयं प्रकाशरूपं दधानः ॥ अभीवृतम् । अभितो वर्तते इत्यभीवृत् । 'वृतु वर्तने' । क्विपि 'नहिवृति' (पा०सू० ६.३ ११६) इत्यादिना पूर्वपदस्य दीर्घत्वम् । विश्वरूपम् । विश्वानि रूपाणि यस्यासौ विश्वरूपः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । हिरण्यशम्यम् । 'हर्य गतिकान्त्योः' । 'हर्यतेः कन्यन् हिर च' (उ०सू० ५.७२२) इति कन्यन् प्रत्ययो धातोर्हिरादेशश्च । नित्वादाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । आस्थात् । तिष्ठतेर्लुङि 'गातिस्था' इति सिचो लुक् । कृष्णा । 'कृषेर्वर्णे' (उ० सू० ३. २८४) इति नक्प्रत्ययः । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । तविषीम् । तवतिः सौत्रो धातुः । 'तवेर्णिद्वा' (उ० सू० १.४८) इति टिषच् । टित्त्वात् 'टिड्ढाणञ्' इत्यादिना ङीप् । व्यत्ययेन आद्युदात्तत्वम् वृषादित्वात् द्रष्टव्यम् । दधानः । शानचि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥

शब्दा०—अभीवृतम्=सुसज्जित, कृशनैः=स्वर्ण से, विश्वरूपम्=विविध रूपवाले, हिरण्यशम्यम्=स्वर्ण कीलवाले, यजतः=पूजनीय,

बृहन्तम्=ऊँचे, आ अस्थात्=आरूढ हुय, रथम्=रथ पर, सविता=सवितृ देव, चित्रभानुः=विचित्र किरणोवाले, कृष्णा=अधकारमय, रजांसि—लोक, तविषीम्=शक्ति, दधानः=धारण करते हुये ।

हि० अ०—स्वण से सुसज्जित, विविध रूपवाले, (जुवा में) स्वण की कीलवाले, ऊचे रथ पर, विचित्र किरणो से युक्त, पूजनीय सवितृ देव, अधकारमय लोक के विरुद्ध शक्ति धारण करते हुए आरूढ हुये ।

*Trans*—Bright rayed, adorable Savitar, bearing the might (to dispense) the darksome region, mounted the lofty chariot, adorned with pearls, omniform, furnished with golden yoke pins

*Notes*—अभीवृतम्—The final syllable of the preceding preposition is lengthened, if a word ending in the suffix क्विप forms the second member of the compd (नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ—Pan VI 3 116, निपातस्य च—Pan VI 3 136) For accent see निहिता (I 24 7) कृशनैः—It is enumerated in the list of the names of gold (Night I 2 6), Macdonell takes कृशनं to metaphorically mean stars विश्वरूपम्—In Bahuvrihi the word विश्व accents the second syllable, if it is noun and forms the first member (बहुव्रीहौ विश्व सज्ञायाम—Pan VI 2 106), here the second syllable of the word विश्व is accented even though it is not a noun हिरण्यशम्यम्—'Furnished with golden yokes' (Wilson), 'with golden Pole' (Griffith), 'with golden pins' (Macdonell), Bahuvrihi compd accented on the first syllable of the first member बृहन्तम्—From √brh to make big, pres part acc sing अस्थात्—√stha to stand, root aorist, 3rd sing चित्रभानु—'Many-rayed' (Wilson, Griffith), 'brightly lustrous' (Macdonell), Bahuvrihi, compd accented on the first member तविषीम्—From √tav to overpower

दधानः—√*dhā* to put, pres part , accented on the red syllable (अभ्यस्तानामादिः Pān VI 1 189).

वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः ॥ शश्वत् । विशः । सवितुः । दैव्यस्य । उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥५॥

सा० भा०—श्यावाः एतन्नामका सूर्यस्याश्वा । 'श्यावा सवितु' (नि० १ १५ ८) इति निघण्टावुक्तत्वात् । ते च शितिपादः श्वेतै पादैरुपेता हिरण्यप्रउगम् । रथस्य मुखम् ईषयोरग्र युगबन्धनस्थान प्रउगमित्युच्यते । तच्चात्र सुवर्णमयम् । तद्युक्त रथं वहन्तः जनान् प्राणिन वि अख्यन् विशेषेण प्रकाशितवन्त इत्यर्थ । शश्वत् सर्वदा विशः प्रजा दैव्यस्य देवस्यैव सबन्धिन सवितुः प्रेरकस्य सूर्यस्य उपस्थे समीपस्थाने तस्थुः स्थित-वत्य । न केवल प्रजा कि तर्हि विश्वा भुवनानि सर्वे च लोका प्रकाशाय सूर्यसमीपे तस्थु ॥ शितिपाद । शितय श्वेतवर्णा पादा येषा ते शिति-पादा । 'सुपा सुलुक्' इति जस सुआदेश । यद्वा । शिति श्वेतवर्णं स्फाटिकादि । स इव पादौ येषा ते । 'पादस्य लोपोऽहस्त्यादिभ्य' (पा०सू० ५ ४ १३८) इति समासान्तपादशब्दस्यान्त्यलोप । उपमानात् इति हि तत्रा-नुवर्तते । पादशब्दस्य वृषादित्वादाद्युदात्तत्वम् । तस्य बहुव्रीहौ समासे 'शिते-र्नित्याबह्वज्बहुव्रीहावभसत्' (पा० सू० ६ २ १३८) इत्युत्तरपदप्रकृतिस्वरत्वम् । अख्यन् । ख्यातेर्लुङि 'अस्यतिवक्ति' इत्यादिना च्ले अङादेश । हिरण्य-प्रउगम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । वहन्त । शप पित्त्वादनुदात्त-त्वम् । शतुश्च लसार्वधातुकस्वरेण धातुस्वर । दैव्यस्य । तस्येदमित्यर्थे 'देवाद्यञञौ' (पा० सू० ४ १ ८५ ३ ) इति देवशब्दात् प्राग्दीव्यतीयो यञ् । 'तद्धितेष्वचामादे' (पा० सू० ७ २ ११७) इति आदिवृद्धि । 'ञ्नि-त्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । उपस्थे । 'आतश्चोपसर्गे' इति क । 'आतो लोप इटि च' इति अकारलोप । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ॥

शब्दा०—जनान्=लोगो को, श्यावाः=सवितृ देव के अश्वो ने, शितिपादः=सफेद पैर वाले, व्यख्यन्=विशेष रूप से प्रकाशित किया है, रथम्=रथ को, हिरण्यप्रउगम्=स्वर्ण की कील वाले, वहन्तः—खींचते हुए, शश्वत्=सम्पूर्ण, विशः=निवास स्थान, सवितुः—सवितृ को, दैव्यस्य=

देव, उपस्थे=गोद में, विश्वा=सम्पूर्ण, भुवनानि=लोक, तस्थु॰=स्थित हैं।

हि॰ अ॰—सफेद पैर वाले (सवितृ देव के) अश्वों ने, स्वर्णनिर्मित जुआ की कीलवाले रथ को खींचते हुये, प्राणियों को विशेष रूप से प्रकाशित किया है। सम्पूर्ण निवास स्थान तथा सम्पूर्ण लोक प्रकाशमान देव सवितृ की गोद में स्थित हैं।

*Trans*—The white footed horses of Savitar carrying the chariot (furnished) with golden yoke peg, have lightened people The clans and all the creatures are seated in the lap of divine Savitar

*Notes*—जनाञ्छ्यावा॰—For euphonic combination see Appendix A under *Vaśangama Āsthapita* श्यावा—The horse of savitar (Nigh I 15 8), Macdonell takes it to mean 'dusky steeds' शितिपाद॰—Mono Syllabic words, forming the second member of the compound, if follow the word शिति as the first member in the Bahuvrihi, are accented (शितेर्नित्याबह्वज्बहुव्रीहावभसत—Pan VI 2 138), final syllable of the word पाद in compd is generally dropped but here it is restored वि अख्यन्—√khya to see 'a'-aorist 3rd plu हिरण्यप्रउगम्—With golden yoke peg Bahuvrihi compd accented on the first syllable प्रउगम is an instance of hiatus in the interior of a word (Rg Prat II 13) वहन्त—√vah to carry pres part nom plu दैव्यस्य—Of divine an adj of सवितृ Words ending in suffixes ञित् and नित accent the first syllable (ञ्नित्यादिर्नित्यम्—Pan VI 1 197) तस्थु—√stha to stand perf 3rd plu

lap गोद

तिस्रः। द्यावः। सवितुः। द्वौ। उपऽस्था। एका। यमस्य। भुवने। विराषाट्॥ आणिम्। न। रथ्यम्। अमृता। अधि। तस्थुः। इह। ब्रवीतु। यः। ऊँ इति। तत्। चिकेतत्॥६॥

सा० भा०—द्यावः स्वर्गोपलक्षिताः प्रकाशमाना लोकाः तिस्रः त्रिसंख्याकाः सन्ति। तत्र द्वौ लोकौ सवितुः सूर्यस्य उपस्था समीपस्थाने वर्तेते; द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात्। एका मध्यमा भूमिरन्तरिक्षलोकः यमस्य भुवने पितृपतेर्गृहे विराषाट् विरान् गन्तॄन् सहते। प्रेताः पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः। अमृता अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि कलामि वा अधि तस्थुः सवितारमधिगम्य स्थितानि। तत्र दृष्टान्तः। रथ्यम् आणिं न। रथाद्बहिः अक्षच्छिद्रे प्रक्षिप्तः कीलविशेषः आणिरित्युच्यते। रथसंबन्धिनम् आणिम् अधिगम्य यथा रथस्तिष्ठति तद्वत्। यः तु मानवः तत् सवितृरूपं चिकेतत् जानाति स मानवः इह अस्मिन् विषये ब्रवीतु कथयतु। केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः॥ तिस्रः। 'तिसृभ्यो जसः' (पा० सू० ६. १. १६६) इति विभक्तेरुदात्तत्वम्। द्वौ। संहितायामावादेशे 'लोपः शाकल्यस्य' इति वकारलोपः। उपस्था। 'आड्याजयारां चोपसंख्यानम्' (पा० म० ७. १. ३९. १) इति सप्तम्या आकारादेशः। 'आङोऽनुनासिकश्छन्दसि' (पा० सू० ६. १. १२६) इति प्रकृतिभावः। विराषाट्। 'वृञ् वरणे'। 'पञ्चार्थे कविधानम्' (पा० सू० ३. ३. ५८. ४) इति कर्मणि कः। 'बहुलं छन्दसि' (पा० सू० ७. १. १०३) इति इत्वम्। तथा सति वृयन्ते इति विरा इत्युक्तं भवति। तान् सहते इति विराषाट्। 'छन्दसि सहः' (पा० सू० ३. २. ६३) इति सहेर्ण्विः। 'सहेः साडः' (पा० सू० ८. ३. ५६) इति षत्वम्। 'अन्येषामपि दृश्यते' इतिपूर्वपदस्य दीर्घः। रथ्यम्। रथस्येदं रथ्यम्। 'रथाद्यत्' (पा० सू० ४. ३. १२१) इति यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। अमृता। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। चिकेतत्। 'कित ज्ञाने'। लेटि अडागमः। 'इतश्च लोपः' इति इकारलोपः। जुहोत्यादित्वात् श्लुः। लघूपधगुणः। 'अनुदात्ते च' (पा० सू० ६ १. १९०) इति अभ्यस्तस्याद्युदात्तत्वम्। यद्वृत्तयोगादनिघातः॥

शब्दा०—तिस्रः=तीन, द्यावः=द्युलोक, सवितुः=सवितृ देव की, द्वौ=दो, उपस्था=गोद में, एका=एक, यमस्य=यम के, भुवने=लोक में, विराषाट्=मरे व्यक्तियों का निवास स्थान, आणिम्=धुरा, न=तरह, रथ्यम्=रथ के, अमृता=अमर, अधि तस्थुः=आश्रित हैं, इह=यहाँ, ब्रवीतु=कहे, यः=जो, उ=निश्चित अर्थ का वाचक एक निपात, तत्=उसे, चिकेतत्=जाना है।

हि० अ०—तीन लोक (हैं), (उनमें से) दो सवितृ की गोद में (हैं), एक जो मरे व्यक्तियों का निवास स्थान है, यम के लोक में (है)। (सम्पूर्ण) अमर (प्रकाशमान पदार्थ) रथ के धुरे की तरह उसी पर आश्रित है, (वह) जिसने (सवितृ देव के महत्व को) जाना है यहाँ उसे कहे।

*Trans*—Three (are) the regions, (of them) two in the lap of Savitar and one, the abode of dead ones, in the sphere of Yama (All) the immortals (luminaries) depend (upon him) like an axle pin of a chariot (He) who has known (the greatness of Savitar) let him speak it here

*Notes*—उपस्था—'In the proximity' (Wilson), 'adjacent' (Griffith), 'laps' (Macdonell) Macdonell takes उपस्था as the nom dual, ending in आ which is common in the Vedas Sāyana takes उपस्था in locative sense For sandhi in द्वा उपस्था see Appendix A under *Padavrtti*, the final nasalized syllable in the Samhitā text avoids the possibility of sandhi of उपस्था with एका (which is the initial of a Pāda) विराषाट्—Sāyana explains it by 'विरान् गन्तृन् सहते। प्रेता पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थं, Griffith takes it to mean 'the home of heroes' and Macdonell as 'over coming men' Macdonell takes it as the nom sing of विरासह्, according to him विरा is for वीर, the quantity of the vowel being interchanged for metrical convenience, in the Pada text विराषाट् is not analysed for विरा as an independent word, is never used चिकेतत्—√cit to know perf subju 3rd sing, not unaccented because preceded by यत

वि। सुऽपुर्णः। अन्तरिक्षाणि। अरूयत्। गुभीरऽवेपाः। असुरः। सुऽनीथः॥ क्व। इदानीम्। सूर्यः। कः। चिकेत। कतमाम्। द्याम्। रश्मिः। अस्य। आ। ततान॥७॥

सा० भा०—सुपर्णः शोभनपतन सूर्यस्य रश्मि । 'सुपर्णा इति पञ्चदश रश्मिनामानि' ( नि० १ ५ १५ ) इति तन्नामसु पठितत्वात् । अन्तरिक्षाणि अन्तरिक्षोपलक्षितानि लोकत्रयस्थानानि वि अख्यत् विशेषेण स्थापितवान् प्रकाशितवान् । कीदृशो रश्मि । गमीरवेपाः गम्भीरकम्पन । रश्मे प्रकम्पन चलन केनापि द्रष्टुमशक्यमित्यर्थ । असुरः सर्वेषा प्राणद । तथा चान्यत्र आम्नायते –'सर्वेषा भूताना प्राणनादायोदेति' ( तै० आ० १ १४ १) इति । सुनीथः सुनयन शोभनप्रापण । मार्गप्रकाशनेन अभीष्टदेश प्रापयतीत्यर्थ । तादृशरश्मियुक्त सूर्यः इदानीं रात्रौ क्व कुत्र वर्तते । तदेतद्रहस्य कश्चिचकेत को जानाति । न कोऽपीत्यर्थ । अस्य सूर्यस्य रश्मिः कतमा द्याम् आ ततान क द्युलोक रात्रौ व्याप्तवान् । एतदपि को जानाति ॥ सुपर्ण । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । गमीरवेपा । 'टुवेपृ कम्पने' । असुन् । गभीर वेपो यस्य । पूर्वपदप्रकृतिस्वरत्वम् । असुर । 'असु क्षेपणे' । अस्यति शत्रून् इत्यसुर । 'असेरुरन्' (उ० सू० १.४२) । नित्त्वादाद्युदात्तत्वम् । यद्वा । असून् प्राणान् राति ददातीत्यसुर । 'आतोऽनुपसर्गे क' इति कप्रत्यय । सुनीथ । 'णीञ् प्रापणे' । 'हनिकुषिनीरमिकाशिभ्य क्थन्' (उ० सू० २.१५९) इति क्थन् । प्रादिसमासे थाथादिना उत्तरपदान्तोदात्तत्वम् । इदानीम् । इदशब्दात् सप्तम्यर्थे 'दानीं च' (पा० सू० ५ ३ १८) इति दानींप्रत्यय । 'इदम् इश्' इति इदशब्दस्य इशादेश । प्रत्ययाद्युदात्तत्वम् । सूर्य । 'षू प्रेरणे' । सुवतीति सूर्य । 'राजसूयसूर्य' इत्यादिना रुडागमसहित क्यप्प्रत्ययो निपातित । प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । चिकेत । 'कित ज्ञाने' । लिट् । कतमा किं जातीयाम् । 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा० सू० ५ ३ ९३) इति किं शब्दात् डतमच् । डित्वात् टिलोप । 'चित' इत्यन्तोदात्तत्वम् ॥

शब्दा०—सुपर्णः=सुन्दर किरण, अन्तरिक्षाणि=अन्तरिक्ष लोकों को, व्यख्यत्=प्रकाशित की है, गमीरवेपाः=गम्भीर कम्पनवाली, असुरः=प्राण देनेवाली, सुनीथः=अच्छी प्रकार से मार्ग-दर्शन करनेवाली, क्वः=कहां, इदानीम्=इस समय, सूर्यः=सूर्य, कः=कौन, चिकेत=जाना है, कतमाम्=किस, द्याम्=लोक तक, रश्मिः=किरण, आ ततान=फैली है ।

हि० अ०—गम्भीर कम्पनवाली, प्राण देनेवाली, अच्छी प्रकार से मार्ग दर्शन करनेवाली, (सवितृ देव की) सुन्दर किरण अन्तरिक्ष लोकों को

प्रकाशित की है। किसने जाना है कि सूर्य इस समय कहाँ है तथा उसकी किरण किस लोक तक फैली है ?

*Trans* —The beautiful ray, deep quivering, life-giving, well guiding, has lightened the aerial regions Who has known where is the sun now and to what region his ray has stretched ?

*Notes*—सुपर्णः—The Nighantu (I 5 15) enumerates it in the list of the names of ray Sāyana following the same authority explains it by शोभनपतन सूर्यस्य रश्मि, Griffith takes it to mean 'the sun' and Macdonell as 'bird' (the sun) Bahuvrīhi compd accented on the second member (नञ्सुभ्याम्—Pān VI. 2 172) गभीरवेपाः—'Deep quivering' (Sāyana, Wilson, Griffith), 'of deep inspiration' (Macdonell), वेपा is derived from $\sqrt{vip}$ to tremble, with the suffix असुन् असुरः—See note I 24 14 सुनीथः—'Well directed' (Wilson), 'the gentle leader' (Griffith), 'of good guidance' (Macdonell) Words ending in थ etc, forming the second member of the compd accent the final syllable, if the first member is one of the prefixes (थाथघञ्क्ताजबित्रकाणाम्—Pān VI 2 144) क्वेदानीम्—See Appendix-B under सन्निपात स्व० and कम्पस्व० चिकेत—$\sqrt{cit}$ to know, perf 3rd sing कतमाम्—See notes on कतमस्य (I 24 1) ततान—$\sqrt{tan}$ to stretch, perf 3rd sing

अष्टौ । नि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् ॥ हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥८॥

सा० भा०—पृथिव्याः सम्बन्धिनीः अष्टौ ककुभः प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिशः व्यख्यत् सविता प्रकाशितवान् ।

तथा योजना प्राणिनः स्वस्वभोगेन योजयितॄन् धन्व अन्तरिक्षोपलक्षितान् त्री त्रिसंख्याकान् पृथिव्यादिलोकान् सप्त सिन्धून् गङ्गादिनदीः समुद्रान्वा सविता व्यख्यत्। हिरण्याक्षः। हितरमणीयचक्षुर्युक्तो हिरण्मयाक्षो वा सविता देवः आगात् इहागच्छतु। किं कुर्वन्। दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्नानि दधत् प्रयच्छन्॥ अख्यत्। ख्यातेर्लुङि 'अस्यतिवक्ति' इत्यादिना च्लेः अङादेशः। त्री। 'शेश्छन्दसि बहुलम्' इति शेर्लोपः। धन्व। 'धिवि धवि धवि गत्यर्थाः'। 'इदितो नुम् धातोः' इति नुम्। अस्मात् 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन्। 'सुपां सुलुक्' इति विभक्तेर्लुक्। नलोपः। प्रत्ययस्य नित्त्वादाद्युदात्तत्वम्। योजना। योजयन्ति प्राणिन उपभोगेनेति योजनानि। नन्द्यादिलक्षणो ल्युः। 'णेरनिटि' इति णिलोपः। पूर्ववत् शेर्लोपः। हिरण्याक्षः। हिरण्मयान्यक्षीणि यस्यासौ हिरण्याक्षः। 'बहुव्रीहौ सक्थ्यक्ष्णोः (पा० सू० ५. ४. ११३) इति समासान्तः षच्प्रत्ययः। अगात्। एतेर्लुङि 'इणो गा लुङि' (पा० सू० २.४. ४५) इति गादेशः। 'गातिस्था' इति सिचो लुक्। दधत्। शतरि 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः। 'श्नाभ्यस्तयोरातः' इति आकारलोपः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। दाशुषे। 'दाश्वान्साह्वान्' इत्यादिना क्वसुप्रत्ययान्तो निपातितः। चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम्। परपूर्वत्वम्। 'शासिवसिघसीनां च' इति षत्वम्। वार्याणि। 'वृङ् संभक्तौ'। ऋहलोर्ण्यत्। 'ईडवन्द' इत्यादिनाद्युदात्तत्वम्॥

शब्दा०—अष्टौ=आठ, व्यख्यत्=प्रकाशित किया है, ककुभः=दिशाओं को, पृथिव्याः=पृथिवी के, त्री=तीन, धन्व=लोकों को, योजना=प्राणियों के, सप्त=सात, सिन्धून्=नदियों को, हिरण्याक्षः=स्वर्णमयी आंख वाले, सविता=सवित्, देवः=देव, आ अगात्=आये हैं, दधत्=धारण करते हुये, रत्ना=बहुमूल्य धन, दाशुषे=हवि प्रदान करने वाले के लिये, वार्याणि =वरणीय।

हि० अ०—पृथिवी की आठ दिशाओं, प्राणियों के तीन लोकों तथा सात नदियों को (सवित् देवता ने) प्रकाशित किया है। स्वर्णमयी आंख वाले सवित् देव पूजा करनेवाले के लिये वरणीय धन को धारण करते हुये आये हैं।

*Trans.*—(He) has lightened the eight quarters of the earth, three desert regions of the living beings and the seven rivers. Golden-eyed God Savitar has come bearing desirable wealth for the worshippers.

*Notes*—योजना—Acc. plu. of योजन; according to Sāyaṇa योजना means living beings (योजना प्राणिनः । स्वस्वभोगेन योजयितृन्); Macdonell conjectures the number of योजन as thirty, this number being expressed in I. 123.8, where dawns are said to have traversed this distance. अगात्—$\sqrt{}$*gā* to go, root-aorist, 3rd. sing. दधत्—$\sqrt{}$*dhā* to put, pres. part., accented on the red. syllable (अभ्यस्तानामादिः—Pān VI. 1.189). दाशुषे—Dative, sing from $\sqrt{}$*dāś* to worship, with the suffix क्वसु. वार्याणि—$\sqrt{}$*vṛ* to choose, with the suffix ण्यत्; accented on the first syllable (ईडवन्दवृशंसदुहां ण्यतः—Pāṇ VI. 1.214)

हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति । अन्तः । ईयते ॥ अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ॥९॥

सा० भा०—हिरण्यपाणिः सुवर्णमयहस्तयुक्तः । यद्वा । यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान् । विचर्षणिः विविधदर्शनयुक्तः । विचर्षणिः पश्यत्यर्थः । 'विचर्षणिः विश्वचर्षणिः' नि० ३.११.६) इति तन्नामसु पाठात् । सविता देवः उभे द्यावापृथिवी अन्तः उभयोर्लोकयोर्मध्ये ईयते गच्छति । अमीवां रोगादिबाधाम् अप बाधते सम्यक् निराकरोति । तथा सूर्यं वेति गच्छति । यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । कृष्णेन तमसः कर्षकेण निवर्तकेन रजसा तेजसा द्याम् आकाशम् अभि ऋणोति सर्वतो व्याप्नोति ॥ द्यावापृथिवी । 'दिवसश्च पृथिव्याम्' (पा सू० ६. ३. ३०) इति चशब्दात् दिवशब्दस्य द्यावादेशः । 'देवताद्वन्द्वे च' इत्युभयपदप्रकृतिस्वरत्वम् । 'नोत्तरपदेऽनुदात्तादौ' (पा० सू० ६. २. १४२) इति न निषेधः, 'अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदस्तत्वात् । ईयते । 'ईङ् गतौ' । 'तिङ्ङतिङः' इति निघातः । बाधते । बाधते च वेति चेति समुच्चयार्थप्रतीतेः चशब्दस्याप्रयोगात् 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । वेति । 'वी गतिप्रजनकान्त्यशनखादनेषु' । अदादित्वात् शपो लुक् । तिपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्यप्येषा द्वितीया तथापि तिङः परत्वात् निघाताभावः । ऋणोति ।

'ऋणु गतौ' तनादित्वात् उ । तनादिषु करोतेरेव गुणो नान्येषामिति आपि-शालिमतेन गुणाभाव ॥

शब्दा०—हिरण्यपाणिः=स्वर्णहस्त वाले, सविता=सवितृ, विचर्षणिः=सबको देखने वाले, उभे=दोनो, द्यावापृथिवी=आकाश तथा पृथिवी, अन्तः=बीच में, ईयते=जाते है, अमीवाम्—रोग को, अप बाधते=दूर करते है, वेति=जाते है, सूर्यम्—सूर्य के पास, कृष्णेन=अन्धकार युक्त, रजसा=लोकसे, द्याम्=आकाश को, अभि ऋणोति=व्याप्त करते हैं ।

हि० अ०- स्वर्णहस्तवाले, सबको देखने वाले, सवितृ, दोनो आकाश तथा पृथिवी के बीच विचरण करते हैं । रोग को दूर करते हैं, सूर्य के पास जाते हैं, अन्धकार युक्त लोक से (होकर) द्युलोक को व्याप्त करते हैं ।

*Trans* —Golden handed, all seeing Savitar goes in the interior of both heaven and earth (He) drives away the disease, approaches the sun, traverses the sky through darksome region

*Notes*—हिरण्यपाणि —Golden handed or goldful handed, Bahuvrihi compd accented on the first member उभे—ए as dual ending is Pragrhya hence इति in the Pada text द्यावापृथिवी—The word दिवस is substituted by द्यावा when it is compounded with पृथिवी (दिवसश्च पृथिव्याम् Pān VI 3 30) For accent see note on मित्रावरुणा (I 35 1) Final ई as dual ending is Pragrhya, hence, इति in the Pada-text ईयते—√i to go, mid perf 3rd sing बाधते—√badh to obstruct, pres mid 3rd. sing, not unaccented because the conjunctive च between बाधते and वेति has been dropped (चादिलोपे विभाषा Pān VIII 1 63) वेति—√vī to go, pres 3rd. sing, not unaccented because it begins a new sentence अभि ऋणोति—√r with अभि to surround, pres 3rd. sing

हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् ।

यात । अर्वाङ् ॥ अपऽसेधन् । रक्षसः । यातुऽधानान् । अस्थात् । देवः । प्रतिऽदोपम् । गृणानः ॥१०॥

सा० भा०—हिरण्यहस्त असुर प्राणदाता सुनीथ सुष्ठु नेता प्रशस्य इत्यर्थ । 'सुनीथ पाक' (नि० ३ ८ ७) इति प्रशस्यनामसु पाठात् । सुमृळीक सुष्ठु सुखयिता स्ववान् धनवान् अर्वाङ् अभिमुख कर्मदेशे गच्छतु । किञ्चाय देव प्रतिदोषं प्रतिरात्रि गृणान स्तूयमान अस्थात् स्थितवान् । कि कुर्वन् । रक्षस बाधकत्वेन रक्षणनिमित्तभूतान् 'रक्षो रक्षितव्यमस्मात्' (निरु० ४ १८) इति यास्क । यातुधानान् असुरान् अपसेधन् निराकुर्वन् ॥ हिरण्यहस्तावयो गता । सुमृळीक । सुष्ठु मृळीक सुख यस्यासौ तयोक्त । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । स्ववान् । स्वम् अस्यास्तीति स्ववान् । 'मादुपधाया' इति वत्वम् । सहिताया नकारस्य 'दीर्घादटि समानपादे' इति रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकार । रोयत्वम् । यलोपश्च । अपसेधन् । 'षिधु गत्याम्' । शप पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्षस । 'रक्षपालने' इत्यस्मात् अपादाने औणादिक असिप्रत्यय । यद्वा । रक्षन्त्यनेनेति रक्षो बलम् । करणेऽसुन् । तदेषामस्तीति रक्षस्विन । मत्वर्थप्रत्ययलोपश्छान्दस । प्रत्ययस्वर । यातुधानान् । 'यत निकारोपस्कारयो' । तस्मात् ण्यन्तात् औणादिको भावे उप्रत्यय । यातवो यातना एषु धीयन्ते इति यातुधाना । अधिकरणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्थात् । 'गातिस्था' इति सिचो लुक् । प्रतिदोषम् । दोषादोषाम् । प्रति वीप्सालक्षणे यथार्थे । अव्ययीभाव । गृणान । 'गृ शब्दे' । कर्मणि लट शानच् । व्यत्ययेन श्ना । 'प्वादीना ह्रस्व' इति ह्रस्वत्वम् । 'चित' इत्यन्तोदात्तत्वम् ॥

शब्दा०—हिरण्यहस्त =स्वर्णहस्तवाले, असुर =प्राण देने वाले, सुनीथ =सुन्दर मार्ग दर्शन करनेवाले, सुमृळीक =दयालु, स्ववान्=धनवान, प्रकाशवान यातु=आयें, अर्वाङ्=हमारी तरफ, अपसेधन्=दूर करते हुये, रक्षस =राक्षसों को यातुधानान्=मायावियों को, अस्थात् =स्थित हुये हैं, देव =देव, प्रतिदोषम्=प्रतिसन्ध्या को, गृणान =स्तूयमान ।

हि० अ०—स्वर्णहस्तवाले, प्राणदात्, सुन्दर मार्ग-दर्शक, दयालु तथा धनवान सवितृ हमारी तरफ (यज्ञ में) आवें । प्रति सन्ध्या स्तूयमान देव (सवितृ) राक्षसो तथा मायावियों को दूर करते हुये स्थित हुये हैं ।

*Trans.*—May the golden-handed, life-giving, well-guiding, most gracious, prosperous Savitar come to (the sacrifice). Conquering the demons and sorcerers God (Savitar) has mounted, being worshipped at every evening.

*Notes*—सुमृळीकः—Of good grace; Bahuvrīhi compd. accented on the second member (नञ्सुभ्याम्—Pāṇ VI. 2.172). स्ववान्—Roth takes स्ववान् to be nom. sing. of सु-अवस् 'giving good help. The final न् is dropped, if it is preceded by आ and followed by a vowel, the penultimate vowel being nasalized. But the word स्ववान् drops the final न् and nasalizes its penultimate vowel even though it is not followed by a vowel. This is the special case of आन्पदवृत्ति as enumerated in the Rg. Prāt. (IV. 68). अपसेधन्—$\sqrt{sidh}$ to repel, pres. part; for accent see निवेशयन् (I. 35.2). अस्थात्—$\sqrt{sthā}$ to stand, root-aorist 3rd. sing.; not unaccented because it begins the pāda. प्रतिदोषम्—Macdonell construes it with अस्थात् 'has arisen towards eventide' while Sāyaṇa, Wilson, and Griffith take प्रतिदोषम् as an adverb of time and each construes it with गृणानः. Governing compd. accented on the final syllable of the second member गृणानः—$\sqrt{gṛ}$ to sing pres. part.

ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः । सुऽकृताः । अन्तरिक्षे ॥ तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ॥११॥

सा॰ भा॰—हे सवितः ते तव पन्थाः मार्गाः पूर्व्यासः पूर्वसिद्धाः अरेणवः धूलिरहिताः अन्तरिक्षे सुकृताः सुष्ठु संपादिताः । सुगेभिः सुष्ठु गन्तुं शक्यैः तेभिः

पथिभिः तैर्मार्गैरागत्य अद्य अस्मिन् दिने नः अस्मान् रक्ष च पालनमपि कुरु । तथा हे देव नः अस्मान् अनुष्ठातृन् अधि ब्रूहि च देवानामग्रेऽधिकत्वेन कथय च ॥ पन्थाः । 'सुपां सुलुक्' इति जसः सुः । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । पूर्व्यासः । पूर्वैः कृताः पूर्व्याः । 'पूर्वैः कृतमिनियौ च' (पा० सू० ४. ४. १३३) इति यः । प्रत्ययस्वरः असुगागमः । अरेणवः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सुकृताः । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । सुष्ठु गच्छन्त्येष्विति सुगाः । 'सुदुरोरधिकरणे' (पा० सू० ३. २. ४८. ३) इति गमेर्डप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्ष । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः ॥

शब्दा०— ये=जो, ते=तुम्हारे, पन्थाः=मार्ग, सवितः=हे सवितृ, पूर्व्यासः=पहिले के, अरेणवः=धूलि रहित, सुकृताः=अच्छी प्रकार से निर्मित, अन्तरिक्षे=अन्तरिक्ष में, तेभिः=उनसे, नः=हमारी, अद्य=आज, पथिभिः=मार्गों से, सुगेभिः=सुगम, रक्ष=रक्षा करो, च=और, नः=हमारी, च=और, अधि ब्रूहि=तरफ से बोलो, देव=हे देव ।

हि० अ०—जो सवितृ, तुम्हारे प्राचीन तथा धूलि-रहित मार्ग जो अन्तरिक्ष में अच्छी प्रकार से निर्मित हैं, आज उन्हीं सुगम मार्गों से (यहां आकर) मेरी रक्षा करो, तथा हे देव हमारी तरफ से बोलो ।

*Trans*—O, Savitar, thy ancient (and) dustless pathways which are well-fashioned in the heaven, today (coming) by those paths, good to travel, protect us ; ■ God speak for us

*Notes*—पन्थाः—The word पथ coming with pronoun accents the first syllable (पथिमथोः सर्वनाम स्थाने Pāṇ. VI. 1 19) सवितः—Vocative, not coming in the beginning of a Pāda, is unaccented. The visarjanīya is rhotasized , hence, इति in the Pada-text. पूर्व्यासः—Nom. plu. in आसस् from the stem पूर्व्य originally पूर्वैः. अरेणवः—Bahuvrīhi compd. accented on the second member (नञ्सुभ्याम् Pāṇ VI. 2.172). For sandhi in पूर्व्यासोऽरेणवः see Appendix A under *Abhinihita(visarjanīya)*. सुकृताः–Prep.

uninterruptedly compounded with word ending in suffix क्त in objective sense is accented. (गतिरनन्तरः Pāṇ VI.2.49). सुगेभी—The penultimate vowel of a short rhotasized visarjanīya is lengthened, if र् follows, while the visarjanīya is dropped (see Appendix 'A' under *Niyata Sandhi*); Bahuvrīhi compd. accented on the second member. रक्षा- –The second syllable is lengthened (द्व्यचोऽतस्तिङः—Pāṇ VI. 3. 135); √*rakṣ* to protect, impv. 2nd. sing. अधिब्रूहि—√*brū* with अधि to speak on behalf of, impv. 2nd. sing.

---

'कद्ध नूनम्' इति पञ्चदशर्चं तृतीय सूक्तम्। घोरपुत्र कण्व ऋषि, 'ऋषिश्चान्यस्मात्' इति परिभाषितत्वात्। पूर्वसूक्ते मारुत हि' इत्युक्तत्वादिदमपि मरुद्देवताकम्। 'गायत्र तु' इत्युक्तत्वात गायत्रीच्छन्दस्कम। 'कद्ध' इत्यनुक्रमणिका। विनियोगो लैङ्गिक॥

कत्। ह्। नूनम्। कधऽप्रियः। पिता। पुत्रम्। न। हस्तयोः॥
दधिध्वे। वृक्तऽबर्हिषः॥१॥

सा० भा०—हे मरुत कद्ध कदा खलु नूनम् अवश्य हस्तयो दधिध्वे यूयमस्मान् हस्ते धारयथ। तत्र दृष्टान्त। पिता पुत्रं न हस्तयोः। यथा लोके पिता हस्तयो स्वकीय पुत्र धारयति तद्वत्। कीदृशा मरुत। कधप्रियः स्तुतिप्रीता वृक्तबर्हिषः। वृक्त छिन्न बर्हिदर्भो येषा मरुता यजमानाय ते मरुत तथाविधा। कत कदा। 'द्वौ चापरो वर्णविकारनाशौ' (का० ६ ३ १०९) इत्युक्तत्वात आकारलोप। कधप्रिय। कधा स्तुति। तया प्रीणन्तीति कधप्रिय। 'प्रीञ् प्रीतौ'। क्विप्। पूर्वपदस्य 'ङ्यापो सज्ञाच्छन्दसोर्बहुलम्' (पा० सू० ६ ३ ६३) इति ह्रस्वत्वम्। धकारश्छान्दस। आमन्त्रितनिघात। दधिध्वे। दधाते 'छन्दसि लुङ्लङ्लिट' इति वर्तमाने लिट। कृपादिनियमात् इट। प्रत्ययस्वर वृक्तबर्हिष। आमन्त्रितनिघात॥

शब्दा०—कत्=किस समय, कब ह्=निश्चित अर्थ का वाचक एक निपात, नूनम्=निश्चित रूप से कधप्रियः=ओ स्तुतिप्रेमी, पिता=पिता, पुत्रम्=पुत्र को, न=तरह, हस्तयोः=दोनों हाथो में, दधिध्वे=धारण करोगे, वृक्तबर्हिष=ओ (मरुतो) जिनके लिये पवित्र दूर्वा बिछाई गई है।

हि० अ०—ओ स्तुति प्रेमी ओ (मरुतो) जिनके लिये पवित्र दूर्वा बिछाई गई है, कब अपने दोनों हाथो में निश्चित रूप से (हमें) धारण करोगे, जिस प्रकार पिता पुत्र को (धारण करता है)।

*Trans* O (Maruts), fond of praise, for whom sacred grass is trimmed, when will you take (us) surely, by both hands, as a father does his son

*Notes*—कत्—For कदा; final आ is dropped. कधप्रियः—Sayana explains it by 'कधा स्तुतिः तया प्रीणन्तीति कधप्रियः' Griffith takes it as an adjective of पिता and renders 'dear father'; vocative, not at the beginning of the Pāda, is unaccented (आमन्त्रितस्य च Pāṇ. VIII. 1.19). दधिध्वे —√*dhā* to put, mid. perf. 3rd. plu.; not unaccented because it begins the Pāda. वृक्तबर्हिष--वृक्त is the past part; of √*vrj* to twist; Bahuvrihi compd. in vocative.

क्व । नूनम् । कत् । वः । अर्थम् । गन्त । दिवः । न । पृथिव्याः ।
क्व । वः । गावः । न । रण्यन्ति ॥२॥

सा० भा०—हे मरुतः नूनम् इदानीं क्व यूयं कुत्र स्थिताः । कत् कदा वः युष्माकम् अर्थम् अरणं देवयजनदेशे गमनम् । विलम्बं मा कुरुतेत्यर्थः । दिवः गन्त द्युलोकादागच्छत । पृथिव्याः न गन्त भूलोकान्मा गच्छत । वः युष्मान् क्व रण्यन्ति । देवयजनरूपायाः पृथिव्या अन्यत्र कुत्र शब्दयन्ति । यजमानाः स्तुवन्ति । तत्र दृष्टान्तः । गावो न । यथा गावो रण्यन्ति शब्दयन्ति तद्वत् ॥ क्व । किंशब्दात् सप्तम्यन्तात् 'किमोऽत्' (पा० सू० ५.३.१२) इति अत्प्रत्ययः । 'क्वाति' (पा० सू० ७.२.१०५) इति किमः क्वादेशः । 'तित्स्वरितम्' इति स्वरितत्वम् । अर्थम् । 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' (उ० सू० २.१६१) इति भावे थन् । नित्त्वादाद्युदात्तत्वम् । गन्त । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । थादेशस्य तस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । अत एव ङित्त्वाभावात् 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपो न भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । दिवः । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । पृथिव्याः । 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । रण्यन्ति । रण्वतिः शब्दार्थः । व्यत्ययेन श्यन् ॥

शब्दा०—क्व=कहाँ, नूनम्=अब, कत्=कब, वः=तुम लोगों का, अर्थम्-लक्ष्य की ओर गमन, गन्त=जाओ, दिवः=द्युलोक से, न=नहीं, पृथिव्याः=पृथिवी से, क्व=कहाँ, वः=तुम्हारे (यजमान), गावः=गायों की, न=तरह, रण्यन्ति=शब्द कर रहे हैं ।

हि० अ०—इस समय कहां (स्थित हो) ? तुम लोगों का लक्ष्य की तरफ गमन कब होगा ? द्युलोक से जावो (किन्तु) पृथिवी से मत जावो। तुम्हारे (यजमान) गायों की तरह कहाँ शब्द कर रहे हैं ?

*Trans.*—where now, when (will you go) to your destination ? Go from the heaven, not from the earth. Where do your (worshippers) sing (for you) like kine ?

*Notes*—क्व—From किम् with the suffix अत्; the latter, being तित्, is svarita (तित्स्वरितम् Pāṇ. VI. 1.185). अर्थम्—From $\sqrt{r}$ to go with the suffix थन्; words, ending in the suffix थन् accent the first syllable. गन्त—$\sqrt{gam}$ to go, root-aorist, impv. 2nd. plu. not unaccented because it begins the Pāda. A verb consisting of two syllables, lengthens its final syllable in the Saṁhitā-text (see notes on रक्ष (I. 35.11). रण्यन्ति—$\sqrt{ran}$ to rejoice, pres. 3rd plu. गन्ता दिवो न पृथिव्याः—Wilson following Sāyaṇa renders; 'pass from heaven, not from the earth'. According to Griffith, 'go ye in heaven and not on earth'. क्व वो गावो न रण्यन्ति—Wilson renders 'where do they who worship you cry (to you) like cattle ? According to Griffith, 'where do your cows disport themselves' ?

क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता । क्वो३इति । विश्वानि । सौभगा ॥३॥

सा० भा०—हे मरुतः वः युष्माकं संबन्धीनि नव्यांसि नवतराणि सुम्ना प्रजापश्वादिरूपाणि धनानि 'प्रजा वै पशवः सुम्नम्' (तै० सं० ५.४.६.६) इति श्रुत्यन्तरात्। क्व कुत्र वर्तन्ते। तथा सुविता शोभनानि प्राप्याणि मणिमुक्तादीनि भवदीयानि क्व कुत्र वर्तन्ते। विश्वानि सर्वाणि सौभगा सौभाग्यरूपाणि गजाश्वादीनि क्वो कुत्र वा वर्तन्ते। भवदीयैः सुम्नादिभिः

सर्वं सहागन्तव्यमित्यर्थ । सुम्ना । 'शेश्छन्दसि बहुलम्' इति शेर्लोप । नव्यासि । नवशब्दात् ईयसुनि ईकारलोपश्छान्दस । सुविता । सुष्ठु इतानि सुवितानि । 'तन्वादीना छन्दसि बहुलमुपसंख्यानम्' (पा० सू० ६ ४ ७७ १) इति उवङादेश । सौभगा । सुभगान्मन्त्रे' (पा० सू० ५ १ १२९ ग) इति तस्य भाव इत्यर्थे अञ् । पूर्ववत् शेर्लोप ॥

शब्दा०—क्व=कहाँ, वः=तुम्हारे, सुम्ना=धन, नव्यासि=नये, मरुतः=ओ मरुतो क्व=कहाँ, सुविता=मणिमुक्तादि धन, क्व=कहाँ, विश्वानि=सम्पूर्ण, सौभगा=गजाश्वादिरूपी धन ।

हि० अ०—तुम्हारे (प्रजापश्वादिरूपी) नये धन कहाँ हैं ? ओ मरुतो, (मणिमुक्तादि) धन कहाँ हैं ? सम्पूर्ण (गजाश्वादिरूपी) सौभाग्य कहाँ हैं ?

*Trans* —Where are your new treasures ? O Maruts, where the precious (riches) ? Where all the fortunes ?

*Notes*—क्वो—(=क्व+उ); final ओ of a word which is not the first member of the compd , is called pragrhya (अपूर्वपदान्तगश्च—Rg Prāt I 70) , hence, इति in the Pada text

यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥४॥

मा० भा०—हे पृश्निनामकधेनुपुत्रा मरुत यूय यद्यपि मर्तास मनुष्या स्यातन भवेत तथापि व युष्माक स्तोता यजमान अमृतः स्यात् देवो भवेत् ॥ पृश्निमातर । पृश्निर्माता येषा ते। समासान्तविधेरनित्यत्वात् 'नद्युतश्च' (पा० सू० ५ ४ १५३) इति कबभाव । मर्तास । 'असिहसि' इत्यादिना म्रियते त प्रत्यय । 'आज्जसेरसुक्' । स्यातन । अस्तेर्लिङि तस्य 'तप्तनप्तनथनाश्च' इति तनादेश । यासुट उदात्तत्वम् । अमृत । 'नञो जरमरमित्रमृता' इत्युत्तरपदाद्युदात्तत्वम् ॥

शब्दा०—यत्=यदि यूयम्=तुमलोग, पृश्निमातरः=ओ पृश्नि के पुत्र, मर्तासः=मर्त्य, मनुष्य, स्यातन=हो जावो, स्तोता=प्रशंसक, वः=तुम्हारा, अमृतः=अमर, स्यात्=हो जाय ।

हि॰ अ॰—ओ पृश्नि के पुत्र, यद्यपि तुम मर्त्य हो (किन्तु) तुम्हारा प्रशसक अमर हो जाय ।

*Trans* —O son of Pṛśni although you are mortals, let your worshipper become immortal

*Notes*—पृश्निमातरः—Having Pṛśni as their mother, Maruts are called the son of Pṛśni, the personification of sky Bahuvrihi compd in vocative स्यातन—√*as* to be, opt, 2nd plu, not unaccented because preceded by यत् स्यात्—√*as* to be, opt 3rd, sing

मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः । पथा । यमस्य । गात् । उप ॥४॥

सा॰ भा॰—हे मरुत वः युष्माक जरिता स्तोता अजोष्यः असेव्य मा भूत् । तत्र दृष्टान्त । मृगो न यवसे । यथा तृणे भक्षणीये मृग कदाचिदप्य सेव्यो न भवति किंतु सर्वदा तृण भक्षयति तद्वत् किं च स स्तोता यमस्य पथा यमलोकसबन्धिमार्गेण मा उप गात् मा गच्छतु । तस्य मरण मा भूदित्यर्थ ॥ जरिता । 'जृष् वयोहानौ' । स्तुतिकर्मेति (निरु॰ १० ८) यास्क । तृचि इडागम । चित्त्वादन्तोदात्तत्वम् । भूत् । लुङि 'गातिस्था' इति सिचो लुक् । 'न माङ्योगे' इति अडभाव । अजोष्य । 'जुषी प्रीतिसेवनयो' । 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पथा । तृतीयैकवचने 'भस्य टेर्लोप' (पा॰ सू॰ ७ १ ८८) इति टिलोप । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । गात् । एतेर्लिङि इणो गा लुङि' (पा॰ सू॰ २ ४ ४५) इति गादेश । 'गातिस्था' इति सिचो लुक् । पूर्ववत् अडभाव ॥

शब्दा॰—मा=नहीं, वः=तुम्हारे, मृगः=मृग, न=तरह, यवसे=क्षेत्र से, जरिता=प्रशसक, भूत्=होवें, अजोष्यः=अलग, पथा=मार्ग पर, यमस्य=यम के, गात्=जावे, उप=पास ।

हि॰ अ॰—तुम्हारा प्रशसक अलग न होवे जैसे मृग क्षेत्र से (अलग नहीं होता) (और न वह) यम के मार्ग पर हो जावे ।

*Trans* —Let your worshipper never be indifferent to you as a deer to the pasture land, nor let (he) go on the path of Yama

*Notes*—Griffith connects this stanza with preceding one. According to him the preceding one is conditional and this a consequential. He renders: 'then never were your praiser loathed like a wild beast in pasture land, nor should he go on yama's path'. Wilson following Sāyaṇa translates, 'never may your worshipper be indifferent to you as a deer (is never indifferent) to pasture, so that he may not tread the path of yama, भूत्—√*bhū* to be, root-aorist injun. 3rd. sing. अजोष्यः—From √*jus* to unite; नञ् compd. accented on the first member (अव्यये नञ्कुनिपातानाम् Vārtika on Pāṇ VI. 2. 2). गात्—√*gā* to go, root-aorist, injun. 3rd. sing.

मो इति । सु । नः । परांऽपरा । निःऽर्ऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह॥६॥

सा० भा०—हे मरुतः नः अस्मान् निर्ऋतिः रक्षोजातिदेवता मो षु वधीत् सर्वथा वधं मा कार्षीत् । कीदृशी । परापरा उत्कृष्टादप्युत्कृष्टा अतिबलेत्यर्थः । अत एव दुर्हणा केनापि हन्तुं दुःशक्या । सा निर्ऋतिः तृष्णया सह पदीष्ट पततु । अस्मदीया तृष्णा बाधिका निर्ऋतिश्च विनश्यत्वित्यर्थः ॥ मो षु णः । 'सुञः' इति षत्वम् । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । दुर्हणा । 'ईषद्दुःसुषु' इत्यादिना हन्तेः कर्मणि खल् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । वधीत् । लुङि हन्तेः 'लुङि च' (पा० सू० २.४.४३) इति वधादेशः । सिचि इडागमः । वधादेशस्य अदन्तत्वात् 'एकाच उपदेशे' इति इट्प्रतिषेधो न भवति । अतो लोपे सति तस्य स्थानिवत्त्वात् 'अतो हलादेः' (पा० सू० ७. २. ७) इति वृद्ध्यभावः । 'इट ईटि' (पा० सू० ८. २. २८) इति सिचो लोपः । पदीष्ट । 'पद गतौ' । आशीर्लिङि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सलोपः । आर्धधातुकत्वात् सुडागमः । प्रत्ययस्वरः । तृष्णया । 'ञितृषा पिपासायाम्' । 'तृषिशुषिरसिभ्यः कित्' (उ० सू० ३. २९२) इति नप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् ॥

शब्दा०—मो=नहीं, सु=सर्वथा, नः=हमें, परापरा=अत्यन्त बलवान,

निर्ऋतिः—पाप देवता दुर्हणा=किसी के द्वारा न मारने योग्य, वधीत् =मारे, पदीष्ट=चली जावे, तृष्णया सह=लोभ के साथ ।

हि० अ० अत्यधिक शक्तिशालिनी, अवध्य निर्ऋति हमें सर्वथा न मारे, लोभ के साथ (वह भी) चली जावे ।

*Trans* —Let not the most powerful Nirrti kill us, let it be destroyed with (our) evil desire

*Notes*—मो—See notes on क्वो (I 38 3) परापरा—Sayana renders it by 'उत्कृष्टादप्युत्कृष्टा अतिबलेत्यर्थः', 'most powerful' (Wilson), 'plague on plague' (Griffith), Iterative compd accented on the first member निर्ऋतिः—See notes on निर्ऋतिम् (I 24 9) वधीत्—$\sqrt{vadh}$ to kill, 'is'—aorist, injun 3rd sing, not unaccented because it begins the Pāda पदीष्ट—$\sqrt{pad}$ to go, root aorist, prec 3rd sing, not unaccented because it begins the Pāda

सुत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् । आ । रुद्रियासः । मिहम् । कृण्वन्ति । अवाताम् ॥७॥

सा० भा० धन्वञ्चित् मरुदेशेऽपि रुद्रियासः रुद्रेण पालितत्वात् तदीया मरुत आ सर्वत अवाता वायुरहिता मिह् वृष्टि कृण्वन्ति कुर्वन्ति तदेतत् सत्यम् । कीदृशा रुद्रियास । त्वेषाः दीप्ता अमवन्तः बलवन्त । मरुता रुद्रपालनमाख्यानेषु प्रसिद्धम् ॥ धन्वन् । 'धिवि रवि धवि गत्यर्था' । इदित्वात् नुम् । 'कनिन्युवृषितक्षि' इत्यादिना कनिन् । नित्वादाद्युदात्तत्वम् । 'सुपा सुलुक्' इति सप्तम्या लुक । रुद्रियास । रुद्रस्येमे रुद्रिया । 'तस्येदम्' इत्यर्थे घ । 'आज्जसेरसुक्' । मिहम् । मिह सेचने' । 'क्विप् च' इति क्विप् । कृण्वन्ति । कृवि हिंसाकरणयोश्च' । 'धिन्विकृण्व्योर च' इति उप्रत्यय, तत्सन्नियोगेन वकारस्य च अकारादेश । अतो लोपेन लुप्तस्य स्थानिवद्भावात लघूपधगुणाभाव ॥

श०दा०—सत्यम्=सत्य रूप से, त्वेषाः=भयानक तेजस्वी, अमावन्तः =शक्तिशाली, धन्वन्=बालूमय स्थान पर, चित्=भी, आ=चारों तरफ

से, रुद्रियास =रुद्र के पुत्र, मिहम्=वर्षा, कृण्वन्ति=करते है, अवातम्=वायुरहित ।

हि० अ०—सत्यरूप से, भयानक तथा शक्तिशाली रुद्र के पुत्र बालूमय स्थान पर भी वायुरहित वृष्टि करते हैं।

*Trans* —Truely, the terrible and mighty sons of Rudra, send down windless rain even on the desert lands

*Notes*—अमावन्तः—Powerful, mighty, the second syllable before the suffix वन्त is lengthened. कृण्वन्ति—$\sqrt{kr}$ to make pres 3rd plu अवाताम्—Bahuvrihi compd. accented on the second member

वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । असर्जि ॥८॥

सा० भा०—वाश्रेव शब्दयुक्ता प्रस्नुतस्तनवती धनुरिव विद्युत् मेघस्था दृश्यमाना सती मिमाति शब्द करोति। विद्युद्वेलाया हि मेघगर्जन प्रसिद्धम्। माता धेनु वत्सं न वत्समिव, सिषक्ति इय विद्युत् मरुत सेवते। सिषक्ति. सेवनार्थ। 'सिषक्तु सचत इति सेवमानस्य' (निरु० ३. २१) इति यास्केनोक्तत्वात्। यत् यस्मात् कारणात् एषां मरुता सबन्धिनी वृष्टिरसर्जि गर्जनसहिते विद्युत्काले वृष्टा भवति, तस्मात् विद्युतो मरुत्सेवनमुपपन्नम्। वाश्रेव। 'वाशृ शब्दे'। 'स्फायितञ्चि' इत्यादिना रक्। मिमाति। 'माङ् माने शब्दे च'। व्यत्ययेन परस्मैपदम्। जुहोत्यादित्वात् श्लु। 'भृञामित्' (पा० सू० ■ ४. ७६) इति अभ्यासस्य इत्वम्। सिषक्ति। षच समवाये'। लटि 'बहुल छन्दसि' इति शप श्लु। 'बहुल छन्दसि' इति अभ्यासस्य इत्वम्। असर्जि। 'सृज विसर्गे'। कर्मणि लुङ्। 'चिण् भावकर्मणो' (पा० सू० ३ १ ६६) इति चिण्। 'चिणो लुक्' (पा० सू० ६ ४. १०४) इति तशब्दस्य लुक्। गुण। अडागम उदात्त। यद्वृत्तयोगादनिघात ॥

शब्दा०—वाश्रेव=रम्भाती गाय की तरह, विद्युत्=विजली, मिमाति=शब्द करती है, वत्सम्=बछड़े का, न=तरह माता=माता, सिसक्ति=पोछा करती हैं यत्=जब, एषाम्=उन लोगों की, वृष्टिः=वर्षा, असर्जि=भेजी जाती है।

हि० अ०—विद्युत् रम्भाती गाय की तरह शब्द करती हैं तथा (वृष्टि करने वाले मरुतों का) पीछा करती हैं जैसे गाय बछड़े का, जब वे वृष्टि करते हैं।

*Trans.*—Lightning roars like a cow, and accompanies (the Maruts) as a cow her calf, when their rain is sent forth.

*Notes*—मिमाति—√*mā* to bellow, pres. 3rd. sing. सिसक्ति—√*sac* to accompany, pres. 3rd. sing. असर्जि—√*srj* to emit, aorist, passive, 3rd. sing.; not unaccented because preceded by यत्.

दिवा । चित् । तमः । कृण्वन्ति । पर्जन्येन । उदऽवाहेन । यत् । पृथिवीम् । विऽउन्दन्ति ॥९॥

सा० भा०—हे मरुतः उदवाहेन उदकधारिणा पर्जन्येन मेघेन सूर्यमाच्छाद्य दिवा चित् अहन्यपि तमः कृण्वन्ति अन्धकारं कुर्वन्ति। यत् यदा पृथिवीं भूमिं व्युन्दन्ति विशेषेण क्लेदयन्ति तदानीमतिवृष्टिकाले तमः कुर्वन्तीति पूर्वत्रान्वयः। उदवाहेन। उदकानि वहतीति उदवाहः। 'कर्मण्यण्'। मेघविशेषस्येयं संज्ञा। 'उदकस्योदः संज्ञायाम्' (पा० सू० ६. ३. ५७) इति उदकशब्दस्य उदभावः। कृदुत्तरपदप्रकृतिस्वरत्वम्। व्युन्दन्ति। 'उन्दी क्लेदने'। रुधादित्वात् श्नम्। 'श्नान्नलोपः' (पा० सू० ६. ४. २३) इति नलोपः। यद्वृत्तयोगादनिघातः॥

शब्दा०—दिवा=दिन में, चित्=भी, तमः=अन्धकार, कृण्वन्ति=करते हैं, पर्जन्येन=बादल से, उदवाहेन=पानी भरे हुये, जलवाही, यत्=जब, पृथिवीम्=पृथिवी को, व्युन्दन्ति=आप्लावित करते हैं।

हि० अ०—जलवाही मेघ से दिन में भी अन्धकार फैलाते हैं, जब पृथिवी को जल से आप्लावित करते हैं।

*Trans*—They spread darkness with water-bearing cloud, even in day time when they sprinkle the earth.

*Notes*—उदवाहेन—Final क of उदक is dropped (उदकस्योदः संज्ञायाम्—Pāṇ. VI.3.57); वाहेन is instr., sing of वाह from

√*vah* to carry with the suffix अण्, Tatpurusa compd, having second member ending in कृत्, accents the second member व्युन्दन्ति —√*ud* to wet, pres 3rd, plu, not unaccented because preceded by यत्

अध॑ । स्व॒नात् । म॒रुता॑म् । विश्व॑म् । आ । सद्म॑ । पार्थि॑वम् । अरे॑जन्त । प्र । मानु॑षाः ॥१०॥

सा० भा०—मरुतां सबन्धिन स्वनात् अध ध्वनेर्गर्जनरूपादनन्तर पार्थिवं पृथिवीसबन्धि विश्व सद्म सर्वं गृहम् आ समन्तात् अरेजत इति शेष । तथा मानुषा गृहवर्तिनो मनुष्या अपि प्र अरेजन्त प्रकर्षेण कम्पितवन्त ॥ अध । छान्दस धत्वम् । सद्म । षद्लृ विशरणगत्यवसादनेषु' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । पार्थिवम् । पृथिव्या सबन्धि । 'पृथिव्या ञाञौ' (पा० सू० ४ १. ८५ २) इति प्राग्दीव्यतीय अञ् प्रत्यय । ञित्त्वादाद्युदात्तत्वम् । अरेजन्त । रेजृ कम्पने' ।

शब्दा०—अध=बाद स्वनात्=शब्द होने के, मरुताम्=मरुतो के, विश्वम्=सम्पूर्ण, आ=चारो तरफ से, सद्म=गृह, प्र अरेजन्त=अत्यधिक रूप से काप जाते है मानुषा =मनुष्य ।

हि० अ०—मरुतो के शब्द पर सम्पूर्ण पार्थिव गृह तथा मनुष्य अत्यधिक रूप से काप जाते हैं ।

*Notes*—अरेजन्त—√*rej* to tremble, mid impf 3rd plu, not unaccented because it begins the Pada

*Trans*—All the earthly houses and men tremble at the roaring of the Maruts

मरु॑तः । वी॒ळु॒पा॒णि॒ऽभिः॑ । चि॒त्राः । रोध॑स्वतीः । अनु॑ । या॒त॒ । ई॒म् । अखि॑द्रयामऽभिः ॥११॥

सा० भा०—हे मरुतः यूय वीळुपाणिभि दृढहस्तै सहिता सन्त रोधस्वतीरनु कूलयुक्ता नदीरनुलक्ष्य अखिद्रयामभिः अच्छिन्नगमनै याते गच्छतैव । मरुत । आमन्त्रिताद्युदात्तत्वम् । वीळुपाणिभि । वीडु इति बलनाम 'वीळु च्यौत्नम्' (नि० २ ९ १४) इति तन्नामसु पाठात् । तेन च तद्वान्

लक्ष्यते । वीळवश्च ते पाणयश्च । 'समासस्य' इत्यन्तोदात्तत्वम् । रोधस्वती । 'रुधिर आवरणे' । रुणद्धि स्रोत इति रोध कूलम् । 'रोध कूल निरुणद्धि स्रोत' (निरु० ६ १) इत्युक्तत्वात् । असुनो नित्वादाद्युदात्तत्वम् । तद्युक्ता रोधस्वत्य । 'मादुपधाया' इति मतुपो वत्वम् । उगितश्च' इति ङीप् । मतु ङीपो पित्वादनुदात्तत्वे असुन स्वर एव शिष्यते । यात । 'या प्रापणे' । अदादित्वात् शपो लुक् । ईम । 'चादयोऽनुदात्ता' इत्यनुदात्तत्वम । गुणे 'एकादेश उदात्तेनोदात्त' इत्युदात्तत्वम । अखिद्रयामभि । 'खिद दैन्ये' । 'स्फायितञ्चि' इत्यादिना रक । खिद्र यान्तीति खिद्रयामान । न खिद्रयमान अखिद्रयामान । तैं । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

शब्दा०—मरुतः=ओ मरुतो, वीळुपाणिभिः=मजबूत हाथवाले, चित्राः =सुन्दर, रोधस्वतीः=नदियो को, अनुयात=लक्ष्य करके जावो ईम्=इन, अखिद्रयामभिः=कभी न रुकनेवाली गतिवाले (अश्वो) के साथ ।

हि० अ०—ओ मरुद्गण, मजबूत हाथवाले कभी न रुकनेवाली गति वाले (अपने अश्वो) के साथ सुन्दर नदियो को लक्ष्य कर तुम जावो ।

*Trans* —O Maruts, with (horses) having strong feet and unobstructed in their course, you do go along with beautifully embanked rivers

*Notes*—वीळुपाणिभिः—'With strong hands' (Sayana) with strong hoofed steeds' (Griffith) रोधस्वतीः–Karmadharaya compd accented on the second member (समासस्य—Pan VI 1 223) रोध means bank (रोध कूलम । निरुणद्धि स्रोत —Nir VI 1), a river is called रोधस्वती for it has bank on either side वती is not separated by avagraha in the Pada text—(see मनस्वान् II 2 1) ईम् A particle always unaccented यात—$\sqrt{ya}$ to go impv 2nd sing , not unaccented because it begins the Pāda अखिद्रयामभिः— Unobstructed progress' (Wilson) 'unhindered in their course' (Griffith), नञ् compd accented on the first syllable यामभि from $\sqrt{ya}$ to go

स्थिराः । वः । सन्तु । नेमयः । रथाः । अश्वासः । एषाम् ।
सुऽसंस्कृताः । अभीशवः ॥१२॥

सा० भा०—हे मरुत एषां वः युष्माकं नेमयः रथचक्रवलया स्थिरा सन्तु । तथा रथा अश्वासः अश्वाश्च स्थिरा सन्तु । अभीशव अङ्गुलय, 'अभीशव दीधितय' (नि० २ ५ २०) इति तन्नामसु पाठात् । सुसंस्कृताः अश्वबन्धनरज्जुपरिग्रहणे स्वलङ्कृता सावधाना सन्तु ॥ सुसंस्कृता । सम्पूर्वात् करोते कर्मणि क्त । 'सम्परिभ्याम्' (पा० सू० ६ १.१३७) इति सुट् । पुन सुशब्देन प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अभीशव । अभिपूर्वात् अश्नोते 'कृवापाजि' इत्यादिना उण् । वर्णव्यत्ययेन आकारस्य इकार । उक्त च—'वर्णागमो वर्णविपर्ययश्च' (का० ६ ३ १०९) इति । 'अभीशवो ऽभ्यश्नुवते कर्माणि' (निरु० ३ ९) इति निरुक्तम् ॥

शब्दा०—स्थिरा =स्थिर, वः=तुम्हारे, सन्तु=होवें, नेमयः=रथ के पहिये में लगी लोहे की परिधि, रथा =रथ, अश्वासः=घोड़े, एषाम्= इनकी, सुसंस्कृताः=अच्छी प्रकार से सुसज्जित, अभीशवः=लगाम, अंगुलियां ।

हि० अ०—तुम्हारे (रथ के पहिये में लगी) लोहे की परिधि, रथ तथा अश्व स्थिर होवें, इनकी लगाम अच्छी प्रकार से सुसज्जित हो ।

*Trans* —May your rims, chariots, and horses be firm and their reins be well fashioned

*Notes*—सन्तु—$\sqrt{as}$ to be, impv 3rd plu सुसंस्कृता—past part from $\sqrt{kr}$ with सम् to fashion Compounds having prefixes, प्र etc as the first member, accent the first member अभीशवः—Derived from अभि + $\sqrt{as}$ to attain This word has been enumerated in the synonyms of ray (Nigh I 5 5) and finger (Nigh II 5 20), Griffith takes it to mean 'rein'

अच्छ । वद । तना । गिरा । जरायै । ब्रह्मणः । पतिम् ।
अग्निम् । मित्रम् । न । दर्शतम् ॥१३॥

सा० भा०—हे ऋत्विक्समूह तना तनया देवतास्वरूप प्रकाशयन्त्या गिरा वाचा ब्रह्मणस्पतिं मन्त्रस्य हविर्लक्षणस्यान्नस्य वा पालक मरुद्गणम् अग्निं दर्शतं दर्शनीय मित्रं न मित्रमपि जरायै स्तोतुम् अच्छ आभिमुख्येन वद ब्रूहि । अच्छ । 'निपातस्य च' इति संहितायां दीर्घत्वम् । वद । 'द्व्यचो ऽतस्तिङः' इति संहितायां दीर्घं । तना । 'तनु विस्तारे' । तनोति देवतामाहात्म्य विस्तारयतीति तना । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । तृतीयाया डादेशः । गिरा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । ब्रह्मण० । 'षष्ठ्याः पतिपुत्र' इति संहितायां सत्वम् ॥

शब्दा०—अच्छा=की ओर, वदा=कहो, तना=शरीर से, गिरा=वाणी से, जरायै=स्तुति के लिये, ब्रह्मणस्पतिम्=प्रार्थना के पति, अग्निम्=अग्नि को मित्रम्=मित्र, न=तरह दर्शतम्=दर्शनीय।

हि० अ० मित्र के समान दर्शनीय, प्रार्थना के पति अग्नि को शरीर से तथा वाणी से स्तुति के लिये बुलाओ।

*Trans*—speak for praise, with body and speech to Agni, the lord of prayer, beautiful as Mitra

*Notes*—वदा—$\sqrt{}$*vad* to speak, impv 2nd sing, second syllable is lengthened (See note on रक्षा (I 35 11) जरायै—From $\sqrt{}$*jr* to sing, dative, sing.

मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रम् । उक्थ्यम् ॥१४॥

सा० भा०—हे ऋत्विक्समूह आस्ये स्वकीयमुखे श्लोकं स्तोत्र मिमीहि निर्मित कुरु । त च श्लोक ततन विस्तारय । तत्र दृष्टान्त । पर्जन्य इव । यथा मेघो वृष्टि विस्तारयति तद्वत् । उक्थ्यं शस्त्रयोग्य गायत्रं गायत्रीच्छन्दस्क सूक्त गाय पठ । मिमीहि । माङ् माने । जौहोत्यादिक । व्यत्ययेन परस्मैपदम् । भृञामित् इति अभ्यासस्य इत्वम् । आस्ये । 'असु क्षेपणे' । अस्यते क्षिप्यतेऽस्मिन्निति आस्यम् । कृत्यल्युटो बहुलम् (पा० सू० ३ ३ ११३) इत्यधिकरणे ण्यत् । 'तित्स्वरितम्' इति स्वरितत्वम् । ततन । 'तनु विस्तारे' । लेटि सिपि बहुल छन्दसि इति विकरणस्य श्लु । 'लेटोऽडाटौ' इति अडागम । इतश्च लोप' इति इकारलोपः । गायत्रम् । गायत्र्या सबन्धि । 'तस्येदम्' इति अण् । यद्वा । गायतस्त्रायते इति गायत्रम् । 'आतोऽनुपसर्गे कः' ॥

शब्दा०—मिमीहि=रचना करो, श्लोकम्=श्लोक, आस्ये=मुख में, पर्जन्य इव=बादल की तरह, ततन=फैलावो, गाय=गान करो, गायत्रम्=गायत्री छन्द का, उक्थ्यम्=गाने योग्य ।

हि० अ०—मुख मे श्लोक की रचना करो, बादल की तरह उसे फैलावो; गाने योग्य गायत्री छन्द वाले सूक्तो का गान करो ।

*Trans*—Form hymn in (your) mouth, spread it out as a rainy cloud (spreads the rain), sing Gāyatrī song worthy of recitation

*Notes*—मिमीहि—√*ma* to measure, impv 2nd sing ततन—√*tan* to stretch, perf subju 2nd sing गाय—√*gā* to sing impv 2nd sing ; not unaccented because it begins the Pada उक्थ्यम्—Worthy of recitation, for accent see notes on वीर्याणि (I 32 1)

वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मे इति । वृद्धाः । असन् । इह ॥१५॥

सा० भा०—हे ऋत्विक्समूह मारुतं मरुत्सम्बन्धिनं गणं समूह वन्दस्व नमस्कुरु स्तुहि वा । कीदृशं गणम् । त्वेषं दीप्तं पनस्युं स्तुतियोग्यम् अर्किणम् अन्नोपेतम् । अस्मे अस्माकम् इह अस्मिन् कर्मणि वृद्धा असन् भवत प्रवृद्धा भवन्तु ॥ वन्दस्व । 'वदि अभिवादनस्तुत्यो' । अनुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वर । पनस्युम् । 'पन च' इति स्तुत्यर्थो धातु । असुन् । पन स्तोत्रमात्मन इच्छतीति पनस्यु । 'सुप आत्मन क्यच्' । 'क्याच्छन्दसि' इति उप्रत्यय । अर्किणम् । 'अर्च स्तुतौ' । 'पुंसि संज्ञायाम्' इति घ । अर्कोऽस्यास्तीति अर्की । 'अत इनिठनौ' । असन् । 'बहुलं छन्दसि' इति शपो लुगभाव । 'इतश्च लोप' इति इकार लोप । तिङ्ङतिङ इति निघात ॥

शब्दा० वन्दस्व=वन्दना करो, मारुतम् गणम्=मरुतो के समूह को, त्वेषम्=भयानक, तेजस्वी, पनस्युम्=स्तुति की इच्छा करने वाले, अर्किणम्=पूजा करने योग्य, अस्मे=इस स्तुति में, वृद्धाः=प्रवृद्ध, बढ़े हुये, असन्=होवें, इह=यहां ।

हि० अ०—भयानक, स्तुति की इच्छा करने वाले पूजा करने योग्य मरुद्गणों की वन्दना करो। वे इस (स्तुति) में यहाँ प्रवृद्ध होवें।

*Trans* —Glorify the host of Maruts, the terrible, desiring to be praised, entitled to laudation May (they) be exalted here in this (prayer)

*Notes*—वन्दस्व—√*vand* to glorify, mid impv 2nd sing पनस्युम्—√*pan* to praise, with desiderative suffix स्यु अर्किणम् From √*ṛc* to praise, Griffith takes it to mean 'tuneful' वृद्धाः—Sāyaṇa construes it with असन् and renders 'प्रवृद्धा भवन्तु'; Griffith takes it as noun, meaning 'the strong ones' असन्—√*as* to be, pres subju 3rd plu

'सह वामेन' इति षोडशर्चं पञ्चमं सूक्तम् । प्रस्कण्व ऋषिः । बार्हतत्वात् अयुजो बृहत्यो युजः सतोबृहत्यः । उषा देवता । सह षोळशोषस्यं तु' इति अनुक्रमणिका । प्रातरनुवाके उषस्ये क्रतौ बार्हते छन्दसीदं सूक्तम् । 'अथोषस्यं' इति खण्डे सूत्रितम् 'प्रत्यु अदर्शि सह वामेनेति बार्हतम्' (आश्व० श्रौ० ४ १४) इति । तथा आश्विनशस्त्रेऽप्येतत्सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व० श्रौ० ६ ५) इत्यतिदिष्टत्वात् ॥

सह । वामेन । नः । उषः । वि । उच्छ । दुहितः । दिवः ॥
सह । द्युम्नेन । बृहता । विभाऽवरि । राया । देवि । दास्वती ॥१॥

सा० भा०—हे दुहितर्दिवः द्युदेवतायाः पुत्रि उषः उषःकालदेवते नः अस्मदर्थं वामेन धनेन सह व्युच्छ प्रभातं कुरु । हे विभावरि उषोदेवते बृहता प्रभूतेन द्युम्नेन अन्नेन सह व्युच्छ । हे देवि त्वं दास्वती दानयुक्ता सती राया पशुलक्षणेन धनेन सह व्युच्छ । उच्छ । 'उछी विवासे' । दुहितर्दिवः । 'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यत्र 'परमपि च्छन्दसि' (पा० सू० २ १ २ ६) इति वचनात् दिव इत्यस्य पूर्वाङ्गवद्भावे सति 'आमन्त्रितस्य च' इति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । बृहता । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तेरुदात्तत्वम् । विभावरि । 'भा दीप्तौ' । 'आतो मनिन्' इत्यादिना वनिप् । 'वनो र च' इति ङीप्; तत्सन्नियोगेन नकारस्य रेफादेशः । संबुद्धौ ह्रस्वत्वम् । दास्वती । 'डुदाञ् दाने' । भावे असुन्प्रत्ययः । तदस्यास्तीति दास्वती । 'मादुपधायाः' इति मतुपो वत्वम् । 'उगितश्च' इति ङीप् ॥

शब्दा०—सह=साथ, वामेन=धन के, नः=हमारे लिये, उषः=ओ उषा, व्युच्छ=विविध रूप से प्रकाशित होवो, दुहितर्दिवः=ओ आकाश की पुत्री, सह=साथ, द्युम्नेन=अन्नादिरूप धन के, बृहता=प्रचुर, विभावरि=ओ प्रकाशवाली, राया=पश्वादिरूप धन के, देवि=ओ देवि, दास्वती=देनेवाली ।

हि० अ०—ओ आकाश की पुत्री, उषा, धन के साथ, ओ प्रकाशवती, प्रचुर अन्नरूप धन के साथ, दान देनेवाली ओ देवी, पशुरूप धन के साथ हमारे लिये विविध रूप से प्रकाशित होवो।

*Trans* —O Dawn, the daughter of heaven, shine forth upon us with riches, O, diffuser of light, with abundant food, o goddess, bounteous one, with wealth (consisting of cattle)

*Notes*—वामेन—From √*van* to desire, Griffith takes it to mean 'prosperity,' Geldner as 'good luck' उच्छ—√*vas* to shine, impv 2nd sing दुहितर्दिवः—Words in genitive case followed by words in vocative case are regarded as their part for accentuation (सुबामन्त्रिते पराङ्गवत्स्वरे—Pān II 1 2) In the Vedic language even if the words in genitive occur after the words in vocative, they are regarded as their part for accentuation (परमपि च्छन्दसि—Vārtika on Pān II 1 2) द्युम्नेन—Food (Sāyana), 'glory' (Griffith), 'lustre' (Geldner) According to Yaska द्युम्न means fame or food (द्युम्नं द्योततेर्यशो वान्नं वा—Nir V 5) विभावरि—From वि+√*bha* to shine, by adding the suffix वनिप् or मनिन् which becomes वरी in feminine, Vocative not coming in the beginning of the Pada is unaccented दास्वती—From √*dā* to give, by adding the suffixes असुन् मतुप् and ङीप् in succession

अश्वाऽवतीः। गोऽमतीः। विश्वऽसुविदः। भूरि। च्यवन्त। वस्तवे॥ उत्। ईरय। प्रति। मा। सूनृताः। उषः। चोद। राधः। मघोनाम्॥२॥

सा० भा०—अश्वावतीः बह्वश्वोपेता गोमतीः बहुभिर्गोभिर्युक्ता विश्वसुविदः कृत्स्नस्य धनस्य सुष्ठु लम्भयित्र्य उषोदेवता वस्तवे प्रजानां निवासाय

भूरि प्रभूत यथा भवति तथा च्यवन्त प्राप्ता । हे उषोदेवते मा प्रति मामुद्दिश्य सुनृताः प्रियहितवाच उदीरय ब्रूहि । मघोनां धनवता सबन्धि राधः धन चोद अस्मदर्थं प्रेरय ॥ अश्वावती 'मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ' (पा० सू० ६ ३ १३१) इतिपूर्वपदस्य दीर्घत्वम् । 'वा छन्दसि' इति पूर्वसवर्णदीर्घनिषेधस्य पाक्षिकत्वोक्ते पूर्वसवर्णदीर्घत्वम् । च्यवन्त । च्युङ गतौ' । लङि 'बहुल छन्दस्यमाड्योगेऽपि' इति अडभाव । वस्तवे । 'वस निवासे' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्यय । नित्स्वादाद्युदात्तत्वम् । ईरय । ईर गतौ कम्पने च' । हेतुमति च' इति णिच । चोद । चुद सचोदने' । चौरादिक । लोटि 'छन्दस्युभयथा' इति शप आर्धधातुकत्वात 'णेरनिटि' इति णिलोप । शप पित्वावनुदात्तत्वे धातुस्वर । पादादित्वात् निघाताभाव । मघोनाम् । षष्ठी बहुवचने 'श्वयुवमघोनामतद्धिते' (पा० सू० ६ ४ १३३) इति सम्प्रसारणम् ॥

शब्दा०—अश्वावतीः=अश्वोवाली, गोमतीः=गायोंवाली, विश्व सुविदः=सभी प्रकार के सुन्दर धन देने वाली, भूरि=प्रचुर, अधिक सख्या में, च्यवन्त=प्रवृत्त हुई है, वस्तवे=प्रकाशित करने के लिये, उदीरय=बोलो, प्रति=लिये, मा=मेरे, सुनृता=सुन्दर वाणी, उषः=ओ उषा, चोद=प्रेरित करो, भेजो, राध =धन, मघोनाम्=धनवान दानियों का ।

हि० अ० अश्वोंवाली, गायोंवाली, सभी प्रकार के सुन्दर धन देनेवाली (उषायें) प्रकाशित करने के लिये अधिक सख्या में प्रवृत्त हुई हैं । ओ उषा, मेरे प्रति सुन्दर वाणी बोलो, धनवान दानियो का धन (दक्षिणा के रूप में) हमारे लिये भेजो ।

*Trans* —Abounding with horses, abounding with cows, excellent giver of all (sorts of riches), (the dawns) have sped (themselves) to lighten (us ) O dawns, speak forth excellent words for me , stir (to us) the gifts of bounteous ones

*Notes*—अश्वावतीः —Abounding with horses , the word अश्व lengthens its final syllable when it is followed by व् or य (Rg Prat IX 11 , मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ —Pān VI 3 131) विश्वसुविदः—Griffith takes it to mean 'boon givers of all wealth' , Bloomfield and Geldner derive this word from विश्ववसुविद by

haplology; Peterson renders as 'excellent obtainers of every blessing. च्यवन्त—√*cyu* to move, mid. aorist injun. 3rd. plu. वस्तवे—Dative infinitive in तवे from √*vas* to shine; for accent see सर्तवे (I.32.12). उदीरय —√*īr* with उत् to set in motion, caus. impv. 2nd. sing. सूनृता—'Kind words' (Wilson), 'sacrificial fee' (Grassmann), 'sound of joy' (Griffith), 'sacrificial fee or an auspicious hymn of praise' (Geldner). चोद—√*cud* to impel, impv. 2nd. sing; not unaccented because it begins the Pāda.

उवास । उषाः । उच्छात् । च । नु । देवी । जीरा । रथानाम् ॥
ये । अस्याः । आऽचरणेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः ॥३॥

सा० भा०—उषाः देवी उवास पुरा निवासमकरोत् प्रभातं कृतवतीत्यर्थः । च नु अद्यापि उच्छात् व्युच्छति प्रभातं करोति । कीदृशी देवी । रथानां जीरा प्रेरयित्री उषःकाले हि रथाः प्रेर्यन्ते । अस्याः उषसः आचरणेषु आगमनेषु ये रथाः दध्रिरे धृताः सज्जीकृता भवन्ति तेषां रथानामिति पूर्वेणान्वयः । रथप्रेरणे दृष्टान्तः । श्रवस्यवः धनकामाः समुद्रे न यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयन्ति तद्वत् ॥ उवास । 'वस निवासे' । णलि 'लिट्यभ्यासस्योभयेषाम्' (पा० सू० ६ १.१७) इति अभ्यासस्य संप्रसारणम् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । उच्छात् लेटि आडागमः । 'इतश्चलोपः' इति इकारलोपः । तुदादित्वात् शप्रत्ययः । आगमानुदात्तत्वे प्रत्ययस्वरः । उषाः इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा० सू० ८ १ १८५) इति वचनात् । जीरा । जु इति गत्यर्थः सौत्रो धातुः । 'जोरी च' (उ० सू० १.१८१) इति रक्प्रत्ययः । अस्याः । 'इदमोऽन्वादेशे' इति अशादेशोऽनुदात्तः विभक्तिरपि सुप्त्वादनुदात्तेति सर्वानुदात्तत्वम् । आचरणेषु । चर गत्यर्थः । 'ल्युट् च' (पा० सू० ३.३.११५) इति भावे ल्युट् । लित्स्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । दध्रिरे । 'धृङ् अवस्थाने' । लिटः कित्त्वाद्गुणाभावे यणादेशः । चित्त्वादन्तोदात्तत्वम् । यद्वृत्तयोगादनिघातः ।

श्रवस्यव । श्रूयते इति श्रवो धनम् । असुन् । तदात्मन इच्छन्तीति श्रवस्यव । 'सुप आत्मन क्यच्' । 'क्याच्छन्दसि' इति उप्रत्यय ॥

शब्दा०—उवास=चमकी थी, प्रकाशित हुई थी, उषाः=उषा, उच्छात्=प्रकाश करे, च=और, नु=अब, देवी=देवी, जीरा=प्रेरित करने वाली, रथानाम्=रथो को, ये=जो, अस्याः=इसके, आचरणेषु=आगमन पर, दधिरे=तैयार हो जाते हैं, समुद्रे=समुद्र में, न=तरह, श्रवस्यवः=यश की इच्छा वाले।

हि० अ०—उषा ( पहले ) चमकी थी, आज भी प्रकाश करे। देवी (उषा) रथों को प्रेरित करनेवाली हैं, जो इसके आने पर स्वय तैयार हो जाते हैं जैसे यश की इच्छा वाले समुद्र में।

*Trans*—Dawn has shone forth (in past), may (she) shine now, the goddess is the impeller of the chariots, which are ready at her arrival as the seekers of fame in the ocean

*Notes*—उवास—√*vas* to shine, perf 3rd sing, reduplicated व् has become उ by Samprasāraṇa उच्छात्—√*vas* to shine, pres subju 3rd sing, not unaccented because it begins a new sentence जीरा—Form √*ju* to impel with the suffix रक्. अस्याः—See note on अस्य ( I 32 ॥ ) आचरणेषु—√*car* to move, pres part locative absolute दधिरे—√*dhr* to hold, passive, perf 3rd plu, not unaccented because preceded by ये Scholars render it variously—'harnessed' (Wilson), 'follow their path' (Grassmann) 'fixed their thought on her' (Griffith), 'are held in readiness' (Geldner) 'are restrained or regulated' (Peterson) श्रवस्यवः—From श्रवस् with the desiderative suffix यु ; 'desirous of wealth' (Sāyana), 'glory seekers' (Griffith), 'seeking glory' (Oldenberg) 'racers' or 'racing' (Peterson)

उपः । ये । ते । प्र । यामेषु । युञ्जते । मनः । दानाय । सूरयः ॥
अत्र । अह । तत् । कण्वः । एषाम् । कण्वऽतमः । नाम । गृणाति । नृणाम् ॥४॥

सा० भा०—हे उष: ते तव यामेषु गमनेषु सत्सु ये सूरयः विद्वांस दानाभिज्ञा दानाय धनादिदानार्थं मनः स्वकीय प्र युञ्जते प्रेरयन्ति । दानशीला उदारा प्रभव प्रात काले दातुमिच्छन्तीत्यर्थ । एषा दातुमिच्छता नृणां तत् नाम दानविषये लोकप्रसिद्ध नाम कण्वतमः अतिशयेन मेधावी कण्वः महर्षि अत्राह अत्रैव उष काले गृणाति उच्चारयति । यो दातुमिच्छति पश्च नामग्रहणेन दातार प्रशसति साधुभावप्युष काले एव तथा कुरुत इत्युपस स्तुति ॥ गृणाति । 'गृ शब्दे' । क्रैयादिक । 'प्वादीना ह्रस्व' इति ह्रस्वत्वम । नृणाम । 'नामि' 'नृ च' (पा० सू० ६ ४. ६) इति दीर्घप्रतिषेध । 'न चान्यतरस्याम' (पा० सू० ६ १ १८४) इति विभक्तेरुदात्तत्वम् ॥

शब्दा०—उपः=ओ उषा, ये=जो, ते=तुम्हारे, यामेषु=आगमन पर, प्रयुञ्जते=प्रवृत्त करते हैं मनः=मन को, दानाय=दान के लिये सूरयः =दानी सरक्षक, अत्र=यहा, अह=पूर्ववर्ती शब्द पर बल देने वाला एक निपात तत्=उन, कण्वः=कण्व ऋषि, एषाम्=उनके, कण्वतमः=कण्व-वश में प्रमुख, नाम=नाम, गृणाति=प्रशसा करता है, नृणाम्=मनुष्यो के ।

हि० अ०—ओ उषा तुम्हारे आगमन पर जो सरक्षक दान देने के लिये मन को प्रवृत्त करते हैं, यहा (उसी समय) कण्व वश में श्रेष्ठ कण्व ऋषि उन्हीं दानी मनुष्यो के नाम की प्रशसा करता है ।

*Trans* —O dawn at your arrivals, the patrons who employ their mind to give, here just Kanva, the chief of the Kanva's race glorifies the name of these men

*Notes*—यामेषु —$\surd$*yā* to go, pres part locative absolute प्र युञ्जते—$\surd$*yuj* with प्र to employ, pres 3rd plu, not unaccented because preceded by ये. सूरयः—Nom plu of सूरि Nighantu (III 16 8) enumerates this word in the list of the names of singer. Those who give liberally are called सूरय its apposite

sense being conveyed by अरय (from अरि) कण्वतमः— Chief of the Kanva's race, the superlative degree with noun, is often met with in the R V (cf वृत्रतरम् मातृतमाम् etc ) गृणाति—$\sqrt{gr}$ to sing, pres 3rd sing

आ। घ। योषाऽइव। सूनरी। उषाः। याति। प्रऽभुञ्जती। जरयन्ती। वृजनम्। पत्ऽवत्। ईयते। उत्। पातयति। पक्षिणः ॥५॥

सा० भा०—उषा देवी प्रभुञ्जती प्रकर्षेण सर्वं पालयन्ती आ याति घ प्रतिदिनमागच्छति खलु। तत्र दृष्टान्तः। सूनरी सुष्ठु गृहकृत्यस्य नेत्री योषेव गृहिणीव। कीदृशी उषा वृजनं गमनशील जङ्गम प्राणिजात जरयन्ती जरा प्रापयन्ती। असकृदुषस्यावृत्ताया वयोहान्या प्राणिनो जीर्णा भवन्ति। किंच उष काले पद्वत् पादयुक्त प्राणिजातम् ईयते निद्रा परित्यज्य स्वस्वकृत्यार्थं गच्छति। किं च इयमुषा पक्षिणः उत्पातयति। पक्षिणो ह्युष काले समुत्थाय तत्र तत्र व्रजन्ति। घ। 'ऋचि तुनुघ' इत्यादिना संहितायां दीर्घ। सुष्ठु नयतीति सूनरी। 'णी नये'। 'अच इ' इति इप्रत्यय। गतिसमासे 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (परिभा० २८) इति वचनात् कृदिकारा-दक्तिन' (पा० सू० ४ १ ४५ ग) इति ङीष्। 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम्। 'निपातस्य च' इति पूर्वपदस्य दीर्घ। प्रभुञ्जती। 'भुज पालनाभ्यवहारयो'। लट शतृ। रुधादित्वात् श्नम्। 'श्नसोरल्लोप' इति अकारलोप। 'उगितश्च' इति ङीप्। 'शतुरनुम' इति नद्या उदात्तत्वम्। वृजनम्। 'वृजी वर्जने'। वज्यते इति वृजन प्राणिजातम्। 'कॄपॄवृजिमन्दिनि-धाञ्भ्य क्यु' (उ० सू० २ २३९) इति क्युप्रत्यय। कित्वात् लघूपधगुणा-भाव। योरनादेशे प्रत्ययस्वर। पद्वत्। पत् पाद तदस्यास्तीति पद्वत्। 'झय' इति मतुपो वत्वम्। व्यत्ययेन मतुप उदात्तत्वम्। न च 'स्वरविधौ व्यञ्जनम विद्यमानवत्' (परिभा० ७९) इति व्यञ्जनस्य अविद्यमानवत्त्वे सति 'ह्रस्व-नुड्भ्यां मतुप्' इति मतुप उदात्तत्वमिति वाच्यम्। ह्रस्वादित्येव सिद्धे पुनर्नुड्-ग्रहणसामर्थ्यादिया परिभाषा नाश्रीयते इति वृत्तावुक्तम् (का० ६ १ १७६)। इतरथा हि मरुत्वान् इत्यत्रापि मतुप उदात्तत्व स्यात् ॥

शब्दा०—घा=निश्चित अर्थ का वाचक एक निपात, योषेव=युवती की

तरह, सूनरी=सुन्दरी, उषाः=उषा, आयाति=आती है, प्रभुञ्जती=सबको आनन्दित करती हुई, जरयन्ती=जगाती हुई, वृजनम्=जगम प्राणियो को, पद्वत्=पैरवालों को, ईयते=अपने कार्य पर भेजती है' उत्पातयति=उडाती है, पक्षिणः=पक्षियो को ।

हि० अ०—उषा एक सुन्दरी युवती की तरह सबको आनन्दित करती हुई आती है, सम्पूर्ण प्राणियो को जगाती हुई पैरवालो को (अपने अपने कार्य पर) भेजती है, पक्षियो को (आकाश में) उडाती है ।

*Trans* —The dawn rejoicing (all) comes daily like a lovely lady, waking up all the moving creatures, she causes the footed creatures to go and birds to fly

*Notes*—घा—An emphatic particle like ह; in the Samhitā-text it is often lengthened (ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्—Pān VI 3 133, Rg Prāt VIII 15) सूनरी—The word without any change is used in Bhojapuri, one of the dialects of northern India, in the sense of beautiful or lovely woman, the masculine form being सुनर handsome (cf classical Sanskrit सुन्दर), सु is lengthened (निपातस्य च । अन्येषामपि दृश्यते —Pān VI 3 136 37) प्रभुञ्जती—√*bhuj* to enjoy, pres part जरयन्ती—√*jṛ* to wake up, pres part, Sāyana explains it by 'जरां प्रापयन्ती । असकृदुपस्पावृत्ताया वयोहान्या प्राणिनो जीर्णा भवन्ति', Wilson following Sāyana renders 'conducting to decay', Griffith takes it to mean 'rousing' and Peterson as 'waking to activity' Oldenberg thinks that जरयन्ती has double sense—waking and decaying combined, Geldner takes it to mean waking वृजनम्—From √*vrj* to twist, Grassmann takes it mean 'strength' or 'fulness of power', Geldner as 'patron' or 'a group of sacrificers' or 'party', Parāñjpe thinks it to signify 'society', 'company' 'comrades' ईयते—√*i* to go, mid pres 3rd sing उत् पातयति—√*pat* with उत् to fly caus pres 3rd sing

वि । या । सृजति । समनम् । वि । अर्थिनः । पदम् । न । वेति । ओदती ॥ वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ॥६॥

सा० भा०—या देवता समनं समीचीनचेष्टावन्तं पुरुषं वि सृजति प्रेरयति । गृहारामादिचेष्टाकुशलान् पुरुषान् उषःकाले शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धम् । किंच उषा अर्थिनः याचकान् वि सृजति । तेऽपि ह्युषःकाले समुत्थाय स्वकीयदातृगृहे गच्छन्ति । ओदती उषोदेवता पदं स्थानं न वेति न कामयते । उषःकाले शीघ्रं गच्छतीत्यर्थः । हे वाजिनीवति उषोदेवते ते व्युष्टौ त्वदीये प्रभातकाले पप्तिवांसः पतनयुक्ता वयः पक्षिणः नकिः आसते न तिष्ठन्ति । किन्तु स्वस्वनीडादिनिर्गत्य गच्छन्तीत्यर्थः ॥ सृजति । 'सृज विसर्गे' । तुदादित्वात् शः । तस्य ङित्वात् लघूपधगुणाभावः । प्रत्ययस्य पित्वादनुदात्तत्वे विकरणस्वरः । यद्वृत्तयोगादनिघातः । ओदती । 'उन्दी क्लेदने' । उनत्ति सर्वं नीहारेण इति ओदती उषाः । शतरि व्यत्ययेन शप् । व्यत्ययेन अनुनासिकलोपे लघूपधगुणः । 'उगितश्च' इति ङीप् । आगमानुशासनस्यानित्यत्वात् नुमभावः । शपः पित्वादनुदात्तत्वम् । शतुः अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । न च 'शतुरनुमः' इति नद्या उदात्तत्वम् अन्तोदात्तात् शतुः परस्यास्तद्विधानात् । नकिष्टे । 'युष्मत्तत्ततक्षुष्वन्तःपादम्' इति षत्वम् । पप्तिवांसः । 'पत्लृ गतौ' लिटः क्वसुः । क्रादिनियमात् प्राप्त इट् 'वस्वेकाजाद्घसाम्' इति नियमात् न प्राप्नोति । छान्दसत्वात् सर्वविधीनां छन्दसि विकल्पितत्वात् । 'तनिपत्योश्छन्दसि' (पा० सू० ६ ४ ९९) इति उपधालोपः । 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् द्विर्भावः । प्रत्ययस्वरः । वाजिनीवति । वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया । मत्वर्थीय इनिः । 'ऋन्नेभ्यो ङीप्' इति ङीप् । तादृशी क्रिया यस्या सा । 'तदस्यास्ति' इति मतुप् । 'संज्ञायाम्' इति मतुपो वत्वम् ॥

शब्दा०—या=जो, विसृजति=कार्य पर अलग-अलग भेजती है, समनम्=एकत्रित समुदाय को, चेष्टावान पुरुष को, वि=प्रवृत्त करती है अर्थिनः=याचकों को पदम्=रुकना, देर करना, न=नहीं, वेति=जानती है, ओदती=ओस बरसाने वाली, वयः=पक्षी, नकिः=कोई नहीं, ते=तुम्हारे, पतिवासः=पतवाले, आसते=बैठा रहता है, व्युष्टौ=प्रकाशित होने पर, वाजिनीवति=ओ प्रचुर धनवाली ।

हि० अ०—जो (यह उषा है वह) एकत्रित समुदाय को काम में प्रवृत्त करती है, याचकों को (अपने कार्य में) प्रवृत्त करती है; ओस बरसानेवाली यह उषा देर करना नहीं जानती। ओ प्रचुर धनवाली (उषा), तुम्हारे प्रकाशित होने पर कोई भी पखवाला पक्षी बैठा नहीं रहता।

*Trans* —(She) sets in activity the gathering; sends the beggars (to their day's work), (dawn) the shedder of dews, does not know to rest O bounteous (dawn), at thy bursting forth into day, none of the birds, having wings, stands

*Notes*—वि सृजति—$\sqrt{srj}$ with वि to set in activity, pres 3rd sing, not unaccented because preceded by या समनम्—Sāyana explains it by 'समीचीन चेष्टावन्त पुरुष', Wilson as 'diligent', Grassmann as 'traffic', Griffith' as 'busy' and Parāñjpe as 'meeting' or 'encounter' व्यर्थिनः—Sayana renders याचकान् for अर्थिन; Wilson takes it to mean 'clients' and Parāñjpe as 'day's work, Vide Appendix—B, सन्धिज and कल्पस्व० पदम्—'Delay' (Wilson, Griffith), 'foot steps' (Parāñjpe) न—Sāyana, Wilson, Griffith and many others take it in negative sense, but Peterson thinks it to mean 'as it were' वेति—$\sqrt{vī}$ to know, or enjoy, or go, 3rd sing ओदती —This word has been enumerated in the list of the names of dawn (Nigh I 4 8), Sāyana derives ओदती from $\sqrt{ud}$ to wet, dawn is called ओदती for it wets with dews (उनत्ति सर्वं नीहारेण इति ओदती उषा) According to Griffith ओदती means 'springing' Parāñjpe derives it from ओद् (or उद् not same as उद् उनत्ति) to long for पदं न वेति ओदती—This stanza has variously been interpreted by scholars—'Shedder of dews knows not delay' (Wilson), 'delays she knows not as she springs' (Griffith) 'she follows the footsteps (of the sun) as

it were of eagerness' (Peterson) नकिः—A substantive from न with suffix कि, meaning 'none' पप्तिवांसः —√*pat* to fly, perf part आसते—√*ās* to sit, mid, 3rd plu व्युष्टौ—Loc absolute of उष्ट past part from √*vas* to shine

एषा । अयुक्त । पराऽवतः । सूर्यस्य । उत्ऽअयनात् । अधि ॥
शतम् । रथेभिः । सुऽभगा । उषाः । इयम् । वि । याति ।
अभि । मानुषान् ॥७॥

सा० भा०—एषा उषोदेवी शतम् अयुक्त स्वकीयानां रथानां शतं योजितवती । सुभगा सौभाग्ययुक्ता इयम् उषाः परावतः दूरस्थात् सूर्यस्योदयनादधि सूर्योदयस्थानादधिकात् द्युलोकात् मानुषान् अभि मनुष्यानुद्दिश्य रथेभिः शतसंख्याकैः युक्तैः रथैः वि याति विशेषेण गच्छति ॥ अयुक्त । लुङि 'झलो झलि' (पा० सू० ८ २ २६) इति सिचो लोप । उदयनात् । उदेत्यस्मिन्नेति उदयनम् । 'इण् गतौ' । अधिकरणे ल्युट् । कृदुत्तरपदप्रकृतिस्वरत्वम् । सुभगा । शोभनो भगो यस्याः सा । 'आद्युदात्तं द्व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । मानुषान् । मनो पुत्रा मानुषाः । मनोर्जातावञ्यतौ षुक् च' इति अञ् षुगागमश्च । ञित्वादाद्युदात्तत्वम् ॥

शब्दा०—एषा=इसने, अयुक्त=जोता है, परावतः=बहुत दूर से, सूर्यस्य=सूर्य के, उदयनात्=उदय स्थान से, अधि=आगे, शतम्=सौ, रथेभिः=रथों से, सुभगा=सौभाग्यवती, उषाः=उषा, इयम्=यह, वि=विशेष रूप से याति=जाती है अभि=ओर, मानुषान्=मनुष्यों को ।

हि० अ०—इसने बहुत दूर सूर्य के उदय स्थान से भी आगे से (अपने रथ को) जोता है । यह सौभाग्यवती उषा सौ रथों से मनुष्यों की तरफ विशेष रूप से जाती है ।

*Trans* —This (dawn) has harnessed (her chariot) from afar, above the rising point of sun This auspicious dawn goes to the men with hundred chariots

*Notes*—अयुक्त—√*yuj* to join, mid root-aorist 3rd sing सुभगा—Auspicious, lovely, Bahuvrihi

compd. accented on the second member (नञ्सुभ्याम्—Pāṇ. VI. 2.172).

विश्वम् । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति । सूनरी ॥ अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् । अप । स्रिधः ॥८॥

सा० भा०—विश्वं सर्वं जगत् जङ्गमं प्राणिजातम् अस्याः उषसः चक्षसे प्रकाशाय ननाम प्रह्वो भवति । रात्रौ तमसि निमग्नाः सर्वे जनास्तन्निवारयित्रीमुषसमुपलभ्य नमस्कुर्वन्तीत्यर्थः । कुतः । यस्मादेषा सूनरी सुष्ठु नेत्री अभिमतफलस्य प्रापयित्री उषाः ज्योतिष्कृणोति सर्वं प्रकाशयति । किं च मघोनी मघवती धनवती दिवः दुहिता द्युलोकसकाशादुत्पन्ना उषाः द्वेषः द्वेष्टॄन् अप उच्छत् अपवर्जयति । तथा स्रिधः शोषयितॄन् अप उच्छत् अपवर्जयति । तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूतामुषोदेवतां विश्वं जगन्नमस्करोतीत्यर्थः ॥ अस्याः । 'इदमोऽन्वादेशे' इति अशादेशः अनुदात्तः विभक्तिश्च सुप्त्वादनुदात्तेति सर्वानुदात्तत्वम् । ननाम । संहितायाम् 'अन्येषामपि दृश्यते' इति अभ्यासस्य दीर्घत्वम् । तुजादित्वे हि तूतुजानः इत्यादाविव पदकालेऽपि दीर्घः श्रूयते । ज्योतिः । 'इणः षः' इत्यनुवृत्तौ 'इसुसोः सामर्थ्ये' (पा० सू० ८.३.४४) इति विसर्जनीयस्य षत्वम् । द्वेषः । 'द्विष अप्रीतौ' । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । लघूपधगुणः । मघोनी । मघं वनति संभजते इति मघोनी । 'श्वन्नुक्षन्' इत्यादिना मघवञ्शब्दः कनिन्प्रत्ययान्तो निपातितः । स्त्रियाम् 'ऋन्नेभ्यो ङीप्' इति ङीप् । भसंज्ञाया 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणम् । उच्छत् । 'उछी विवासे' । विवासो वर्जनम् । 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडागमाभाव । स्रिधः । 'स्रिधु शोषणे' । 'क्विप् च' इति क्विप् ॥

शब्दा०—विश्वम्=सम्पूर्ण, अस्याः=इसको, नानाम=नमस्कार करते हैं, चक्षसे=देखने के लिये, जगत्=जगम जीव, ज्योतिः=प्रकाश, कृणोति=करती है, सूनरी=सुन्दरी, द्वेषः=द्वेष करनेवाले को, मघोनी=प्रचुर धन देनेवाली, दुहिता=पुत्री, दिवः=आकाश को, उषाः=उषा, अप उच्छत्=दूर करे, अप=दूर करे, स्रिधः=बाधा उपस्थित करनेवाले को।

हि० अ०—सम्पूर्ण प्राणी देखने के लिये इसको नमस्कार करते हैं; सुन्दरी (उषा) प्रकाश का निर्माण करती है। प्रचुर धन देनेवाली, आकाश की पुत्री उषा, द्वेष करनेवालों को दूर करे; बाधा उपस्थित करनेवालों को दूर करे।

*Trans.*—All moving creatures bow down before her to see; the lovely (dawn) makes light. May dawn, the bounteous daughter of heaven, drive away the haters and disperse the hinderers.

*Notes*—नानाम—√*nam* to bend, perf. 3rd. sing.; the first syllable is lengthened (अन्येषामपि दृश्यते. Pāṇ. VI. 3.137). चक्षसे—Dative infinitive in से from √*cakṣ* to see. उच्छत्—√*vas* to shine, pres. injun. 3rd. sing.

उषः । आ । भाहि । भानुना । चन्द्रेण । दुहितः । दिवः ॥ आऽवहन्ती । भूरि । अस्मभ्यम् । सौभगम् । विऽउच्छन्ती । दिविष्टिषु ॥९॥

सा० भा०—हे दिवः दुहितः द्युलोकस्य पुत्रि उषः उषोदेवते चन्द्रेण सर्वेषामाह्लादकेन भानुना प्रकाशेन आ समन्तात् भाहि प्रकाशस्व । किं कुर्वती । दिविष्टिषु दिवसेषु भूरि प्रभूतं सौभगं सौभाग्यम् अस्मभ्यम् आवहन्ती संपादयन्ती । तथा व्युच्छन्ती तमांसि वर्जयन्ती ॥ उषः । पाष्ठिकमामन्त्रितानुदात्तत्वम् । दुहितर्दिवः । 'परमपि छन्दसि' इति दिवः इत्यस्य परस्य षष्ठ्यन्तस्य पूर्वामन्त्रिताङ्गवद्भावे सति षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । आवहन्ती । ङीप्ङीपौ पित्त्वादनुदात्तौ । शतुश्च अदुपदेशात् लसार्वधातुकस्वरेणानुदात्तत्वम् । अतो धातुस्वरः शिष्यते । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । भूरि । प्रभवति न विनश्यतीति भूरि । 'अदिशदिभूशुभिभ्यः क्रिन्' (उ० सू० ४. ५०५) इति क्रिन् । नित्त्वादाद्युदात्तत्वम् । सुभगस्य भावः सौभगम् । 'सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् अञ्प्रत्ययः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इति उभयपदवृद्धौ प्राप्तायां 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् अत्रोत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तम् (का० ७. ३. १९) । व्युच्छन्ती । 'उछी विवासे' । विवासो वर्जनम् । तौदादिकः ।

अदुपदेशात लसार्वधातुकानुदात्तत्वे विकरणस्वर । दिविष्टिषु । दिवशब्देन दिविष्ठ आदित्यो लक्ष्यते । तस्य इष्टय एषणानि गमनानि येषु दिवसेषु ते दिविष्टय । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम ॥

श दा०—उषः=ओ उषा, आ भाहि=सर्वत्र प्रकाश करो, भानुना=प्रकाश से, चन्द्रेण=चमकीले, दुहितर्दिवः=ओ आकाश की पुत्री, आवहन्ती—लाती हुई, भूरि=प्रचुर, अस्मभ्यम्=हमारे लिये, सौभगम्=सौभाग्य, व्युच्छन्ती=प्रकाशित होती हुई, दिविष्टिषु=प्रतिदिन ।

हि० अ०—ओ आकाश की पुत्री, उषा, हमारे लिये प्रचुर सौभाग्य लाती हुई, प्रतिदिन प्रकाशित होती हुई (अपनी) चमकीली किरणों से सर्वत्र प्रकाश करो ।

*Trans* —O dawn, the daughter of heaven, shine around with brilliant light, bringing to us plenty of fortune and shining (on us) daily

*Notes*—आ भाहि—√*bha* with आ to shine around, impv 2nd sing आवहन्ती—√*vah* to carry, pres part ; for accent see निवेशयन्(I 35 2 ) व्युच्छन्ती—√*vas* to shine, pres part दिविष्टिषु–Every day' (Sāyana) 'daily sacrifice' (Maxmuller Geldner) 'wishing for heaven prayer' (Grassmann) 'solemn rite' (Griffith) , Sāyana takes it as Bahuvrīhi, accented on the first member, but in the Pada text it is not analysed

विश्वस्य । हि । प्राणनम् । जीवनम् । त्वे इति । वि । यत् । उच्छसि । सूनरि ॥ सा । नः । रथेन । बृहता । विभाऽवरि । श्रुधि । चित्रऽमघे । हवम् ॥१०॥

सा० भा० हे सूनरि उषोदेवि विश्वस्य प्राणिजातस्य प्राणन चेष्टन जीवन प्राणधारण च त्वे हि त्वय्येव वर्तते । यत् यस्मात् त्व वि उच्छसि तमो वर्जयसि । हे विभावरि विशिष्टप्रकाशयुक्ते सा तादृशी त्व नः अस्मान्प्रति बृहता प्रौढेन रथेन आयाहीति शेष । तथा हि चित्रामघे विचित्रधनयुक्त

उषोदेवि अस्मदीय हवम् आह्वान श्रुधि शृणु ॥ प्राणनम् । 'अन चेष्टायाम्' । 'ल्युट् च' इति भावे ल्युट् । योरनादेश । समासे 'अनिते' (पा० सू० ८. ४. १९) इति उपसर्गस्थात् रकारात् निमित्तात् उत्तरस्य नकारस्य णत्वम् । ननु 'अनिते.' इति इटा निर्देशात् कथम् 'अन चेष्टायाम्' इत्यस्य णत्वम् । तर्हि जीवनस्य पृथगुपादानात् तेनैव धातुना चेष्टा लक्ष्यते । समासे कृदुत्तरपद-प्रकृतिस्वरत्वम् । संहितायाम् एकादेशस्वरेण एकादेशस्योदात्तत्वम् । त्वे । 'सुपा सुलुक्' इति सप्तम्या शेआदेश. । उच्छसि । 'उछी विवासे' तौदादिक । तिप. पित्त्वादनुदात्तत्वे विकरणस्वर. । 'निपातैर्यद्यदिहन्त' इति निघात प्रतिषेध. । सूनरि । सुष्ठु नयतीति सूनरी । 'नृ नये' इत्यस्मात् 'अच इ.' इति औणादिक इप्रत्यय । गतिसमासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् 'कृदिकारादक्तिन.' इति ङीप् । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वे प्राप्ते 'आमन्त्रितस्य च' इति आष्टमिको निघात । विभावरि । विशिष्टा भा यस्या सा । 'छन्दसीवनिपौ' (पा० सू० ५. २. १०९. २) इति मत्वर्थीयो वनिप् । 'वनो र च' इति ङीप्; तत्सनियोगेन नकारस्य रेफादेशश्च । श्रुधि । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' इति हेर्धिरादेश । 'बहुल छन्दसि' इति विकरणस्य लुक् । हेरपित्त्वेन प्रत्ययस्वरेणान्तोदात्तत्वम् । पादादित्वात् निघाताभावः । मघम् इति धननाम । चित्रं मघं यस्या सा चित्रमघा । 'अन्येषामपि दृश्यते' इति संहितायां पूर्वपदस्य दीर्घत्वम् । हवम् । 'ह्वेञ् स्पर्धाया शब्दे च' । 'भावेऽनुपसर्गस्य' इति अप्प्रत्यय ; तत्सनियोगेन सम्प्रसारण च ॥

शब्दा०—विश्वस्य=सम्पूर्ण, हि=चूंकि, प्राणनम्=प्राण, जीवनम्=जीवन, त्वे=तुममें, यत्=जब, व्युच्छसि=प्रकाशित होती हो, सूनरि=ओ सुन्दरी, सा=वह (तुम), नः=हमारी, रथेन=रथ से, बृहता=बड़े, विभावरि=ओ प्रकाशवाली, श्रुधि=सुनो, चित्रमघे=ओ विचित्र धन-वाली, हवम्=पुकार ।

हि० अ०—चूंकि, ओ सुन्दरी (उषा), जब तुम प्रकाशित होती हो, सम्पूर्ण प्राणियों का प्राण तथा जीवन तुम्हारे में रहता है; (अत) ओ प्रकाश-वाली वह (तुम) बड़े रथ से हमारी तरफ (आती हुई), ओ विचित्र धन वाली, हमारी पुकार को सुनो ।

*Trans.*—O beautiful one, the breath and life of all (are) in thee, when thou shine forth. Thou as such,

O diffuser of light, (coming) to us with lofty chariot, O possessor of illustrious wealth, listen our invocation

*Notes*—त्वे—The final ए expressive of locative sense is called pragrhya, hence, इति is added to it in the Pada text उच्छसि—$\sqrt{}$*vas* to shine, pres 2nd sing, not unaccented because preceded by हि सा—The use of 3rd person pronoun with the verb of 2nd person is common in the Vedas In such cases the pronoun in the 3rd person has an adjectival sense Here सा is adjective of त्वम् which is silent श्रुधि-$\sqrt{}$*śru* to hear, impv 2nd sing, not unaccented because it begins the Pada चित्रामघे—The second syllable is lengthened, vocative not in the beginning, hence, unaccented

उषः । वाजम् । हि । वंस्व । यः । चित्रः । मानुषे । जने ॥
तेन । आ । वह । सुऽकृतः । अध्वरान् । उप । ये । त्वा ।
गृणन्ति । वह्नयः ॥११॥

सा० भा०—हे उष वाजं हविर्लक्षणमन्न हि युतिषु प्रसिद्ध यस्व याचस्व स्वीकुर्वित्यर्थ । यः वाज चित्र चायनीय मानुषे मनुष्ये जने जाते यजमाने वतते त वाजमिति पूर्वत्रान्वय । तेन कारणेन सुकृतः सुष्ठु कृतवतो यजमानान अध्वरान् हिंसारहितान् यागान् उप आ वह प्रापय । ये यजमाना वह्नयः यज्ञनिर्वाहका त्वा त्वां गृणन्ति स्तुवन्ति तान सुकृत इति पूर्वेण सम्बन्ध । एतदुक्त भवति । यजमानैः प्रत्त हवि स्वीकृत्य पुनरपि तेषां यज्ञ सपादयति ॥ वाजम् । 'वज व्रज गतौ' । कर्मणि घञ् । 'अजिव्रज्योश्च' (पा० सू० ७ ३ ६०) इत्यत्र चकारस्य अनुक्तसमुच्चयार्थत्वात् वाजो वाज्य-मित्यत्रापि कुत्वाभाव इति वृत्तावुक्तत्वात् कुत्वाभाव । 'कर्षात्वत' इत्यन्तो-दात्तत्वे प्राप्ते वृषादित्वादाद्युदात्तत्वम् । यस्व । 'यसु याचने' । अत्र याचन-वाचिना धातुना तदुत्तरभावी स्वीकारो लक्ष्यते । 'बहुल छन्दसि' इति विक-रणस्य लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वर । 'हि च' इति निघातप्रतिषेध । सुकृत । 'सुकर्मपाप' इत्यादिना करोतेर्भूतार्थे क्विप् ।

नुगागम । कृदुत्तरपदप्रकृतिस्वरत्वम । अध्वरान । ध्वरो हिंसा नास्त्यस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अध्वरान् इत्यस्य ईप्सिततमत्वात् 'कर्तुरीप्सिततमम्' (पा० सू० १४४९) इति कर्मसंज्ञा, सुकृत इत्यस्य तु 'अकथित च' (पा० सू० १४५१) इति, 'नीवह्योर्हरतेश्च' (पा० सू० १४५१) इति द्विकर्मकेषु वहते परिगणितत्वात् । अध्वरान् इत्यत्र नकारस्य संहितायां 'दीर्घादटि' इति रुत्वम । 'आतोऽटि नित्यम' इति पूर्वस्य आकारस्य सानुनासिकता । गृणन्ति । 'गृ शब्दे' । 'क्र्यादिभ्य श्ना' । 'प्वादीनां ह्रस्व' इति ह्रस्वत्वम् । 'श्नाभ्यस्तयोरात' आकारलोप । प्रत्ययस्वर । यद्वृत्तयोगादनिघात ॥

शब्दा०—उषः=ओ उषा, वाजम्=हविरूप अन्न को, वंस्व=स्वीकार करो, हि=प्रसिद्ध अर्थ का वाचक एक निपात, यः=जो, चित्रः=विचित्र, मानुषे=मनुष्यों में, जने=यजमान में, तेन=उससे, आ वह=लाओ, सुकृतः=सुन्दर कार्य करनेवाले, अध्वरान्=यज्ञों में, उप=समीप, ये=जो, त्वा=तुमको, गृणन्ति=प्रशंसा करते हैं, वहयः=यज्ञ करानेवाले ।

हि० अ०—ओ उषा, इस हविरूप अन्न को, जो यजमान-मनुष्यों में विचित्र है, स्वीकार करो । उसके द्वारा सुन्दर काम करनेवाले, यज्ञ करनेवाले (ऋत्विजों) को जो तुम्हारी प्रशंसा करते हैं, यज्ञों में लाओ ।

*Trans* —O dawn accept the sacrificial food which is wonderful among men Thereby bring to the sacrifices, the pious the leader (of the sacrifices) who glorify thee

*Notes*—वाजम् -From $\sqrt{vaj}$ to be strong, 'food' (Sāyana), 'strength' (Griffith), 'gifts' (Peterson), 'the prize of victory' (Parāñjpe) वंस्व—$\sqrt{van}$ to win, impv 2nd sing not unaccented because preceded by हि वह—$\sqrt{vah}$ to carry, impv 2nd sing सुकृतः—Sāyana renders it by 'सुष्ठु कृतवतो यजमानान्', Wilson and Griffith as 'pious', Geldner takes सुकृत to mean pious patron, but he thinks it as genitive of अध्वरान् He renders the 3rd Pāda as 'come on chariot to the sacrifice of the pious patrons, Grassmann takes सुकृत as

denoting 'the gods' अध्वरान्—Nighantu enumerates it in the list of the names of sacrifice (III.17 3) and aerial region (I 3 16); Yāska takes it in the first sense and derives it from $\sqrt{dhvr}$ to kill ( अध्वरः इति यज्ञनाम ध्वरतिः हिंसाकर्मा तत्प्रतिषेधः—Nir. I 8 ) Sāyana analyses the compd as 'ध्वरो हिंसा नास्त्यस्मिन्निति'; accented on the second member (नञ्सुभ्याम् pān VI 2 172) For Sandhi in अध्वरां उप see Appendix 'A' under *Anpadapadavrtti* गृणन्ति—$\sqrt{g\bar{r}}$ to sing, pres 3rd plu, not unaccented because preceded by ये

विश्वान् । देवान् । आ । वह । सोमऽपीतये । अन्तरिक्षात् । उषः । त्वम् ॥ सा । अस्मासु । धाः । गोऽमत् । अश्वऽवत् । उक्थ्यम् । उषः । वाजम् । सुऽवीर्यम् ॥१२॥

सा० भा०—हे उषः त्वं सोमपीतये सोमपानाय अन्तरिक्षात् अन्तरिक्षलोकात् विश्वान् सर्वान् देवान् आ वह अस्मदीयं देवयजनदेशं प्रापय । हे उषः सा तादृशी त्वं गोमत् गोमन्तं बहुभिर्गोभिर्युक्तं अश्वावत् अश्वैरुपेतम् उक्थ्यं प्रशस्यं सुवीर्यं शोभनवीर्योपेतं वाजम् अन्नम् अस्मासु धाः निधेहि स्थापयेत्यर्थः ॥ धाः । दधातेः 'छन्दसि लुङ्लङ्लिटः' इति प्रार्थनायां लुङ् । 'गातिस्था' इति सिचो लुक् 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । गोमत् । अश्वावत् । 'मन्त्रे सोमाश्वेन्द्रिय' इति मतुपि दीर्घत्वम् । उभयत्र 'सुपां सुलुक्' इति विभक्तेर्लुक् । उक्थ्यम् । उक्थं स्तोत्रम् । तत्र भवमुक्थ्यम् 'भवे छन्दसि' इति यत् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति 'यतोऽनावः' इत्याद्युदात्ताभावे 'तित्स्वरितम्' इति स्वरितत्वम् । उषः आमन्त्रिताद्युदात्तत्वम् । पादादित्वात् निघाताभावः । सुवीर्यम् । शोभनं वीर्यं यस्य । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् ॥

शब्दा०—विश्वान्=सम्पूर्ण, देवान्=देवताओं को, आ वह=लायो, सोमपीतये=सोमपान करने के लिये, अन्तरिक्षात्=अन्तरिक्षलोक से, उषः=अ उषा, त्वम्=तुम, सा=वह (तुम), अस्मासु=हमारे, धाः=धारण करावो, प्रदान करो, गोमत्=गायों से युक्त, अश्वावत्=अश्वो से

युक्त, उरुश्यम्=प्रशसनीय, उष =ओ उषा, वाजम्=धन, सुवीर्यम्=सुन्दर पराक्रमयुक्त ।

हि० अ०—ओ उषा, तुम सभी देवताओं को आकाश से सोमपान करने के लिये (यहा) लावो । ऐसी तुम, ओ उषा, पराक्रमयुक्त, प्रशसनीय धन, जो गायो तथा अश्वो से युक्त है, हमको प्रदान करो ।

*Trans* —O dawn, bring thou all the gods from heaven to drink the Soma juice O dawn, thou as such, bestow upon us the praiseworthy invigourating food, accompanied with cows and horses

*Notes*—सोमपीतये—Tatpurusa compd generally accents the second member, but also the first, if the second member terminates in the suffix त or न or in verbal noun in ति (cf Pān VI 2 42) धा —√*dhā* to put, root aorist, subju 2nd sing उरुश्यम्—For accent see वीर्याणि (I 32 1) and श्चयित (I 48 6) सुवीर्यम्—Bahuvrihi compd accented on the second member (नञ्सुभ्याम्—Pān VI 2 172), the word वीर preceded by सु as the first member in the Bahuvrihi, accents the first syllable (वीरवीर्यौ च—Pan VI 2 120, cf वीर्याणि)

यस्याः । रुशन्तः । अर्चयः । प्रति । भुद्राः । अदृक्षत ॥ सा । नः । रुयिम् । विश्वऽवारम् । सुऽपेशसम् । उषाः । दुदातु । सुम्नम् ॥१३॥

सा० भा०—यस्याः उषस अर्चयः प्रकाशा रुशन्तः शत्रून् हिंसन्त भद्राः कल्याणा प्रति अदृक्षत प्रतिदृश्यन्ते सा तथाभूता उषाः न अस्मभ्य रयिं ददातु । कीदृश रयिम् । विश्ववारं विश्वस्य वारकम् । यद्वा । विश्वैर्वरणीयम् । सुपेशसम् पेश इति रूपनाम । शोभनरूपोपेत सुम्न्यं सुष्ठु गन्तव्यम । यद्वा । सुम्नमिति सुखनाम । तद्धेतु त्वात् तात्स्थ्यम् ॥ रुशन्त । 'रुश रिश हिंसायाम्' । शतरि तुदादित्वात् श । अनुपदेशात् लसार्वधातुकानुदात्तत्वे सतिशिष्टत्वात् विकरणस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । अदृक्षत । दृशो कर्मणि लुङि झस्य

अदादेश । च्ले सिच् । 'न दृश' (पा० सू० ३ १ ४७) इति क्सप्रतिषेध । 'एकाच' इति इट्प्रतिषेध । 'लिङ्सिचावात्मनेपदेषु' (पा० सू० १. २ ११) इति सिच कित्वात् लघूपधगुणाभाव । 'सृजिदृशोर्झल्यमकिति' पा० सू० ६ १ ५८) इति अमागमाभावश्च कित्वादेव । षत्वकत्वषत्वानि । अडागम उदात्त । यदवृत्तयोगादनिघात । विश्ववारम् । विश्व वृणोतीति विश्ववार । 'वृञ् वरणे' । 'कर्मणि अण्' । यद्वा । विश्वैर्व्रियते इति विश्ववार । कर्मणि घञ् । मन्त्रवृषादित्वात् पूर्वपदान्तोदात्तत्वम् । सुगम्यम् । सुष्ठु गन्तव्य सुगम । गमे 'खलर्थे कविधानम्' इति कप्रत्यय । 'गमहन' इत्यादिना उपधालोप । तत्र भव सुगम्यम् 'भवे छन्दसि' इति यत् । 'यतोऽनाव' इत्याद्युदात्तत्वम् ॥

शब्दा० —यस्याः=जिसकी, रुशन्तः=चमकती हुई, अर्चय =किरणें, प्रति=सम्मुख, भद्राः=कल्याणकारी, अदृक्षत=दिखाई पड़ती हैं, सा=वह, नः=हम लोगो को, रयिम्=धन, विश्ववारम्=बहुतो के द्वारा अभिलषित, सुपेशसम्=सुन्दर रूपवाला, उषाः=उषा, ददातु=देवे, सुगम्यम्=सरलता से प्राप्त होने योग्य ।

हि० अ० जिसकी चमकती हुई, कल्याणकारी किरणें हम लोगो के सम्मुख दिखाई पड़ती है, वह उषा बहुतो के द्वारा अभिलषित, सुन्दर रूपवाला सरलता से प्राप्त होने योग्य धन हम लोगों को प्रदान करे ।

*Trans* —Whose shining, auspicious rays are seen towards us may that dawn give us wealth, desired by many, excellent in form, easily attainable

*Notes*—रुशन्तः—√*rus* to shine, pres part irregularly accented on the first syllable, 'killing (the enemies)' (Sāyana) bright' (Wilson), 'red' (Maxmuller), 'shining' (Peterson) अदृक्षत—√*drś* to see, mid 's' aorist, 3rd plu not unaccented because preceded by यस्या विश्ववारम्—Desirable (Wilson) 'of all good things' (Griffith) 'consisting of all precious things' (Peterson, Grassmam Oldenberg) in Bahuvrihi the word विश्व as forming the first member, accents the final syllable, if it is noun (बहुव्रीहौ विश्व सज्ञायाम् Pan VI 2 106) सुपेशसम्—

'Endowed with beautiful form' (Sāyana), 'agreeable' (Wilson), 'fair in form' (Griffith), 'of lovely appearance' Peterson), Bahuvrihi compd accented on the second member सुग्म्यम्—√*gam* to go, by adding the suffix यत् A word of two syllables ending in यत् accents the first syllable (यतोऽनाव —Pān VI 1 213) 'Easily attainable' (Wilson), 'of good augury for life's journey' (Peterson)

ये । चित् । हि । त्वाम् । ऋषयः । पूर्वे । ऊतये । जुहूरे । अवसे । महि ॥ सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥१४॥

सा०भा०—हे महि महिते पूजनीये वा उषोदेवते त्वा ये चिद्धि ये खलु प्रसिद्धा पूर्वे चिरतना ऋषय मन्त्रद्रष्टार ऊतये रक्षणाय। अव इति अन्ननाम। अवसे अन्नाय च जुहूरे जुह्विरे आहूतवन्त सूक्तरूपैर्मन्त्रैं स्तुतवन्त इत्यर्थ। हे उष सा तादृशी त्व राधसा अस्माभिर्दत्तेन हविर्लक्षणेन धनेन शुक्रेण शोचिषा दीप्तेन तमो निवारयितु समर्थेन तेजसा चोपलक्षिता सती तेषामृषीणामिव न अस्माक स्तोमान् अभि स्तुतीरभिलक्ष्य गृणीहि सम्यक स्तुतमिति शब्दय। अस्मदीयाभि स्तुतिभि सतुष्टा भवेत्यर्थ॥ ऊतये। अवते क्तिनि 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ्। 'ऊतियूति' इत्यादिना क्तिन् उदात्तो निपातित। जुहूरे। ह्वेञ् स्पर्धाया शब्दे च'। लिटि 'अभ्यस्तस्य च' इति द्विर्वचनात् पूर्वमेव अभ्यस्तकारणभूतस्य ह्वयते सम्प्रसारणम्। अभ्यस्तस्य यो ह्वयति कस्याभ्यस्तस्य ह्वयति यस्तस्य कारणम्' (का० ६ १ ३३) इति व्याख्यातत्वात्। परपूर्वत्वे 'हल' इति दीर्घत्वम्। द्विर्वचनादीनि। 'इरयो रे' इति इरेचो रेआदेश। 'चित' इत्यन्तोदात्तत्वम्। यद्वृत्तयोगादनिघात। तत्र हि पञ्चमी निर्देशेऽपि व्यवहितेऽपि कार्यं भवतीत्युक्तम् (का० ८ १ ६६)। महि। 'मह पूजायाम्' औणादिक इप्रत्यय। 'कृदिकारादक्तिन' इति ङीप्। सबुद्धौ 'अम्बार्थ' (पा० सू० ७ ३ १०७) इति ह्रस्वत्वम्। स्तोमान्। संहितायां नकारस्य रुत्वादुत्वनम्। नित्त्वादाद्युदात्तत्वम्। गृणीहि। 'गॄ शब्दे'। क्र्यादिक। श्नीति 'प्वादीनां ह्रस्व' इति ह्रस्वत्वम्। राधसा। राध्नोत्यनेनेति राध। असुनो नित्त्वादाद्युदात्तत्वम्। उष। पादादित्वात् आष्टमिकनिघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम्॥

शब्दा०—ये=जो, चित्=निश्चित अर्थ का वाचक एक निपात, हि=प्रसिद्ध अर्थ का वाचक एक निपात, त्वाम्=तुमको, ऋषयः=ऋषियों ने, पूर्वे=पहिले के, ऊतये=रक्षा के लिये, जुहूरे=बुलाया था, अवसे=अन्न के लिये, महि=ओ महान्, सा=वह (तुम), नः=हमारे, स्तोमान्=स्तोत्रों को, अभि गृणीहि=सम्मानित करो, राधसा=धन से, उषः=ओ उषा, शुक्रेण=दीप्त, चमकने वाले, शोचिषा=प्रकाश से।

हि० अ०—ओ महती (उषा), पहिले के सभी महान् ऋषियों ने सहायता के लिये तथा अन्न के लिये तुमको बुलाया था। ओ उषा, ऐसी तुम, हमारे स्तोत्रों को धन से तथा दीप्त प्रकाश से सम्मानित करो।

*Trans* —O great (dawn), all the seers in the ancient time had invoked thee for help and for food Thou as such, O dawn, honour our hymns of praise with wealth and brilliant lustre

*Notes*—Both ऊतये and अवसे are derived from √*av* to protect, Sāyana relying on the authority of Nighantu (II 7 9) takes अव to mean 'food' जुहूरे—√*hū* to call, perf 3rd plu , not unaccented because preceded by हि अभिगृणीहि—√*gṛ* with अभि to honour, impv 2nd sing

उषः। यत्। अद्य। भानुना। वि। द्वारौ। ऋणवः। दिवः॥ प्र। नः। यच्छतात्। अवृकम्। पृथु। छर्दिः। प्र। देवि। गोऽमतीः। इषः॥१५॥

सा० भा०—हे उषः त्वम् अद्य अस्मिन् प्रभातसमये यत् यस्मात् भानुना प्रकाशेन दिवः अन्तरिक्षस्य द्वारौ द्वारभूतौ पूर्वापरदिग्भागावन्धकारेणाच्छादितौ वि ऋणवः विश्लिष्य प्राप्नोषि तस्मात् त्वं नः अस्मभ्यं छर्दिः तेजस्वि गृहं प्र यच्छतात् देहि। कीदृशं छर्दि। अवृकं हिंसकरहितं पृथु विस्तीर्णम्। अपि च हे देवि देवनशीले गोमतीः बहुभिर्गोभिर्युक्ता इषः अन्नानि। प्र इत्युपसर्गस्य आवृत्त यच्छतात् इत्यनुषज्यते। प्र यच्छतात देहि। त्वदागमनस्यास्मद्रक्षणार्थत्वादस्मदभीष्टं गृहादिकं प्रयच्छेत्यर्थः। छर्दि इति गृह-

नाम, 'छर्दिः छर्दिः' (नि० ३.४.१८) इति तन्नामसु पाठात्। ऋणवः। 'ऋणु गतौ'। छान्दसे लङि सिपि तनादित्वात् उप्रत्ययः। ततो व्यत्ययेन शपि गुणावादेशौ। शपः पित्त्वादनुदात्तत्वे उप्रत्ययस्वरः शिष्यते। यद्वृत्तयोगादनिघातः। दिव। 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम्। प्र नः। 'उपसर्गाद्बहुलम्' इति बहुलवचनात् नसो णत्वाभावः। यच्छतात्। 'दाण् दाने'। शपि 'पाघ्रा' इत्यादिना यच्छादेश। अवृकम्। नास्ति वृकोऽस्मिन्निति बहुव्रीहौ 'नञ्सुभ्याम्'। इत्युत्तरपदान्तोदात्तत्वम्। पृथु। 'प्रथ प्रख्याने'। 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उ० सू० १.२८) इति कुप्रत्ययः सम्प्रसारणं च। छर्दिः इति गृहनाम। 'उछृदिर् दीप्तिदेवनयोः'। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः' (उ०सू० २.२६५) इति इसिप्रत्ययः। लघूपधगुणः। प्रत्ययस्वरः॥

शब्दा० उषः=ओ उषा, यत्=जब, अद्य=आज, भानुना=प्रकाश से, द्वारौ=दोनो फाटको को, वि ऋणवः=खोला है, दिवः=आकाश के, प्र=विशेष रूप से, नः=हमको, यच्छतात्=प्रदान करो, अवृकम्=भयरहित, पृथु=विस्तृत, छर्दिः=सुरक्षित स्थान, प्र=(प्रदान करो), देवि=ओ देवी, गोमतीः=दूध से युक्त, इषः=अन्न।

हि० अ०—ओ उषा, आज, जब तुमने प्रकाश से आकाश के दोनो फाटको को खोला है; हमें भयरहित, विस्तृत स्थान तथा ओ देवी दूध से युक्त अन्न प्रदान करो।

*Trans* —O dawn, today, when thou hast opened the two gates of the heaven with lustre; give us spacious shelter, free from danger; O goddess, grant us food, accompanied with milk.

*Notes* ऋणवः—$\sqrt{r}$ with वि to open, pres. subju. 2nd sing, not unaccented because preceded by यत् यच्छतात् –$\sqrt{yam}$ to stretch out, impv. 2nd. sing. अवृकम् –'Secure' (Wilson), 'free from foes' (Griffith) 'harm-proof' (Peterson); वृक is derived from $\sqrt{vraśc}$ to cut into pieces; in the Nighantu it is enumerated in the list of the names of thunderbolt (II 20.7) and thief (III 24 14); thus अवृकम् means free from the fear of thunderbolt or thieves; Bahuvrihi compd.

accented on the second member (नञ्सुभ्याम्—Pān VI 2 172) पृथु — From √*prath to* spread, by Samprasārana छर्दिः—Sheltering place, according to Grassmann छदि is the corrupt form of छर्दि, but in the Nighantu both the words are enumerated in the list of the names of house (Nigh III 4 18-19) इषः—'Food' (Wilson, Griffith) 'nourishment' (Peterson), Geldner derives it from √is to desire, and Parāñjpe from √is to strive or set in action गोमती—Yāska takes गो also to mean 'milk' In Nirukta he quotes a stanza गोभिः श्रीणीत मत्सरम् (IX.46 4) Here गोमती with इष would certainly mean 'food accompanied with milk'

सम् । नः । राया । बृहता । विश्वऽपेशसा । मिमिक्ष्व । सम् । इळाभिः । आ ॥ सम् । द्युम्नेन । विश्वऽतुरा । उषः । महि । सम् । वाजैः । वाजिनीऽवति ॥१६॥

सा० भा०—हे उषः नः अस्मान् राया धनेन सं मिमिक्ष्व संसिञ्च संयोजयेत्यर्थः । कीदृशेन धनेन । बृहता प्रभूतेन विश्वपेशसा । पेश इति रूपनाम । बहुविधरूपयुक्तेन । तथा इळाभिः आ गोभिश्च अस्मान् सं मिमिक्ष्व । इळा इति गोनाम । 'इळा जगती' (नि० २. ११ ७) इति तन्नामसु पाठात् । आकार समुच्चये पदान्ते वर्तमानत्वात् । उक्तं च—'एतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकार' (निरु० १ ४) इति । किंच हे महि महनीये उषोदेवते द्युम्नेन यशसा सं मिमिक्ष्व । 'द्युम्नं द्योततेर्यशो वान्नं वा' (निरु० ५ ५) इति यास्क । कीदृशेन द्युम्नेन । विश्वतुरा सर्वेषां शत्रूणां हिंसकेन । तथा हे वाजिनीवति अन्नसाधनभूतक्रियायुक्ते वाजैः अन्नैः अस्मान् सं मिमिक्ष्व । 'अन्नं वै वाज' (श० ब्रा० ९ ३ ४ १) इति श्रुत्यन्तरात् ॥ राया । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । बृहता । 'बृहन्महतोरुपसंख्यानम्' इति विभक्तिरुदात्ता । विश्वपेशसा । विश्वानि पेशांसि यस्यासौ विश्वपेशाः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । यद्वा । मरुद्वृधादिर्द्रष्टव्यः । मिमिक्ष्व । 'मिह सेचने' । व्यत्ययेन आत्मनेपदम् । लोटि 'बहुलं छन्दसि' इति शपः श्लुः । द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । प्रत्यय-

स्वरस्य सतिशिष्टत्वात् स एव शिष्यते। पूर्वपदस्य असमानवाक्यस्यत्वात् 'तिङङतिङ:' इति निघातो न भवति, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या' इति वचनात्। विश्वतुरा। तूर्वतीति तूः। तुर्वी हिंसार्थः। 'क्विप् च' इति क्विप्। राल्लोप इति वलोपः। विश्वेषां तूः विश्वतूः। 'समासस्य' इत्यन्तोदात्तत्वम्। वाजिनीवति। वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया। तादृशी क्रिया यस्या सा तथोक्ता॥

शब्दा०—न =हमें, राया=धन से, बृहता=प्रचुर, बड़े, विश्वपेशसा =विविध रूपवाले, संमिमिक्ष्व=संयुक्त करो, सम्=संयुक्त करो, इळाभिः =अन्न से, सम्=संयुक्त करो, द्युम्नेन=यश से, विश्वतुरा=सबको जीतनेवाले, उषः=ओ उषा, महि=महान्, सम्=संयुक्त करो, वाजैः=अन्न से, वाजिनीवति=ओ प्रचुर धनवाली।

हि० अ० ओ महती उषा, प्रचुर तथा विविध रूपवाले धन से, पुष्टिकारक अन्न से, सबको जीतनेवाले यश से, तथा ओ प्रचुर धनवाली, अन्न से हमें संयुक्त करो।

*Trans* —O great dawn, associate us with wealth, abundant and omniform, with nurture, with fame, all subduing, with food, O possessor of food

*Notes*—मिमिक्ष्व—Impv 2nd sing, not unaccented because it begins the pāda, the root from which it is derived is doubtful Sāyana, Maxmuller and Grassmann derive it from $\sqrt{mih}$ to rain, Macdonell and Geldner from $\sqrt{miks}$ to mix, Parāñjpe from $\sqrt{mis}$ to mix इळा—It is enumerated in the list of the names of earth (Nigh I 1 15), speech (Nigh I 11 3), food (Nigh II 7 13), and cow (Nigh II 11 7); Sāyana takes it here to mean 'cow' Griffith as 'refreshing food'; according to Bergaigne इळा is a 'liquid offering' as well as 'the prayer accompanying it' इळा in the Vedas is personified as a goddess विश्वतुरा—Tatpurusa compd. accented on the final member

---

सप्तदशेऽनुवाके पञ्च सूक्तानि । तत्र 'नासत्याभ्याम्' इति पञ्चविंशत्यृचं प्रथमं सूक्तम् । उशिक्सत्ज्ञायामङ्गराजस्य महिष्या दास्यां दीर्घतमसोत्पादितः कक्षीवान् अस्य सूक्तस्य ऋषिः । त्रिष्टुप् छन्दः । अश्विनौ देवता । तथा चानुक्रान्तं—'नासत्याभ्यां पञ्चाधिका कक्षीवान्दैर्घतमस औशिज आश्विनं वै' इति । तुह्यादि परिभाषया इदमादीनि पञ्च सूक्तानि अश्विदेवत्यानि । प्रातरनुवाकस्य आश्विने क्रतौ त्रैष्टुभे छन्दसि इदमादीनि त्रीणि सूक्तानि । 'अथाश्विन' इति खण्डे सूत्रितं—'ग्रावाणेव नासत्याभ्यामिति त्रीणि' (आश्व० श्रौ० ४ १५) इति । आश्विनशस्त्रे चैतानि शस्यानि 'प्रातरनुवाकन्यायेन' (आश्व० श्रौ० ६. ५) इति अतिदिष्टत्वात् ॥

नासत्याभ्याम् । बर्हिःऽइव । प्र । वृञ्जे । स्तोमान् । इयर्मि । अभ्रियाऽइव । वातः ॥ यौ । अर्भगाय । विऽमदाय । जायाम् । सेनाऽजुवा । निऽऊहतुः । रथेन ॥१॥

सा० भा०—बर्हिरिव यथा कश्चिद्यजमानो यागार्थं बर्हिः प्र वृञ्जे प्रयत्नेन अन्यूनातिरिक्तं यागाय पर्याप्तं दर्भं वृङ्क्ते छिनत्ति संपादयतीति यावत् । एवमहं नासत्याभ्याम् अश्विभ्यां स्तोमान् स्तुतीः इयर्मि संपादयामि । एतदेव विशदीक्रियते । अभ्रियेव । यथा अभ्रियाणि अभ्रेषु मेघेष्ववस्थितान्युदकानि वातः वायुः वर्षणार्थं बहुधा प्रेरयति एवमहम् अश्विभ्यां स्तोत्राणि इयर्मि बहुधा प्रेरयामि । कीदृशावश्विनौ । अर्भगाय बालाय स्वयंवरलब्धभार्याय विमदाय एतत्संज्ञाय राजर्षये मध्येमार्गं स्वयंवरायमायतैः ताम् अलभमानैरन्यैर्नृपैः सह योद्धुमशक्नुवतेऽपि तस्मै सेनाजुवा शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यौ अश्विनौ जायां भार्यां परैरनुक्रान्तां न्यूहतुः शत्रून्निहत्य तदीयं गृहं प्रापयामासतुः । तावभ्यर्चितवानस्मीत्यर्थः ॥ नासत्याभ्याम् । सत्सु भवौ सत्यौ । सत्यौ असत्यौ । न असत्यौ नासत्यौ । 'नभ्राण्नपात्' इत्यादिना नञ्प्रकृतिभावः अव्ययपूर्वपदप्रकृतिस्वरत्वम् । वृञ्जे । 'वृजी वर्जने' । आदादिकः इदित्वात् नुम् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । इयर्मि । 'ऋ गतौ' जौहोत्यादिकः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । 'अभ्यासस्यासवर्णे' इति

इयड । अभ्रियेव । 'समुद्राभ्राद्ध' इति भवार्थे घ । घस्य इयादेश । 'शेश्छन्दसि बहुलम्' इति शेर्लोप । अर्भगाय । 'अर्तिगृभ्या भन्' (उ० सू० ३ ४३२) इति अर्तेर्भन् । अर्भ एवार्भक । 'सज्ञाया कन्' (पा० सू० ५ ३ ८७) । छान्दसो गवार । अपर आह । अर्भमल्प गायति शब्दयतीत्यर्भग । 'कै गै शब्दे' । 'गापोष्टक्' (पा० सू० ३ २ ८) । 'आतो लोप इटि च' इति आकारलोप । सर्वेतत् पदकृत शाकल्यस्य अभिमतम् । सेनाजुवा । जु इति सौत्रो धातुर्गत्यर्थ । अस्मादन्तर्भावितण्यर्थात् 'क्विब्वचिप्रच्छि' इत्यादिना क्विब्दीर्घौ । तन्वादित्वा-दुवङ (पा० सू० ६ ४ ७७ १) न्यूहतु । 'वह प्रापणे' लिटि अतुसि यजा-दित्यात सम्प्रसारणम् । 'यवसृत्तसित्यम्' इति निघातप्रतिषेध ॥

श॰ दा॰—नासत्याभ्याम्=अश्विन् का एक विशेषण जो स्वतत्र नाम के रूप में व्यवहृत होने लगा, जो असत्य न हो, ऐसे अश्विन् के लिये, बर्हिरिव=पवित्र दूर्वा की तरह, प्र वृञ्जे=विशेष रूप से सजाता हूँ, स्तोमान्=स्तोत्रो को, इयर्मि=भेजता हूँ, अभ्रियेव=जैसे बादल को वातः=वायु यौ=जिन दोनों ने, अर्भगाय=युवक के लिये, विमदाय=विमद के लिये, जायाम्=स्त्री को, सेनाजुवा=बाण की तरह तेज चालवाले, न्यूहतु=लाये रथेन=रथ से ।

हि॰ अ॰—मैं अश्विन् के लिये मन्त्रो को पवित्र दूर्वा की तरह सजाता हूँ तथा (उन मन्त्रो को अश्विन् के पास) भेजता हूँ जैसे वायु बादलो को । जिन्होने युवक विमद के लिये उसकी पत्नी को बाण की तरह तेज चालवाले (अपने) रथ से लाया ।

*Trans*—I trim (my) hymns as it were sacred grass, for true ones, and send (them) forth (to them) as the wind (drives) the rainy clouds, who brought a wife to youthful Vimada in their chariot, speeding like an arrow

*Notes*—नासत्याभ्याम्—नासत्या (not untrue) is the epithet of Aśvins, but later on it began to be treated as a name of Aśvins Sāyana analyses the compound as सत्सु भवौ सत्यौ न सत्यौ असत्यौ न असत्यौ नासत्यौ; नञ् comp accented on the first syllable प्र वृञ्जे—$\sqrt{vrj}$ to twist,

mid pres 1st sing Sāyana explains वृञ्जे here by taking it in 3rd sing इयर्मि—$\sqrt{r}$ to go, III conj pres 1st sing अर्भगाय—Same as अर्भक, the word अर्भक occurs in the list of the names of 'little' (Nigh III 2 9) Yāska derives it from अव+$\sqrt{hr}$ to make little (अर्भगाय अर्भक अवहृत भवति—Nir III 20) Sāyana renders अर्भगाय by बालाय, Wilson and Griffith take it to mean 'Youthful', Peterson as 'Young' सेनाजुवा—From सेना +$\sqrt{ju}$ to speed, Wilson following Sayana renders 'outstripping the rival host', Macdonell takes it to mean 'speeding like an arrow' न्यूहतुः—नि+$\sqrt{vah}$ to carry, perf 3rd dual, not unaccented because preceded by यौ, for Sandhi in न्यूहतू रथेन see Appendix—'A', *Niyat* under विसर्ग सन्धि

वीळुपत्मऽभिः । आशुहेमऽभिः । वा । देवानाम् । वा । जूतिऽभिः । शाशदाना ॥ तत् । रासभः । नासत्या । सहस्रम् । आजा । यमस्य । प्रऽधने । जिगाय ॥२॥

सा० भा०—वीळुपत्मभिः । वीळुरिति बलनाम । बलवद्भुत्पतनैः आशुहेमभिः शीघ्रगमनैः । वा शब्द समुच्चये । हे नासत्या अश्विनौ एवं भूतैरश्वैश्च देवानाम् इन्द्रादीनां जूतिभिः प्रेरणैश्च शाशदाना शाशद्यमानयोः अत्यर्थं प्रेर्यमाणयोर्युवयोर्वाहनभूतो यः रासभः प्रजापतिना दत्तः ॥ यमस्य वैवस्वतस्य प्रीतिकरे प्रधने प्रकीर्णधनोपेते आजा आजौ संग्रामे तत् शत्रूणां सहस्रं जिगाय जितवान् । वैवस्वतो हि बहुना मरणहेतुना संग्रामेण तुष्टो भवति । यद्वा । जेतव्यत्वेन प्रजापतिना निहितं ऋक्सहस्रं शीघ्रगमनयुक्तो रासभो जिगाय जयेनालभत । अन्येभ्य देवेभ्य पूर्वमेवाजिं प्राप्य युवां जयं प्रापयामास । तथा चास्मिन्नर्थे 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्' (ऐ० ब्रा० ४ ७) इत्यादिक ब्राह्मणमनुसंधेयम ॥ वीळुपत्मभि । वीळु बलवत्पततीति वीळुपत्मान । आशुहेमभि । आशु शीघ्रं हिन्वन्ति गच्छन्तीति आशुहेमान । तैः । 'हि गतौ वृद्धौ च' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन । कृदुत्तरपदप्रकृतिस्वरत्वम् । जूतिभि । 'ऊतियूतिजूति' इत्यादिना क्तिन उदात्त-

त्वम् । शाशदाना । 'शद्लृ शातने' । अत्र गत्यर्थो धातूनामनेकार्थत्वात् । अस्मात् यङन्तात् लट शानच् । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् शबभाव । अतोलोपयलोपौ । 'अभ्यस्तानामादि, इत्याद्युदात्तत्वम् । 'सुपा सुलुक्' इति षष्ठ्या पूर्वसवर्णदीर्घ । आजा । तेनैव सूत्रेण डादेश । जिगाय । 'जि जये' । 'सन्लिटोर्जे' इति अभ्यासादुत्तरस्य कुत्व गकार ॥

श० दा० —वीळुपत्मभिः=मजबूत पखवाले, आशुहेमभिः=शीघ्रगामी अश्वों से, वा=अथवा, देवानाम्=देवताओ की, वा=या, जूतिभिः=प्रेरणा से, शाशदाना=जीतता हुआ, तत्=उन, रासभः=खच्चर ने, नासत्या=ओ सत्यरूप अश्विन, सहस्रम्=हजार, आजा=रथ-दौड प्रतियोगिता में, यमस्य=यम के द्वारा आयोजित, प्रधने=प्रचुरधनयुक्त, जिगाय=जीता ।

हि० अ०—मजबूत पख वाले, शीघ्रगामी (अश्वों) से या देवताओ की प्रेरणा से जीतता हुआ (तुम्हारे) खच्चर ने, ओ अश्विन, यम के द्वारा आयोजित प्रचुरधनयुक्त रथ-दौड प्रतियोगिता में उन हजार को जीता ।

*Trans* —Conquering either by strong winged quick-going (steeds) or by the instigation of gods, the ass (of yours) O true ones, won that thousand in Yama's chariot race competition, full of wealth

*Notes*—वीळुपत्मभि—वीळु is enumerated in the list of the names of power (Nigh II 9 14) पत्मभि is the *instr* plu of पत्मन् from √*pat* to fly by adding the suffix मनिन्, *karmadhāraya* compd accented on the second member आशुहेमभि From आशु+√*hi* to impel with the suffix मनिन्; Geldner takes आशु to mean 'race horses' वा—According to Sāyana it is conjunctive (वा शब्द समुच्चये); Peterson takes first वा to mean 'either' and second वा 'or' जूतिभिः—*Instr* plu of जूति from √*jū* to speed, with noun making termination ति शाशदाना—√*śad* to prevail, pass perf part, accented on the first syllable (अभ्यस्तानामादि—Pān VI 1 189) तत्—Sāyana construes it with सहस्रम् and renders 'तत् प्रसिद्धम् सहस्र,' Griffith construes it

with रासभ and renders, 'that ass of yours', Peterson takes it as an introductory adverb and translates as 'then' सहस्रम्—According to Sāyana सहस्रम् means 'thousand enemies', Peterson takes it to mean 'thousands by way of prize' आजा—Loc sing of आजि, 'battle' (Nigh II 17 8) 'chariot-driving competition' (Peterson) प्रधने—Sāyana takes it as an adj of आजौ and renders by 'प्रकीर्णधनोपेते', Grassmann and Geldner take प्रधने to mean 'tournament' arranged by Yama, Parāñjpe thinks it to mean 'prize of victory' जिगाय—√ji to conquer, perf 3rd sing

तुग्रः । ह । भुज्युम् । अश्विना । उदऽमेघे । रयिम् । न । कः ।
चित् । ममृऽवान् । अव । अहाः ॥ तम् । ऊहथुः । नौभिः ।
आत्मन्ऽवतीभिः अन्तरिक्षप्रुत्ऽभिः । अपऽउदकाभिः ॥३॥

सा० भा०—अत्रेयमाख्यायिका । तुग्रो नाम अश्विनो प्रिय कश्चिद्राजर्षि । स च द्वीपान्तरवर्तिभि शत्रुभिरत्यन्तमुपद्रुत सन तेषा जयाय स्वपुत्र भुज्यु सेनया सह नावा प्राहैषीत । सा च नौ मध्येसमुद्रमतिदूर गता वायुवशेन भिन्ना आसीत । तदानीं स भुज्यु शीघ्रम् अश्विनौ तुष्टाव । तौ च स्तुतौ सेनया सहितम आत्मीयासु नौषु आरोप्य पितुस्तुग्रस्य समीप त्रिभिरहोरात्र प्रापयामासतुरिति । अयमर्थ इदमादिकेन तृचेन प्रतिपाद्यते । हशब्द प्रसिद्धौ । तुग्र खलु पूर्वं शत्रुभि पीडित सन् तज्जयार्थम उदमेघे । उदकैर्मिह्यते सिच्यते इति उदमेघ समुद्र तस्मिन भुज्युम् एतत्सज्ञ प्रिय पुत्रम अवाहा । नावा गन्तु पर्यत्याक्षीत । तत्र दृष्टान्त । ममृवान् म्रियमाण सन धनलोभी कश्चित मनुष्य रयिं न यथा धन परित्यजति तद्वत । हे अश्विनौ त च भुज्यु मध्ये समुद्र निमग्न नौभिः पितृसमीपम ऊहथु युवा प्रापितवन्तौ । कीदृशीभि । आत्मन्वतीभि आत्मीयाभि युवयो स्वभूताभिरित्यर्थ । यद्वा । धृतिरात्मा धारणवतीभिरित्यर्थ । अन्तरिक्षप्रुद्भिः अतिस्वच्छत्वादन्तरिक्षे जलस्य उपरिष्टादेव गच्छन्तीभि अपोदकाभिः सुश्लिष्टत्वात अपगतोदकाभि अप्रविष्टोदकाभिरित्यर्थ ॥ उदमेघे । 'मिह सेचने' । कर्मणि घञ् । 'न्यङ्क्वादीनां च' (पा० सू० ७ ३ ५३) इति कुत्वम । 'उदकस्योद सज्ञायाम्' (पा० सू० ६ ३ ५७)

थायादिना उत्तरपदान्तोदात्तत्वम् । ममृवान् । 'मृङ् प्राणत्यागे' । लिटः क्वसुः । क्रादिनियमात् प्राप्तस्य इटः 'वस्वेकाजाद्घसाम्' इति नियमात् अभावः । अहाः । 'ओहाक् त्यागे' । लुङि तिपि च्लेः सिच् । आगमानुशासनस्यानित्यत्वात् सगिटौ न क्रियेते । 'बहुलं छन्दसि' इति इडभावः । 'हल्ङ्याब्भ्यः' इति तिलोपः । रुत्व-विसर्गौ । पद्वा । 'मन्त्रे घस' इति च्लेर्लुक् । च्लेर्लुप्तत्वात इण् न क्रियते । नौभिः । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । आत्मन्वतीभिः । आत्मनो मतुप् । 'मादुपधायाः' इति वत्वम् । 'अनो नुट्' (पा० सू० ८. २. १६) इति नुट् । नलोपः । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । अन्तरिक्षप्रुद्भिः । 'प्रुङ् गतौ' ।'क्विप् च' इति क्विप् ॥

शब्दा०—तुग्रः=तुग्र नाम का कोई राजर्षि, ह=प्रसिद्ध अर्थ का वाचक एक निपात, भुज्युम्=तुग्र का पुत्र, अश्विना=ओ अश्विन्, उदमेघे=समुद्र में, रयिम्=धन को, न=तरह, कश्चित्=कोई, ममृवान्=मरता हुआ, अव अहाः=छोड़ा था, तम्=उस भुज्यु को, ऊहथुः=लाये, नौभिः=नौकाओं से, आत्मन्वतीभिः=प्राणवाली, अन्तरिक्षप्रुद्भिः=समुद्र पर तैरने-वाली, अपोदकाभिः=अन्दर जल न आनेवाली ।

हि० अ०—ओ अश्विन्, तुग्र ने भुज्यु को समुद्र के बीच छोड़ा था जैसे मरता हुआ कोई धन को (छोड़े); उस (भुज्यु) को प्राणवाली, समुद्र पर तैरनेवाली, अन्दर जल न आनेवाली नौकाओं पर (बैठाकर तुमलोग उसके घर) लाये ।

*Trans*—O Aśvins, Tugra had left Bhujyu in the cloud of waters (i.e. ocean) as a dying one (parts his) wealth. Him (you) brought by animated boats, floating over the ocean and keeping out the waters.

*Notes*—उदमेघे—Grassmann takes it to mean 'in a down-pour of rain' and Geldner as 'in a mass of water'. Tatpuruṣa compd. accented on the final syllable; also see note on उदप्रहेन (I. 38.9). ममृवान्—√*mṛ* to die, perf. part. अहाः—√*hā* to leave, irregular form of 's-aorist, 3rd. sing.; the final स् is dropped. ऊहथुः—√*vah* to carry, perf. 2nd. dual. आत्मन्वतीभिः—From

अत्मन् by adding the suffix मतुप् Sāyana takes it to mean 'your own' or 'animated' Wilson accepts the first meaning while Griffith and Peterson the second अन्तरिक्षप्रुद्भिः—प्रुद्भि *from* $\sqrt{pru}$ *to go*, with the suffix क्विप्; Tatpurusa compd accented on the second member Wilson following Sāyana translates 'floating over the ocean' Griffith as 'traversing air' and Peterson as 'plying in the sky'

तिस्रः । क्षपः । त्रिः । अहा । अतिव्रजत्ऽभिः । नासत्या ।
भुज्युम् । ऊहथुः । पतङ्गैः ॥ समुद्रस्य । धन्वन् । आर्द्रस्य ।
पारे । त्रिऽभिः । रथैः । शतपत्ऽभिः । षट्ऽअश्वैः ॥४॥

सा० भा०—हे नासत्यौ सेनया सह उदके निमग्नं भुज्युं तिस्रः क्षपः त्रिसंख्याका रात्रीः त्रिरह्ना त्रिवारमावृत्तान्यहानि च अतिव्रजद्भिः अतिक्रम्य गच्छद्भिरेतावन्तं कालमतिव्याप्य वर्तमानैः पतङ्गैः पतद्भिः त्रिभिः त्रिसंख्याकैः रथैः ऊहथुः युवामूढवन्तौ । क्वेति चेत् उच्यते । समुद्रस्य अम्बुराशेर्मध्ये धन्वन् धन्वनि जलवर्जिते प्रदेशे आर्द्रस्य उदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च । कथंभूतैः रथैः । शतपद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैरुपेतैः षळश्वैः षड्भिरश्वैर्युक्तैः ॥ तिस्रः । 'त्रिचतुरोः स्त्रियाम्' इति त्रिशब्दस्य तिस्रादेशः । स चान्तोदात्तः । 'अचि र ऋतः' इति रेफादेशे 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । क्षपः । विभक्त्यन्तस्य छान्दसं ह्रस्वत्वम् । यद्वा । क्षसि 'आतः' इति योगविभागादधातोरपि आकारलोपः । अहा । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । पतङ्गैः । 'पत्लृ गतौ' । 'पतेरङ्गच्' (उ० सू० १११६) । धन्वन् । 'धवि गत्यर्थः' । इदित्वात् नुम् । 'कनिन्युवृषि' इत्यादिना कनिन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । शतपद्भिः । शतं पादा येषाम् । 'संख्यासुपूर्वस्य' इति पादशब्दस्यान्त्यलोपः समासान्तः । अयस्मयादित्वेन भत्वात् 'पादः पत्' इति पद्भावः । यद्वा । पादसमानार्थः पच्छब्दः प्रकृत्यन्तरं द्रष्टव्यम् ॥

शब्दा०—तिस्र=तीन, क्षपः=रात्रि, त्रिः=तीन, अहा=दिन, अतिव्रजद्भिः=लगातार चलकर, नासत्या=ओ सत्यरूप अश्विन, भुज्युम्—भुज्यु को, ऊहथुः=लाये, पतङ्गैः=उड़नेवाले, समुद्रस्य=समुद्र के, धन्वन्=

सूखे स्थलपर, आर्द्रस्य=भीगे हुये (समुद्र) के, पारे=पार, त्रिभिः=तीन, रथैः=रथों से, शतपद्भिः=सौ पैरवाले, षडश्वैः=छै अश्वोंवाले ।

हि० अ०—ओ अश्विन्, तीन रात, तीन दिन लगातार चलकर भुज्यु को, सौ पैर वाले छै अश्वों से युक्त, उड़ने वाले तीन रथों से, पानी वाले समुद्र के पार, सूखे स्थल पर लाये ।

*Trans*—By travelling throughout three nights and three days, O true ones, you brought Bhujyu along the dry land, across the watery ocean with swift-flying three chariots, (yoked) with hundred footed six horses

*Notes*—अतिव्रजद्भिः—Governing compd accented on the second member नासत्या—Vocative in the beginning of a pāda, hence, not unaccented शतपद्भिः—Bahuvrihi compd accented on the first member

अनारम्भणे । तत् । अवीरयेथाम् । अनास्थाने । अग्रभणे । समुद्रे ॥ यत् । अश्विना । ऊहथुः । भुज्युम् । अस्तम् । शतऽअरित्राम् । नावम् । आतस्थिऽवांसम् ॥५॥

सा० भा०—हे अश्विनौ अनारम्भणे आलम्बनरहिते समुद्रे तत् कर्म अवीरयेथाम् । विक्रान्तं कृतवन्तौ युवाम् । अनारम्भणत्वमेव स्पष्टीकरोति । अनास्थाने । आस्थीयते अस्मिन् इति आस्थानो भूप्रदेशः । तद्रहिते स्थातुमशक्ये जले इत्यर्थः । अग्रभणे अग्रहणे । हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन् इत्यर्थः । किं पुनस्तत्कर्म । भुज्युं समुद्रे मग्नं शतारित्रां षड्रथ्याम् । यं काष्ठे पार्श्वतो बद्धैर्जलालोडने सति नौ शीघ्रं गच्छति तानि अरित्राणि । ईदृशीं नावम् आतस्थिवांसम् आस्थितवन्तमारूढवन्तं कृत्वा अस्तम् । गृहनामैतत् । पितुस्तुग्रस्य गृहं प्रति यत् ऊहथुः । तत्प्रापणमन्येंदुष्कर युवां समुद्रमध्ये कृतवन्तावित्यर्थः ॥ अनारम्भणे । आरभ्यते इत्यारम्भणम् । 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अवीरयेथाम् । 'वीर वीर विक्रान्तौ' । चुरादिरात्मनेपदी । अनास्थानाग्रभणयोः पूर्ववत् ल्युट्स्वरौ । अथ तु विशेष ।

'हुग्रहोर्भ ' इति भत्यम्। अस्तम्। अस्यते अस्मिन् सर्वमित्यस्त गृहम्। 'असिहसि' इत्यादिना तन्प्रत्यय । शतारित्राम्। 'ऋ गतौ'। 'अर्तिलूधूसू' (पा० सू० ३.२ १८४) इति करणे इत्रप्रत्यय । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

शब्दा०—अनारम्भणे=आलम्बन-रहित, आश्रय रहित, तत्=वह, अवीरयेथाम्=बहादुरी का कार्य किया, अनास्थाने=जहाँ खडा होने का स्थान नहीं था, अग्रभणे=जहाँ सहारारूप पकडने की कोई वस्तु नहीं, समुद्रे=समुद्र में, यत्=जब, अश्विनौ=दो अश्विन्, ऊहथुः=लाये, भुज्युम्=भुज्यु को, अस्तम्=घर, शतारित्राम्=सौ डाडवाली, नावम्=नौका पर, आतस्थिवांसम्=बैठाकर।

हि० अ०—समुद्र में जहां, पर कोई आश्रय नहीं था, (जहाँ) खडा होने का स्थान नहीं, (जहाँ सहारा रूप) पकडने की कोई वस्तु नहीं, (निश्चित ही तुमने) बहादुरी का कार्य किया, दो अश्विन्, जब तुम लोग सौ डाड-वाली नौका पर बैठाकर भुज्यु को (उसके) घर लाये।

*Trans*—(Indeed) you did a heroic deed in the ocean where there was nothing to give support, nothing to rest upon and nothing to catch at, when you brought Bhujyu, having seated (him) in a hundred oared boat, (his) dwelling

*Notes*—अनारम्भणे—From अन्+आ+√*rabh* (to grasp) with ल्युट्, Bahuvrihi, accented on the second member (नञ्सुभ्याम्—Pan VI 2 172) अवीरयेथाम्—From denom base √*viraya* to act like hero, impf 2nd dual अनास्थाने—Bahuvrihi, accented on the second member अग्रभणे—From √*grabh* (to catch) with ल्युट् Bahuvrihi compd शतारित्राम्—अरित्र from √*r* to go, Bahuvrihi compd accented on the first member आतस्थिवांसम्—√*stha* to stand, perf part

यम्। अश्विना। ददथुः। श्वेतम्। अश्वम्। अघऽअश्वाय। शश्वत्। इत्। स्वस्ति॥ तत्। वाम्। दात्रम्। महि। कीर्तेन्यम्। भूत्। पैद्वः। वाजी। सदम्। इत्। हव्यः। अर्यः॥६॥

सा० भा०—अत्रेदमाख्यायते । पेदुर्नाम कश्चित् स चाश्विनौ तुष्टाव । तस्मै प्रीतौ कंचिच्छ्वेतवर्णमश्वं दत्तवन्तौ । स चाश्वस्तस्य प्रौढं जयं चकारेति । एतदत्र प्रतिपाद्यते । हे अश्विनौ युवाम् अघाश्वाय अहन्तव्याश्वाय । पेदुनाम्ने राजर्षये यं श्वेतवर्णं अश्वं ददथुः दत्तवन्तौ सोऽश्वस्तस्मै स्वस्ति जयलक्षणं मङ्गलं शश्वत् इत् नित्यमेव चकार । वां युवयोः तत् दात्रं दानं महि महदतिगम्भीरम् अत एव कीर्तेन्यं सर्वैः कीर्तनीयं प्रशस्यं भूत् अभूत् । तस्मात् पैद्वः पेदोः सम्बन्धी पतनशील शीघ्रगामी वा अर्यः शत्रूणां प्रेरयिता युद्धेषु प्रेरयितव्यो वा वाजी वेगवान् सोऽश्वः सदमित् सर्वदैव हव्यः अस्माभिरप्याह्वातव्यः ॥ दात्रम् । ददातेरपि औणादिकः त्रप्रत्ययः । महि । 'मह पूजायाम्' । 'इन्सर्वधातुभ्यः' इति इन् । कीर्तेन्यम् । 'कॄत संशब्दने' । 'कृत्यार्थे तवैकेन्केन्यत्वनः' इति केन्यप्रत्ययः । 'ॠत इद्धातोः' इति इत्वम् । भूत् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । पैद्वः । पेदोः सम्बन्धी । 'तस्येदम्' इति अण् । छान्दसो वर्णलोपः । हव्यः । ह्वयते 'अचो यत्' इति यत् । 'बहुलं छन्दसि' इति सम्प्रसारणम् । गुणः । 'धातोस्तन्निमित्तस्यैव' इति अवादेशः । अर्यः । 'ऋ गतौ' । 'अघ्न्यादयश्च' (उ० सू० ४५५१) इति औणादिको यत् । यतोऽनावः इत्याद्युदात्तत्वम् ॥

शब्दा०—यम्=जिसको, अश्विना=ओ=अश्विन, ददथुः=दिया, श्वेतम्=श्वेत वर्ण के, अश्वम्=अश्व को, अघाश्वाय=दुष्ट अश्ववाले को, शश्वत्=सदा के लिये, इत्=पूर्ववर्ती शब्द पर बल देनेवाला एक निपात, स्वस्ति=मंगलकारी, तत्=वह, वाम्=तुम दोनों का, दात्रम्=दान, महि=महान्, कीर्तेन्यम्=प्रशंसा के योग्य, भूत्=हो गया, पैद्वः=पेदु का, वाजी=अश्व, सदम्=सदा के लिये, इत्=पूर्ववर्ती शब्द पर बल देनेवाला एक निपात, हव्यः=स्तुति के योग्य, अर्यः=मालिक के लिये ।

हि० अ० ओ अश्विन, दुष्ट घोड़ेवाले को तुमने जिस श्वेत वर्ण के अश्व को दिया वह (अश्व) सदा के लिये मंगलकारी बन गया । तुम्हारा यह महान् दान प्रशंसनीय हुआ, पेदु का यह अश्व मालिक के लिये स्तुति के योग्य बन गया ।

*Trans* —O Aśvins, the white horse (which) you gave to (a man) whose horse was mischievous, was proved to be a blessing for ever That great gift of yours was worthy of glorification, the horse of Pedu became the object of invocation to the patron

*Notes*—ददथुः—√*dā* to give, perf 2nd dual, not unaccented because preceded by यम् अयाश्वाय—Wilson following Sāyana translates as 'whose horses were indestructible', Griffith takes it as a proper name According to Peterson अयाश्वाय means 'to him whose horse was mischievous' Bahuvrihi compd accented on the first member कीर्तेन्यम्—Gerundive in एन्य from √*krī* to praise भूत्—√*bhu* to be, root aorist injun 3rd sing पैद्व—*From* पेदु *by adding the suffix* अण् इत्—a Particle which emphasises the preceding word हव्यः—Gerundive in य from √*hū* to call अर्यः—This word has variously been interpreted by the scholars Sayana derives it from √*r to go with the suffix* यत् and renders it by 'शत्रूणां प्रेरयिता युद्धेषु प्रेरयितव्यो वा' and takes it as an adj of वाजी or in apposition to हव्य, Wilson translates it 'scatterer (of the enemies) Griffith, too, regards it as an adj of वाजी, and renders it as 'brave' Grassmann thinks it to mean 'pious', Oldenberg as 'Arya', Geldner as 'rich' or 'powerful' and Peterson as 'patron' Parāñjpe takes it as gen sing of अरि

युवम् । नरा । स्तुवते । पज्रियाय॑ । कक्षीव॑ते । अरदतम् । पुरंम्ऽधिम् ॥ कारोतरात् । शफात् । अश्व॑स्य । वृष्णः । शतम् । कुम्भान् । असिञ्चतम् । सुरा॑याः ॥७॥

सा० भा०—अत्रयमाख्यायिका । कक्षीवानृषि पुरा तमसा तिरोहितज्ञान सन ज्ञानायमश्विनौ तुष्टाव । तस्मै अश्विनौ प्रभूता धिय दत्तवन्तावित्ति । तदाह । हे नरा नेतारावश्विनौ युव युवा पज्रियाय । पज्रा इत्यङ्गिरसाम आख्या 'पज्रा वा अङ्गिरस' इत्याम्नातत्वात । तेषा कुले जाताय कक्षीवते । कक्ष्या रज्जुरश्वस्य । तद्वते तत्सक्षाय स्तुवते युवयो स्तुति कुवते महा पुरंधि प्रभूता धिय बुद्धिम अरदत्त व्यलिखतम । यया सर्वार्थगोचरा भवति तथा कृतवन्ता

मित्यर्थः । अपि च कारोतरात् । कारोतरो नाम वंशखण्डचर्मवेष्टितो भाजन-विशेषो यस्मिन् सुरायाः स्रावणं क्रियते । लुप्तोपममेतत् । कारोतरात् यथा सुरायाः संपादकाः तां स्रावयन्ति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्म-दीयस्य अश्वस्य शफात् खुरात् सुरायाः शतं कुम्भान् असंख्यातान् सुराघटान् असिञ्चतम् अक्षारयतम् । यद्वा । सिञ्चतिः । पूरणार्थः । कारोतरस्थानीयात् युष्मदीयाश्वखुरात् या सुरा प्रवहति तया असंख्यातान् घटान् असिञ्चतम् अपूरयतम् । ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचन्ते तेषा-मित्यर्थः ॥ स्तुवते । स्तौतेर्लटः शतृ । अदादित्वात् शपो लुक् । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । पज्रियाय । पज्रशब्दात् शैषिको घञ् । कक्षीवते । 'आसन्दी-वदष्ठीवच्चक्रीवत्कक्षीवत्' इति निपातनात् कक्ष्याशब्दस्य संप्रसारणं मतुप् च । अरदतम् । 'रद विलेखने' । पुरंधिम् । 'पुरंधिर्बहुधी.' (निरु० ६ १३) इति यास्कः । पृषोदरादित्वात् पुरंधिभावः । यद्वा । पुरं पूरयितव्यं सर्वविषयज्ञान-मस्या धीयते अवस्थाप्यते इति पुरंधिर्बुद्धिः । 'कर्मण्यधिकरणे च' इति धाञः किप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनात् अलुक् । इयं तु व्युत्पत्ति-मात्रं वस्तुतः पृषोदरादिरेव । असिञ्चतम् । 'षिचिर् क्षरणे' । तौदादिकः । 'शे मुचादीनाम्' इति नुम् ॥

शब्दा०—युवम्=तुम दोनो ने, नरा=हे नेता, स्तुवते=स्तुति करने-वाले के लिये, पज्रियाय=पज्रि वंश में उत्पन्न, कक्षीवते=कक्षीवान को, अरदतम्=दिया, पुरंधिम्=ज्ञान, कारोतरात्=खाल के बने सुरापात्र से, शफात्=खुर, अश्वस्य=अश्व के, वृष्णः=शक्तिशाली, शतम्=सौ, कुम्भान्=घडों को, असिञ्चतम्=भर दिया, सुरायाः=सुरा के ।

हि० अ०—हे नेता, तुमलोगों ने स्तुति करनेवाले, पज्रि वंश में उत्पन्न, कक्षीवान् को प्रभूत ज्ञान दिया । शक्तिशाली अश्व के खुर से, मानो खाल का बना सुरा रखने का पात्र हो, सैकड़ो सुरा के घडों को भर दिया ।

*Trans*.—O heroes, you imparted knowledge to Kaksivān of Pajri family, who praised you. (You) poured forth hundred pitures of Soma-juice from the hoof of mighty steed as if from a strainer.

*Notes*—स्तुवते—√*stu* to praise, pres part dative. sing. अरदतम्—√*rad* to dig, impf. 2nd. dual पुरंधिम्—

From पुरं + √*dhā* + क्विन्; Wilson following Sāyaṇa translates as 'various knowledge', Grassmann as 'wealth; Griffith as 'wisdom', Geldner' as 'blessing' and Peterson as 'fortune'. असिञ्चतम्—√*sic* to pour, impf. 2nd. dual.

हिमेन । अग्निम् । घ्रंसम् । अवारयेथाम् । पितुऽमतीम् ।
ऊर्जम् । अस्मै । अधत्तम् ॥ ऋबीसे । अत्रिम् । अश्विना ।
अवऽनीतम् । उत् । निन्यथुः । सर्वऽगणम् । स्वस्ति ॥८॥

सा० भा०—अत्रेदमाख्यानम्। अत्रिम् ऋषिम् असुराः शतद्वारे पीडायन्त्रगृहे प्रवेश्य तुषाग्निना अदाहयन्त। तदानीं तेन ऋषिणा स्तुतावश्विनौ अग्निमुदकेनोपशमय्य तस्मात् पीडागृहात् अविकलेन्द्रियवर्गं सन्तं निरगमयतामिति। तदेतत् प्रतिपाद्यते। हे अश्विनौ हिमेन हिमवच्छीतेनोदकेन घ्रंसं दीप्यमानम् अत्रेर्दहनार्थमसुरैः प्रक्षिप्तं तुषाग्निम् अवारयेथां युवां निवारितवन्तौ शीतीकृतवन्तावित्यर्थः। अपि च अस्मै असुरपीडया कार्श्यं प्राप्ताय अत्रये पितुमतीम्। पितुरित्यन्ननाम। अन्नयुक्ताम् ऊर्जं बलप्रदं रसात्मकं क्षीरादिकम् अधत्तं पुष्ट्यर्थं प्रायच्छतम्। ऋबीसे अपगतप्रकाशे पीडायन्त्रगृहे अवनीतम् अवाङ्मुखतया असुरैः प्रापितम् अत्रिं सर्वगणम्। गणः समूहः। सर्वेषामिन्द्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथा उन्निन्यथुः तस्माद्गृहादुद्गमय्य युवां स्वगृहं प्रापितवन्तौ। यद्वा। हिमेन शीतेन वृष्ट्युदकेन अग्निम् अग्निवत्तीक्ष्णं घ्रंसम्। अहर्नामैतत्। सामर्थ्यात् निदाघकालीनम् अहः अवारयेथाम्। तस्याह्नस्तैक्ष्ण्यं निवारितवन्तौ। अपि च अस्मै अग्नये पितुमतीं चरुपुरोडाशादिलक्षणान्नोपेतामूर्जं बलकरं रसात्मकम् उपस्तरणाभिघारणात्मकं घृतमधत्तम्। वृष्ट्युत्पादनेनाग्न्यर्थं हवींषि निष्पादितवन्तावित्यर्थः। ऋबीसे अपगततेजस्के पृथिवीद्रव्ये अवनीतमोषधीनामुत्पादनाय अवस्तान्नीतम्। पार्थिवाग्निना परिपच्यमानाः उदकेन क्लिन्नाः ह्योषधिवनस्पतयो विरोहन्ति। अत्रिं हविषामत्तारमोषधिवनस्पत्यादीनां वा एवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेतं हे अश्विनौ युवां स्वस्ति अविनाशः यथा भवति तथा उन्निन्यथुः। व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्टादानीतवन्तौ। कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिक-

मश्विनो प्रवर्पणेन व्यक्तीकृतवन्तावित्यर्थः । अत्र पक्षो यास्केन 'हिमेनोदकेन' (निरु० ६ ३६) इत्यादिना उक्त ॥ पितुमतीम् । 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । ऋबीसे । अत्र यास्क । 'ऋबीसमपगतभासमपचितभासमपहृतभास गतभास वा' (निरु० ६ ३५) इति । पृषोदरादित्वादभिमतरूपस्वरसिद्धि । अत्रिम् । 'अद भक्षणे' । 'अदेस्त्रिनि च' इति चशब्दात् त्रि । अवनीतम् । 'गतिरनन्तर' इति गते प्रकृतिस्वरत्वम् । स्वस्ति । 'अस भुवि' । भावेक्तिन् । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् अस्तेर्भूभावाभाव ॥

शब्दा०—हिमेन=बर्फ से, अग्निम्=अग्नि को, घ्रंसम्=जलती हुई, अवारयेथाम्=बुझाया, पितुमतीम्=अन्न, ऊर्जम्=बलदायक, अस्मै=उसके लिये, अधत्तम्=दिया, ऋबीसे=अन्धेरी गुफा में, अत्रिम्=अत्रि को, अश्विना=ओ अश्विन् अवनीतम्=नीचे पड़े हुये को उन्निन्यथुः—ऊपर लाये सर्वगणम्=सभी अनुयायियो के साथ, स्वस्ति=कल्याण के मार्ग पर ।

हि० अ०- तुमने ठंडे जल से दहकती अग्नि को बुझाया, उसके लिये क्षीरयुक्त अन्न दिया । ओ अश्विन, अन्धेरी गुफा में नीचे पड़े हुये अत्रि को उसके अनुयायियों के सहित कल्याण के मार्ग पर ऊपर लाये ।

*Trans* —You pacified the burning fire with ice and gave nutritious food to him, O Aśvins, you brought out Atri (who was) cast downward into a dark cavern, with all his followers to blessing

*Notes*- -घ्रंसम्—Yāska takes it to mean day (Nir VI 36) According to him घ्रंसम् is the object of अवारयेथाम् and अग्नि is the उपमान of घ्रंसम् Sāyana takes अग्निम् as the object of अवारयेथाम् and घ्रंसम् as the adjective of अग्निम् In alternative, Sayana accepts Yāska's interpretation Geldner and Griffith understand अग्ने for अग्निम् Griffith renders' the fire's fierce burning' Peterson thinks घ्रंसम् as a substantive in apposition to अग्निम् and translates as 'dazzling lustre अवारयेथाम्—$\sqrt{vr}$ to cover mid caus impf 2nd dual पितुमतीम्—From $\sqrt{pi}$ with the suffix मतुप् अधत्तम्—

√*dhā* to put, impf. 2nd. dual, ऋबीसे—Yāska takes it to mean earth. Wilson understands it as 'dark cavern', Peterson as 'a fire pit', Grassmann as 'a hot fissure in the earth', Geldner as 'a smouldering fire', अवनीतम्—√*nī* with *ava* to cast downward, past part; for accent see निहिताः (I. 24.7).

परा । अवतम् । नासत्या । अनुदेथाम् । उच्चाऽबुध्नम् । चक्रथुः । जिह्मऽबारम् ॥ क्षरन् । आपः । न । पायनाय । राये । सहस्राय । तृष्यते । गोतमस्य ॥६॥

सा० भा० – अत्रेदमाख्यानम् । कदाचिन्मरुभूमौ वर्तमानस्य स्तोतुः गोतमस्य ऋषेः समीपं देशान्तरे वर्तमानं कूपमुत्खायाश्विनौ प्रापयेताम् । प्रापय्य च तं कूपं स्नानपानादिसौकर्याय उपरिमूलमधोबिलमवास्थापयतामिति । तदेतदाह । हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा एतत्संज्ञावश्विनौ युवाम् अवतम् । कूपनामैतत् । अवस्तात्ततं कूपं परा अनुदेथां गोतमस्य ऋषेः समीपे प्रेरयाथाम् । तदनन्तरं तं कूपम् उच्चाबुध्नम् उच्चैरुपरिष्टात् बुध्नो मूलं यस्य स तथोक्तः । जिह्मबारं जिह्ममवस्ताद्वर्तमानतया वक्रं बारं द्वारं यस्य स तथोक्तः । एवंगुणविशिष्टं चक्रथुः युवामकुरुताम् । तस्मात् कूपात् तृष्यते पिपासते गोतमस्य पायनाय पानार्थम् आपो न आपश्च । अत्र नशब्दश्चार्थे । क्षरन् प्रवाहरूपेण निरगमन् । कीदृशस्य । राये हवींषि ददतः सहस्राय सहनशीलाय । यद्वा । सहस्रसंख्याकाय राये धनाय एतत्संख्यधनलाभार्थं च अक्षरन् ॥ अनुदेथाम् । 'णुद प्रेरणे' । तौदादिकः । जिह्मबारम् । द्वारशब्दस्य पृषोदरादित्वात् बारादेशः । क्षरन् । 'क्षर संचलने' । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शपः पित्वादनुदात्तत्वम् । तिङो लसार्वधातुकस्वरेण धातुस्वरः । पायनाय । हेतुमिति णिच् । 'शाच्छासाह्वा' इति युक् । भावे ल्युट् । राये । 'रा दाने' । राति ददातीति राः । 'रातेर्डैः' (उ० सू० २. २२४) । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । तृष्यते । 'ञितृषा पिपासायाम्' । श्यन् । लटः शतृ । श्यनो नित्वादाद्युदात्तत्वम् । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (पा० म० २. ३. ६२. १) इति चतुर्थी ।

शब्दा०—परा=समीप, अवतम्=कुयें को, नासत्या=ओ सत्यस्वभाववाले, अनुदेथाम्=ऊपर उठाये, उच्चाबुध्नम्=ऊपर पेंदावाला, चक्रथुः=

किया, जिह्मबारम्=तिरछा मुहवाला, क्षरन्=बहाया, आपः=जल, न=तरह पायनाय=पीने के लिये, राये=धन के लिये, सहस्राय=हजार, तृष्यते=प्यासे, गोतमस्य=गोतम के लिये।

हि० अ०—ओ अश्विन्, तुमने (धन के) कुयें को ऊपर उठाया, इसके पेंदे को नीचे की ओर तथा मुह को (पृथिवी की ओर) तीरछा किया; सहस्र धन के प्यासे गोतम के लिये (उस कुयें से धन की) वर्षा की, मानो प्यास शान्त करने के लिये जल हो।

*Trans*—O true ones, you raised up the well (of treasure) and made its bottom upward and mouth curved (on the ground), poured as it were waters for drinking, for Gotama, thirsty for thousand-fold wealth

*Notes*—अनुदेथाम्—√*nud* to push, mid impf 2nd dual उच्चाबुध्नम्—Bahuvrihi, accented on the first member चक्रथुः—√*kr* to make, perf 2nd dual जिह्मबारम्—The word द्वार has become बार by dropping the letter द्; बार is modern बारी the mouth of a pot, Bahuvrihi compd accented on the first member क्षरन्—√*ksar* to flow, pres injun 3rd plu, Peterson takes it as a participle and renders as 'letting flow' न—According to Sāyana न is a conjunctive expressive of 'and', Peterson takes it to mean 'as it were' पायनाय—From √*pā* to drink by adding the suffixes युक and ल्युट् in dative sing सहस्राय—Sāyana understands it as 'सहनशीलाय' and in alternative as 'एतत्सङ्ख्यधनलाभार्थम्', Griffith takes it to mean 'thousand-fold' Both Sāyana and Griffith construe it with राये but Peterson with तृष्यते गोतमस्य—Use of gen in the sense of dative

जुजुरुषः। नासत्या। उत। वव्रिम्। प्र। अमुञ्चतम्। द्रापिम्-

ऽइंव । च्यवानात् ॥ प्र । अतिरतम् । जहितस्य । आयुः । दस्रा । आत् । इत् । पतिम् । अकृणुतम् । कनीनाम् ॥१०॥

सा० भा०—अथेदमाख्यानम्। वलीपलितादिभिरुपेतो जीर्णाङ्गः पुत्रादिभिः परित्यक्तश्च्यवनाख्यः ऋषिरश्विनौ तुष्टाव। स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति। तदेतदाह। हे नासत्या अश्विनौ जुजुरुषः जीर्णात् च्यवानात् च्यवनाख्यादृषेः सकाशात् वव्रिं रूपं शरीरमावृत्यावस्थितां जरां प्रामुञ्चतं प्रकर्षेणामोचयतम्। तत्र दृष्टान्तः। द्रापिमिव। द्रापिरिति कवचस्याख्या। यथा कश्चित् कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चात् शरीरात् पृथक्करोति तद्वत्। उत अपि च हे दस्रा दर्शनीयौ वा अश्विनौ जहितस्य पुत्रादिभिः परित्यक्तस्य ऋषेः आयुः जीवनं प्रातिरतं प्रावर्धयतम्। प्रपूर्वस्तिरतिर्वर्धनार्थः। आत् इत् अनन्तरमेव युवानं सन्तं कनीनां कन्यानां पतिं भर्तारम् अकृणुतम् अकुरुतम्। जुजुरुषः। 'जॄष् वयोहानौ'। लिटः क्वसुः। 'बहुलं छन्दसि' इति उत्वम्। द्विर्भावः। षष्ठ्येकवचने 'वसोः संप्रसारणम्' इति संप्रसारणम्। 'शासिवसिघसीनां च' इति षत्वम्। वव्रिम्। 'वृञ् वरणे'। 'आदृगमहन' इति किप्रत्ययः। जहितस्य। 'ओहाक् त्यागे'। कर्मणि निष्ठा। तस्य 'छन्दस्युभयथा' इति सार्वधातुकत्वात् शप्। तस्य 'बहुलं छन्दसि' इति श्लुः। 'जहातेश्च' (पा० सू० ६. ४. ११६) इति इत्वम्। कनीनाम्। 'रथमंतो बहुलम्' इति बहुलवचनात् कन्याशब्दस्य अत्र संप्रसारणम् ॥

शब्दा०— जुजुरुषः=वृद्ध, नासत्या=जो सत्य स्वभाववाले, उत=और, वव्रिम्=बाहरी रूप को, प्रामुञ्चतम्=अलग किया, द्रापिमिव=कवच की तरह, च्यवानात्=च्यवान् नामक ऋषि के शरीर से, प्रातिरतम्=बढ़ाया, जहितस्य=पुत्रों द्वारा छोड़ दिये गये की, आयुः=आयु को, दस्रा=जो आश्चर्यजनक कार्य करनेवाले, आत्=इसके बाद, इत्=पूर्ववर्ती शब्द पर बल देनेवाला एक निपात, पतिम्=स्वामी, अकृणुतम्=बनाया, कनीनाम्=युवतियों का।

हि० अ०—ओ अश्विन्, (तुम लोगों ने) वृद्ध च्यवान् (ऋषि) के बाहरी रूप को कवच की तरह अलग कर दिया। (पुत्रों द्वारा) छोड़ दिये गये (ऋषि) की आयु को, ओ आश्चर्यजनक कार्य करने वाले, (तुमलोगों ने) बढ़ाया तथा उसको सुन्दर युवतियों का पति बनाया।

*Trans.*—O true ones, you removed the outward appearance as it were an armour from the aged Cyavān You extended the life of an abandoned one, O miracle workers, and then you made him the husband of youthful maidens

*Notes*—जुजुरुषः—Gen sing of जुजुर्वस् from √*jṝ* to be old, perf. part वव्रिम्—Form (Nigh III 7 2) Yāska derives it from √*vr* to cover (वव्रि इति रूपनाम । वृणोतीति सत Nir. II 9) Sāyana here takes it to mean 'old age that prevails the body', Wilson and Griffith as 'skin' and Peterson as 'outer shell' अमुञ्चतम्—√*muc* to release, impf 2nd dual अतिरतम्—√*tṝ* with prefix प्र to prolong, to extend, 2nd dual जहितः—√*ha* to leave, past part अकृणुतम्—√*kr* to make, impf 2nd dual कनीनाम्—कनी is the Samprasārana of कन्या

तत् । वाम् । नरा । शंस्यम् । राध्यम् । च । अभिष्टिऽमत् । नासत्या । वरूथम् ॥ यत् । विद्वांसा । निधिम्ऽइव । अपऽगूळ्हम् । उत् । दर्शतात् । ऊपथुः । वन्दनाय ॥११॥

सा० भा०—अत्रेदमाख्यानम् । वन्दनो नाम कश्चिदृषिः स चासुरैः कूपे निखात उत्तरीतुमशक्नुवन्नश्विनावस्तौत् । तमश्विनौ कूपादुन्निन्यतुरिति । तदाह । नरा आरोग्यस्य नेतारौ हे नासत्यौ अश्विनौ वां युवयोः सबन्धि अभिष्टिमत् अभ्येषणयुक्तमाभिमुख्येन प्राप्तव्यं तथा वरूथं वरणीयं कामयितव्यं तत् कर्म शंस्यम् अस्माभिः प्रशंसनीयं राध्यम् आराधनीयं च । किं पुनस्तत्कर्म । विद्वांसा जानन्तौ युवां निधिमिव निक्षिप्तं धनमिव अपगूळ्हम् अरण्ये निर्जने देशे कूपमध्ये असुरैः निगूढं वन्दनाय वन्दनमृषिं दर्शतात् अध्वगैः पिपासुभिर्द्रष्टव्यात् कूपात् उत् ऊपथुः उदहार्ष्टम् । एवं यत् एतत् कूपादुद्धरणं तदित्यर्थः ॥ शंस्यम् 'शंसु स्तुतौ' । अस्मात् ण्यन्तात् 'अचो यत्' इति यत् । यतोऽनाव ' इत्याद्युदात्तत्वम् । अभिष्टिमत् । अभिपूर्वात् इष गतौ' इत्यस्मा-

ह्वावे वितन्। 'मन्त्रे वृष' इति वितन् उदात्तत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। शकन्ध्वादित्वात् पररूपत्वम्। 'तादौ च' इति तु गतिस्वरस्य सर्वविधीनां छन्दसि विकल्पितत्वादप्रवृत्ति। ततो मतुप्। अन्तोदात्तादुत्तरस्य तस्य 'ह्रस्वनुड्भ्याम्' इत्युदात्तत्वम्। वरूथम्। 'जृवृञ्भ्यामूथन्'। विद्वांसा। 'सुपां सुलुक्' इति विभक्तेराकार। अपगूळ्हम्। 'गुहू संवरणे'। कर्मणि निष्ठा। 'यस्य विभाषा' इति इट्प्रतिषेध। ढत्वधत्वष्टुत्वढलोपदीर्घा। 'गतिरनन्तर' इति पते प्रकृतिस्वरत्वम्। दर्शतात्। 'भृमृदृशि' इत्यादिना अतच्। ऊपथु। 'टुवप् बीजसन्तानै'। लिटि अयुसि यजादित्वात् सम्प्रसारणम्। द्विर्वचनादि। वन्दनाय। 'क्रियाग्रहणं कर्तव्यम्' इति कर्मण सम्प्रदानत्वाच्चतुर्थी॥

शब्दा०—तत्=वह वाम्=तुमलोगो को, नरा=ओ नेता, शंस्यम्=प्रशंसनीय, राध्यम्=पूजनीय, च=और, अभिष्टिमत्=सहायतात्मक, नासत्या=ओ सत्यस्वभाववाले, वरूथम्=सुरक्षा, यत्=जब विद्वांसा=जानकार, निधिमिव=खजाने की तरह, अपगूळ्हम्=छिपे हुये, उत्=ऊपर, दर्शतात्=कुयें से, ऊपथु=निकाले, वन्दनाय=वन्दन को।

हि० अ० ओ नेता, तुम्हारी यह अभिलषित सहायतात्मक सुरक्षा प्रशंसनीय है तथा पूजनीय है, जब जानकार (तुमने) वन्दन को छिपे धन की तरह कुयें से बाहर निकाला।

*Trans*—O leaders, that helpful protection of yours, (which is) desired (by us) is praiseworthy and adorable, O true ones, when you the knowing (gods) brought out Vandana from the well (in which he was) concealed like treasure

*Notes*—शंस्यम् *√sams to praise, with the suffix* यत् राध्यम्—*√radh* to succeed, with the suffix यत्, Wilson renders as 'to be adored', Griffith as 'worth the winning' and Peterson as 'worthy of acquisition' अभिष्टिमत्—Sāyana derives it from अभि+*√is to go*, Parāñjpe derives *it from* अभि+*√as to afford help*, Griffith takes it to mean 'favouring succour'. वरूथम्—From *√vr* to choose; Sayana renders it as 'वरणीय

कामयितव्य', Wilson as 'desired'. MWD takes it to mean 'protection'. अपगूळ्हम्—$\sqrt{}$*guh* with the prefix अप to conceal, the breathing ह् is a secondary sound being originally represented by घ This घ् sometimes represents the old palatal [illegible] which is replaced by cerebral sound before त् This 'guh' was originally 'gugh' also represented by 'gujh' With past participle suffix त added to it the 'zh' became cerebral dh the replacement being indicated by lengthening of the preceding syllable ऊपथु —$\sqrt{}$*vap* with उत् to bring out यत् वन्दनाय—This hemistich [illegible] variously interpreted by the scholars, according to Wilson 'when becoming aware (of the circumstance) you extricated Vandana (hidden like a concealed treasure from (the well) that was visible (to travellers)', Grassmann renders 'as you hauled up for Vandana from the pit the hidden thing like treasure', Griffith translates 'what time ye, knowing well his case, delivered Vandana from the pit like a hidden treasure', Peterson renders 'when you the knowing (gods) found out visibly [illegible] buried treasure as it were for Vandana'

तत् । वाम् । नरा । सनये । दंसः । उग्रम् । आविः । कृणोमि । तन्यतुः । न । वृष्टिम् ॥ दध्यङ् । ह । यत् । मधु । आथर्वणः । वाम् । अश्वस्य । शीर्ष्णा । प्र । यत् । ईम् । उवाच ॥१२॥

सा० भा०—अत्रेयमाख्यायिका । इन्द्रो दधीचे प्रवर्ग्यविद्या मधुविद्या चोपदिश्य यदि इमाम् अन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच । ततोऽश्विनौ अश्वस्य शिरश्छित्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्य शिरः प्रत्यधत्ताम् । तेन च दध्यङ ऋचः सामानि यजूषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादक ब्राह्मण चाश्विनावध्यापयामास । तदिन्द्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत् । अथाश्विनौ तस्य स्वकीय मानुष शिरः प्रत्यधत्तामिति

ग्रात्प्रामनवाजसनेययोः प्रपञ्चेनोक्तम् । तदेतत्प्रतिपाद्यते । हे नरा नरौ अश्विनौ वां युवयोः संबन्धि उग्रम् उद्गूर्णमन्यैर्दुःशकं दंसः । कर्मनामैतत् । युवाभ्यां पुरा कृतं तत् कर्म सनये धनलाभार्थम् आविष्कृणोमि प्रकटीकरोमि । तत्र दृष्टान्तः । तन्यतुः न यथा मेघस्य शब्दः वृष्टिं मेघान्तर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत् । किं तत्कर्म । अथर्वणः पुत्रः दध्यङ् एतत्संज्ञः ऋषिः अश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्याम् ईम् इमां मधुविद्यां यत् ह यदा खलु उवाच प्रोक्तवान् । तदानीमाश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणं च यत् भवदीयं कर्म तत् आविष्कृणोमीत्यर्थः ॥ सनये । 'षणु दाने' । 'खनिकषिकस्यज्यसिवसिवपिनिस्तनिवनिसनिपन्थिचरिभ्यश्च' (उ० सू० ४.५७९) इति इप्रत्ययः । तन्यतुः । 'तनु विस्तारे' । 'ऋतन्यञ्जि०' (उ०सू० ४.४४२) इत्यादिना यतुच् । यद्वा । 'स्तन शब्दे' । बाहुलकात् यतुच् । छान्दसः सलोपः । वृष्टिम् । वृष्यते सिच्यते अनेनेति वृष्टिः । 'मन्त्रे वृष' इत्यादिना क्तिन उदात्तत्वम् । आथर्वणः । अपत्यार्थे अणि 'अन्' (पा०सू० ६.४.१६७) इति प्रकृतिभावात् टिलोपाभावः । शीर्ष्णा । 'शीर्षंश्छन्दसि' (पा०सू० ६.१.६०) इति शिरः शब्दपर्यायः शीर्षन्शब्दोऽन्तोदात्तो निपात्यते । अल्लोपे सति उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥

शब्दा०—तत्=उस, वाम्=तुम्हारे, नरा=ओ नेता, सनये=धन के लिये, दंसः=आश्चर्यजनक कार्य, उग्रम्=शक्तिशाली, आविष्कृणोमि=प्रकट करता हूं, तन्यतुः=गर्जन, न=तरह, वृष्टिम्=वर्षा को, दध्यङ्=दध्यङ् नाम के ऋषि, ह=प्रसिद्ध अर्थ का वाचक एक निपात, यत्=जब, मधु=मधुविद्या का रहस्य, आथर्वणः=अथर्वण के पुत्र, वाम्=तुम दोनों को, अश्वस्य=अश्व के, शीर्ष्णा=सिर से, प्र=विशेष रूप से, यत्=जो, ईम्=इस, उवाच=कहा था ।

हि० अ०—ओ नेता, तुम्हारे उस शक्तिशाली कार्य को धन के लिये मैं प्रकट करता हूं जैसे गर्जन वर्षा को; जब अथर्वन् के पुत्र दध्यङ् ने अश्व के सिर से तुम लोगों को मधु विद्या का रहस्य बताया था ।

*Trans.*—O leaders, that powerful miracle of yours, in order to gain thereby, I make manifest as the thunder (anounces) the rain; when Dadhyañ, the son of Atharvan proclaimed to you the secret of mead with a horse's head.

*Notes*—सनये—Dative infinitive in ए from √*san* to gain. आविष्कृणोमि—√*kṛ* with आविः to make manifest, pres. 1rst. sing. तन्यतुः—Derived from √*tan* to stretch or √*stan* to thunder. उवाच—√*vac* to speak, perf. 3rd. sing. not unaccented because preceded by यत्.

अजोहवीत् । नासत्या । करा । वाम् । महे । यामन् । पुरुऽभुजा । पुरम्ऽधिः ॥ श्रुतम् । तत् । शासुःऽइव । वध्रिऽमत्याः । हिरण्यऽहस्तम् । अश्विना । अदत्तम् ॥१३॥

सा॰ भा॰—वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका । सा पुत्रलाभार्थमश्विनावाजुहाव । तदाह्वानं श्रुत्वाश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः । तदेतदाह । पुरुभुजा बहूनां पालकौ प्रभूतहस्तौ वा हे नासत्याश्विनौ महे महनीये पूजनीये यामन् यामनि । याति गच्छतीति याम स्तोत्रम् । तस्मिन्सति करा अभिमतफलस्य कर्तारौ वां युवां पुरंधिः बहुधीः वध्रिमती । वध्रिः पुत्रोत्पादनाशक्तः षण्डकः । तद्वती एतत्संज्ञा राजपुत्री अजोहवीत् । पुनःपुनः स्तुत्या पुत्रलाभार्थम् आहूतवती युवां च वध्रिमत्याः तत् आह्वानं श्रुतम् अशृणुतम् । तत्र दृष्टान्तः । शासुरिव । यथा शासुः आचार्यस्य वचनं शिष्योऽवहितः सन् एकाग्रेण शृणोति तद्वत् । श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रं अदत्तं प्रायच्छतम् ॥ अजोहवीत् । ह्वयतेर्यङ्लुगन्तात् लङ् । 'यङो वा' इति तिप ईडागमः । करा । करोतेः पचाद्यच् । 'सुपां सुलुक्' इति विभक्तेः आकारः । यामन् । 'आतो मनिन्क्वनिब्वनिपश्च' इति मनिन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । श्रुतम् । लङि 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । शासुः । शास्तुः । 'शासु अनुशिष्टौ ।' 'शंसिशसिशासि' (उ॰ सू॰ २ २५०) इत्यादिना संज्ञायां तृन् । इडभावः । छान्दसस्तलोपः ॥

शब्दा॰—अजोहवीत्=बुलाया था, नासत्या=ओ सत्यस्वभाववाले, करा=अभिमत कार्य करनेवाले, वाम्=तुम दोनों को, महे=श्रेष्ठ, बड़ी, यामन्=प्रार्थना में, पुरुभुजा=ओ अनेक (शक्तियों) का आनन्द लेनेवाले, पुरंधिः=बुद्धिमान ने, श्रुतम्=सुना, तत्=उसको, शासुरिव=गुरु की आज्ञा की तरह, वध्रिमत्याः=क्लीव या बधिया पुरुष की पत्नी की, हिरण्यहस्तम्=स्वर्ण हाथवाले, अश्विनौ=ओ अश्विन्, अदत्तम्=तुम दोनों ने दिया ।

हि० अ०—ओ अश्विन, ओ अनेक (शक्तियों) का आनन्द लेनेवाले, बुद्धिमान (स्त्री) ने अपनी श्रेष्ठ प्रार्थना में, (अभिमत) कार्य करनेवाले तुमको बुलाया था। नपुंसक पुरुष की स्त्री की उस (प्रार्थना) को तुम लोगों ने सुना मानो वह (गुरु को) आता हो, (तथा तुम लोगों ने उसे) ओ अश्विन्, स्वर्ण हस्तवाले (पुत्र) को दिया।

*Trans* —O true ones, a wise (woman) invoked you, the active *ones* in a powerful prayer, O enjoyer of many; you heard that (*invocation*) of *impotent man's* wife and gave her, O Aśvins, a golden handed (son)

*Notes*—अजोहवीत्—√*hū* to call, int impf 3rd sing करा—Acc dual m करा; Wilson following Sāyana takes it to mean 'accomplishers of desires' According to Geldner कर means hand Parāñjpe understands it as 'active' or 'skilful' यामन्—Loc sing of याम (from √*yā* to go) Sāyana on R V X 64 1 takes it to mean *sacrifice* ( यान्ति गच्छन्त्यत्र इति यामा यज्ञ ), but here he *understands as prayer* (याति गच्छतीति याम स्तोत्रम् ) Roth and Grassmann following Sayana understand it as 'going forth to the Gods with prayer and offering i e the sacrifice Pischel takes it to mean 'successful coming of the sacrifice Max-mullar and Oldenberg render it by 'way' or 'march', according to Parāñjpe यामन् means 'on appeal to gods or an appeal made at or through the sacrifice ' पुरुभुजा—पुरु+√*bhuj* to enjoy, Sāyana renders it by 'बहूना पालकौ प्रभूतहस्तौ वा'; Wilson translates as 'protectors of many', Griffith as 'lords of many treasures' and Peterson as 'they enjoy many powers', vocative not in the beginning of a pāda, hence, unaccented श्रुतम्—√*sru* to hear, rootaorist impv 2nd dual हिरण्यहस्तम्—See I 35 10 अदत्तम्—√*dā* to give impf 2nd dual

आस्नः । वृकस्य । वर्तिकाम् । अभीके । युवम् । नरा । नासत्या । अमुमुक्तम् ॥ उतो इति । कविम् । पुरुऽभुजा । युवम् । ह । कृपमाणम् । अकृणुतम् । विऽचक्षे ॥१४॥

सा० भा०—वर्तिका चटकसदृशस्य पक्षिणः स्त्री । तामरण्ये वर्तमानेन वृकेन ग्रस्तां पुरा किल अश्विनौ अमोचयताम् । तदेतदाह । नरा नेतारौ नासत्या अश्विनौ युवं युवाम् अभीके अभिगते वृकवर्तिकयोः संग्रामे वृकस्य विवृतस्य शुन आस्नः आस्यात् वर्तिकां चटकसदृशीम् अमुमुक्तम् अमोचयतम् । यास्कस्त्वाह । पुनः पुनर्वर्तते प्रतिदिवसमावर्तते इति वर्तिका उषा । तां वृकेण आवरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्तां तदीयमुखादश्विनावमुञ्चतामिति । उतो अपि च पुरुभुजा महाबाहू प्रभूतहस्तौ वा युवं ह युवां खलु कृपमाणं स्तुवन्तं कविम् एतन्नामानमृषिम् विचक्षे विशेषेण द्रष्टुं समर्थम् अकृणुतम् अकुरुतम् ॥ आस्नः । 'पद्दन्' इत्यादिना आस्यस्य आसन्नादेशः । 'अल्लोपोऽनः' इति अकारलोपे उदात्तनिवृत्तिस्वरेण 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । अमुमुक्तम् । मुचेरन्तर्भावितण्यर्थात् लङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । कृपमाणम् । कृपि स्तुतिकर्मा तुदादिषु द्रष्टव्यः । विकरणस्वरे प्राप्ते 'वृषादीनां च' इत्याद्युदात्तत्वम् । विचक्षे । 'तुमर्थे सेसेन्' इति से प्रत्ययः । 'स्कोः संयोगाद्योः' इति सलोपः ॥

शब्दा०—आस्नः=मुख से, वृकस्य=भेड़िये के, वर्तिकाम्=वर्तिका जाति की एक पक्षी को, अभीके=संग्राम में, युवम्=तुम दोनों ने, नरा=ओ नेता, नासत्या=ओ सत्य स्वभाववाले, अमुमुक्तम्=मुक्त किया, उतो=और, कविम्=कवि को, पुरुभुजा=ओ अनेक, (शक्तियों) का आनन्द लेनेवाले, युवम्=तुम दोनों ने, ह=निश्चित अर्थ का वाचक एक निपात, कृपमाणम्=प्रार्थना करनेवाले को, अकृणुतम्=किया, विचक्षे=देखने के लिये ।

हि० अ०—ओ नेता, ओ अश्विन, (वृक-वर्तिका) संग्राम में तुम लोगों ने वर्तिका पक्षी को भेड़िये के मुख से बचाया । ओ अनेक (शक्तियों) का आनन्द लेनेवाले, तुम दोनों ने प्रार्थना करनेवाले (अन्धे) कवि को देखने के लिये (समर्थ) किया ।

*Trans*—In the combat, O leaders, o true ones, you liberated a quail from the mouth of a wolf And

O enjoyer of many, you made the imploring poet to see

*Notes*—आस्नः—Abl. sing of आस्य (आस्यम् अस्यते। अस्यन्वते एनत् अन्नमिति वा Nir I 9) वृकम्—Sāyana takes it here to mean 'dog', Griffith as 'wolf' Yāska takes वृकम् to metaphorically mean 'sun' See note on अवृकम् (I 48 15) वर्तिकाम्—Yāska takes it to metaphorically mean 'dawn' He derives it from √*vrt* to turn अमु-मुक्तम्—√*muc* to release, pluperf 2nd dual उतो—Final ओ, not occurring in the first member of the compd, is called Pragṛhya, hence, इति is added to it in the Pada-text कृपमाणम्—√*krp* to implore (Sāyana), to lament (Macdonell) pres part अकृणुतम्—√*kr* to make, impf 2nd dual विचक्षे—Dative infinitive in ए from √*caks* to see

चरित्रंम् । हि । वेःऽईव । अच्छेदि । पर्णम् । आजा । खेलस्य । परिऽतक्म्यायाम् ॥ सद्यः । जङ्घाम् । आयसीम् । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तम् ॥१५॥

सा० भा०—अगस्त्यपुरोहित खेलो नाम राजा। तस्य सबन्धिनी विश्पला नाम स्त्री सग्रामे शत्रुभिश्छिन्नपादा आसीत्। पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्य अयोमय पाद समधत्ताम्। तदेतदाह। आजा आजौ सग्रामे अगस्त्यपुरोहितस्य खेलस्य सबन्धिन्या विश्पलाख्याया चरित्रं चरण वेरिव वे पक्षिण पर्णं पतत्रमिव अच्छेदि हि पुरा छिन्नमभूत् खलु। हे अश्विनौ युवामगस्त्येन स्तुतौ सन्तौ परितक्म्यायाम्। परितक्म्या रात्रि। 'परित एना तकति' (निरु० ११ २५) इति यास्क। एनामुभयत सूर्यो गच्छतीति तस्यार्थ। रात्रावागत्य सद्यः तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्तुं गन्तु विश्पलायै आयसीम् अयोमयीं जङ्घा जङ्घोपलक्षित पाद प्रत्यधत्तम्। सधानमेकीकरण कृतवन्ताविस्यर्थ ॥ चरित्रम् 'अर्तिलूधूसूखनसहचर इत्र' इति करणे इत्र। आजा। 'सुपां सुलुक्' इति

विभक्तेऽदिश । आयसीम् । अयःशब्दाद्विकारार्थे 'प्राणिरजतादिभ्योऽञ्' (पा० सू० ४. ३ १५४) । 'टिड्ढाणञ्' इति ङीप् ॥

शब्दा०—चरित्रम्=पैर, वेरिव=पक्षी की तरह, अच्छेदि=कट गया था, पर्णम्=पत्त, आजा=लड़ाई में, खेलस्य=खेल नामक राजा की, परितक्म्यायाम्=रात्रि में, सद्यः=शीघ्र ही, जङ्घाम्=पैर, आयसीम्=लोहे का, विश्पलायै=विश्पला के लिये, धने=धन के लिये, हिते=रखे गये सर्तवे=दौड़ने के लिये, प्रति=लिये, अधत्तम्=प्रदान किया ।

हि० अ०—रात्रि के समय, खेल की लड़ाई में (विश्पला का) पैर पक्षी के पक्ष की तरह कट गया था । शीघ्र ही (तुमलोगों ने) विश्पला को गड़े धन के लिये दौड़ने के लिये लोहे का पैर प्रदान किया ।

*Trans*—A leg (of Viśpalā) had been broken like a wing of a bird in the battle of Khela in night Immediately you restored an iron leg for Vispalā to run the race for hidden treasure

*Notes*—अच्छेदि—$\sqrt{}$*chid* to cut off, pass aorist, 3rd sing, not unaccented because preceded by हि खेलस्य—A proper noun Sayana thinks it as expressive of the wife of Khela' Peterson construes it with आजा and renders 'in the race run by Khela' परितक्म्यायाम्—Yāska derives it from $\sqrt{}$*tak* to run (परितक्म्या रात्रि । परित एना तक्म । तक्म इति उष्ण नाम । तकते इति सतः—Nir XI 25) Peterson takes it to mean running 'about' 'confusion', 'tumult of battle', 'melee' विश्पलायै—According to Sāyana Viśpalā was the wife of Khela Her leg was cut off by the enemies in the battle Pischel suggested for the first time that Vispala was a mare not the wife of Khela हिते—From $\sqrt{}$*dhā* to put, past part; see note on निहिता (I 24 7) सर्तवे—Dative infinitive in तवे from $\sqrt{}$*sr* to flow प्रति अधत्तम् $\sqrt{}$*dhā* with prefix प्रति to restore, impf 2nd dual.

शतम् । मेषान् । वृक्ये । चक्षदानम् । ऋज्रऽअश्वम् । तम् ।
पिता । अन्धम् । चकार ॥ तस्मै । अक्षी इति । नासत्या ।
विऽचक्षे । आ । अधत्तम् । दस्रा । भिषजौ । अनर्वन् ॥१६॥

सा० भा०—वृषागिरः पुत्र ऋज्राश्वो नाम राजर्षिः । तस्य समीपे अश्विनोर्वाहनभूतो रासभो वृकीभूत्वावतस्थे । स च तस्या आहारार्थमेकोत्तरशतसंख्याकान् पौरजनानां स्वभूतान्मेषाञ्छकलीकृत्य प्रददौ । 'ऋज्राश्वः शतमेकं च मेषान्' (ऋ० सं० १ ११७ १८) इति मन्त्रान्तरे दर्शनात् । एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनौ अस्मद्वाहननिमित्तम् अस्य आन्ध्यं जातमिति जानन्तौ तस्मै अक्षिणी प्रायच्छतामिति । तदेतदाह । अत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यं ऋज्राश्वं शतं शतसंख्याकान् मेषान् वृक्ये आत्मना पोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् तं चक्षदानम् । क्षदतिः अत्तिकर्मा अत्र शकलीकरणार्थः । शकलीकृत्य ददतम् ऋज्राश्वं पिता शापेन अन्धं दृष्टिहीनं चकार कृतवान् । हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा भिषजौ देवानां वैद्यभूतौ । 'अश्विनौ वै देवानां भिषजौ' (ऐ० ब्रा० १ १८; तै०सं० २ ३ ११) इति श्रुतेः । दस्रा दर्शनीयौ एतन्नामकौ वा हे अश्विनौ अनर्वन् अनर्वणौ द्रष्टव्यं प्रति पितृशापात् गमनरहिते अक्षी चक्षुषी विचक्षे विविधं द्रष्टुं समर्थे तस्मै ऋज्राश्वाय आधत्तम् अधत्तम् अकुरुतम् ॥ वृक्ये । वृकोऽरण्यश्वा । तस्य स्त्री वृकी । 'जातेरस्त्रीविषयात्' (पा० सू० ४ १ ६३) इति ङीष् । 'जसादिषु छन्दसि वावचनम्' इति चतुर्थ्येकवचनस्य आङ्भावे यणादेशे 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । चक्षदानम् । क्षदेर्लिटः कानच् । चित्स्वरः । अक्षी । 'ई च द्विवचने' (पा० सू० ७ १ ७७) इति परत्वात् अक्षिशब्दस्य ईकारान्तादेशः । स चोदात्तः । तस्मिन्कृते 'सकृद्गतौ विप्रतिषेधे' (परिभा० ४०) इति परिभाषया पुनः नुम् न भवति । विचक्षे । चष्टेः सम्पदादिलक्षणो भावे क्विप् । अनर्वन् । 'ऋ गतौ' । अस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणस्य विध्यन्तरोपसंग्रहार्थत्वात् भावे वनिप् । अर्वं गमनं विषयं प्रति एनयोः नास्तीति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । 'सुपां सुलुक्' इति द्विवचनस्य लुक् । छान्दसो नलोपाभावः ।

शब्दा०—शतम्=सौ, मेषान्=भेडों को, वृक्ये=वृकी के लिये, चक्षदानम्=बलिदान करते हुये, ऋज्राश्वम्=ऋज्राश्व नाम के अपने पुत्र को, तम्=उसको, पिता=पिताने, अन्धम्=अन्धा, चकार=कर दिया, तस्मै

=उसके लिये, अक्षी=आंखों को, नासत्या=ओ सत्य स्वभाववाले, विचक्षे देखने के लिये, आ अधत्तम्=प्रदान की, दस्रा=ओ आश्चर्यजनक कार्य करने वाले, भिषजौ=ओ वैद्यों, अनर्वन्=अनुपम ।

हि० अ०—वृकी के लिये सौ भेड़ों का बलिदान करते हुये ऋज्राश्व को उसके पिता ने उसे अन्धा बना दिया । उसको, ओ अश्विन्, ओ आश्चर्यजनक कार्य करनेवाले, ओ वैद्यों, तुमने देखने के लिये अनुपम आखें प्रदान की ।

*Trans* —To Rjrāśva, serving as food hundred sheep to a she-wolf, him, his father made blind To him O true ones, you restored matchless eyes, O miracle workers, O physicians

*Notes*—चक्षदानम्—√*ksad* to serve as food (Sāyana), to divide (Macdonell) perf part acc sing अक्षी—Final ई forming dual is called Pragrhya, hence, इति is added to it in the Pada-text विचक्षे—See I 116 14 अनर्वन्—From √*r* with the suffix वनिप्; Sāyana takes it as an adj of अक्षी He analyses the compd as 'अर्वं गमन विषय प्रति एनयो नास्तीति'; Yaska renders it अनर्वम् अप्रत्यृतम् अन्यस्मिन् (Nir IV 27), Grassmann understands it as 'not to be overpowered', Geldner as 'matchless', Peterson as 'unrivalled', Griffith as 'with sight uninjured' and Wilson as 'unable to find their way'

आ । वाम् । रथम् । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयन्ती ॥ विश्वे । देवाः । अनु । अमन्यन्त । हृत्ऽभिः । सम् । ऊँ इति । श्रिया । नासत्या । सचेथे इति ॥१७॥

सा० भा०—सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत् । तां सूर्यां सर्वे देवा वरयामासु । ते अन्योन्यमूचु आदित्यमवधिं कृत्वा आजिं धावाम । योऽस्माकं मध्ये उज्जेष्यति तस्येयं भविष्यतीति । तत्राश्विनावुदजयताम् । सा च सूर्या जितवतोस्तयो रथमारुरोह । अत्र 'प्रजापतिर्वै सोमाय राज्ञे दुहितरं

प्रायच्छन्' (ऐ० ब्रा० ४ ७) इत्यादिक ब्राह्मणमनुसन्धेयम्। इद चाख्यान सूर्याविवाहस्य स्तावकेन 'सत्येनोत्तभिता भूमि' (ऋ० सं० १० ८५ १) इति सूक्तेन विस्पष्टयिष्यते। हे अश्विनौ वां युवयो रथं काष्मेंव। काष्मंशब्द काष्ठवाची। यथा काष्ठम् आजियावानस्य अवधितया निर्दिष्ट लक्ष्यम् आशुगामी कश्चित् सर्वेभ्यो धावद्भ्य पूर्वं प्राप्नोति एवमेव सर्वेभ्यो देवेभ्य पूर्वम् अर्वता शीघ्रमवधि प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्या जयन्ती जीयमाना सूर्यस्य सवितु दुहिता आ अतिष्ठत् आरूढवती। विश्वे सर्वे इतरे देवाः एतत आरोहणस्थान हृद्भिः हृदयै अन्वमन्यन्त अन्वजानन्। तदानीं हे नासत्या-वश्विनौ श्रिया नक्षसहस्रलाभरूपया सपदा कान्त्या वा युवा सं सचेथे सगच्छेथे॥ जयन्ती व्यत्ययेन कर्मणि शतृप्रत्यय। हृद्भि। 'पद्दन्' इत्यादिना हृदयशब्दस्य हृद्भाव। सचेथे। 'षच समवाये'। स्वरितेत्त्वादात्मनेपदम्॥

शब्दा०—याम्=तुम्हारे, रथम्=रथ पर, दुहिता=पुत्री, सूर्यस्य=सूर्य की, काष्मेंव=विजय सीमा सूचक रेखा की तरह, आ अतिष्ठत्=आरूढ हुई, अर्वता=तेज दौडनेवाले के द्वारा, जयन्ती=विजय प्राप्त करती हुई, विश्वेदेवाः=सभी देवताओ ने, अन्वमन्यन्त=अनुमोदन किया, समर्थन किया, हृद्भि=हृदय से, उ=निश्चित अर्थ का बाचक एक निपात, श्रिया =गौरव से, समसचेथे=युक्त हुये, नासत्या=ओ सत्य स्वभाववाले।

हि० अ०—सूर्य की पुत्री (सूर्या) जीतती हुई तुम्हारे रथ पर आरूढ हुई मानो (यह किसी) तेज दौडनेवाले (के द्वारा प्राप्त) विजय-सीमा-सूचक रेखा हो। सभी देवताओं ने हृदय से (इसका) समर्थन किया, औ अश्विन सत्य स्वभाववाले, निश्चित ही (उस समय तुमने) गौरव प्राप्त किया।

*Trans* —The daughter of the sun mounted your chariot, reaching first, as it were a winning post (attained) by a quick runner All the gods approved it by hearts and O true ones, indeed, (you) obtained the glory

*Notes*—अर्वता—'Runner' (Sāyana), 'with courser (Griffith) 'with (her) horse' (Peterson) जयन्ती—$\sqrt{ji}$ to conquer, pres part nom sing fem, 'first-reacing' (Griffith), 'victorious' (Peterson) अन्वमन्यन्त—$\sqrt{man}$

with prefix अनु to assent. irr impf. 3rd. plu. संसचेथे—$\sqrt{}$*sac* with सम् to obtain., mid. pres. 2nd. dual; final ए forming dual number is Pragṛhya; hence, इति in the Pada-text.

यत् । अयातम् । दिवःऽदासाय । वर्तिः । भरत्ऽवाजाय । अश्विना । हयन्ता ॥ रेवत् । उवाह । सचनः । रथः । वाम् । वृषभः । च । शिंशुमारः । च । युक्ता ॥१८॥

सा० भा०—हे अश्विनौ हयन्ता स्तुतिभिराहूयमानौ युवां भरद्वाजाय संध्रियमाणहविर्लक्षणान्नाय यजमानाय दिवोदासाय एतत्संज्ञाय राजर्षये अभीष्टं फलं दातुं वर्तिः तदीयं गृहं यत् यदा अयातम् अगच्छतम् तदानीं रेवत् धनयुक्तम् अन्नं वां युवयोः सचनः सेवनः रथः उवाह । तस्मै दिवोदासाय प्रापयामास । अपि च तस्मिन् रथे वृषभः अनड्वान् शिंशुमारः ग्राहः च परस्पर विरुद्धावपि स्वसामर्थ्यप्रकटनाय युक्ता वाहनतया संयुक्तावास्ताम् ॥ दिवोदासाय 'दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः' (का० ६. ३. २१. ५) इत्यलुक् । दिवोदासादीनां छन्दस्युपसंख्यानम्' इति पूर्वपदाद्युदात्तत्वम् । भरद्वाजाय । 'भृञ् भरणे' । अस्माद्व्यत्ययेन कर्मणि शतृप्रत्ययः । शतुः 'छन्दस्युभयथा' इति आर्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात् प्रत्ययाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । हयन्ता । ह्वेञः कर्मणि लटो व्यत्ययेन शतृ । 'बहुलं छन्दसि' इति संप्रसारणम् । शपि गुणे छान्दसः अयादेशः । रेवत् । रयिशब्दात् मतुप् । 'रयेर्मतौ बहुलम्' इति संप्रसारणम् । 'छन्दसीरः' इति मतुपो वत्वम् । 'रयिशब्दाच्च' (का० ६. १. १७६. १) इति मतुप उदात्तत्वम् । सचनः 'षच सेवने' । 'अनुदात्तेतश्च हलादेः' इति युच् । युक्ता । 'सुपां सुलुक्' इति विभक्तेः आकारः ॥

शब्दा०—यत्=जब, अयातम्=आये, दिवोदासाय=दिवोदास के लिये, वर्तिः=घर, भरद्वाजाय=पवित्र यजमान, अश्विना=ओ अश्विन् हयन्ता=बुलाये जाने पर, रेवत्=धन से युक्त, उवाह=लाया था, सचनः =सहायक, रथः=रथ, वाम्=तुम लोगो का, वृषभः=बैल, च=और शिंशुमारः=घड़ियाल, च=और, युक्ता=जोते गये थे ।

हि० अ०—ओ अश्विन्, बुलाये जाने पर, पवित्र यजमान दिवोदास को (धन देने के लिये) जब तुमलोग (उसके) घर आये (उस समय) धन से भरा हुआ तुम्हारा सहायक रथ लाया था और (उसमें एक तरफ) बैल तथा (दूसरी तरफ) घड़ियाल जोते गये थे।

*Trans.*—O Aśvins, being invited, when you came to (his) house (to give wealth) to Divodāsa, a pious worshipper, your helping chariot, full of riches, carried (you) and a bull and a dolphin were yoked together.

*Notes*—अयातम्—$\sqrt{y\bar{a}}$ to go, impf. 2nd dual; not unaccented because preceded by यत्. भरद्वाजाय—From $\sqrt{bh\d{r}}$ to bear; pious worshipper; it is in apposition to दिवोदासाय; Griffith takes it as a proper name like दिवोदास. वर्तिः—*From* $\sqrt{v\d{r}t}$ *to turn, to go on* round, Sāyaṇa takes it to mean house. हयन्ता—Pres. part. from $\sqrt{hi}$ to 'drive quickly; Wilson, following Sāyaṇa translates as being invited; Griffith takes it to mean 'hasting 'and Peterson as 'in haste'; रेवत्—From रयि with the suffix वत्. सचनः—'Helping' (Wilson) 'ever-present' (Peterson); Sāyaṇa and Oldenberg derives it from $\sqrt{sac}$ to accompany; *Geldner* takes it from चन 'having the same wish'. युक्ता—$\sqrt{yuj}$ to unite, past part, dual ending in आ.

रयिम् । सुऽक्षत्रम् । सुऽअपत्यम् । आयुः । सुऽवीर्यम् । नासत्या ।
वहन्ता ॥ आ । जह्नावीम् । सऽमनसा । उप । वाजैः । त्रिः ।
अह्नः । भागम् । दधतीम् । अयातम् ॥१६॥

सा० भा०—हे नासत्यावश्विनौ सुक्षत्रं शोभनबलं रयिं धनं स्वपत्यं शोभनैः पुत्रादिभिरुपेतं सुवीर्यं शोभनवीर्योपेतम् आयुः। अन्ननामैतत्। एवं-गुणविशिष्टमन्नं च वहन्ता धारयन्तौ युवां समनसा समानमनस्कौ सन्तौ जह्नावीं जह्नोर्महर्षेः संबन्धिनीं प्रजाम् आ अयातम् आभिमुख्येनागच्छतम्।

कीदृशीं वाजैः हविर्लक्षणैरन्नैरुपेताम्। अह्नः। अत्र अहः शब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते। तस्य प्रातः सवनादिरूपेण त्रिः त्रिधा विभक्तं भागम् अंशं दधतीं बिभ्रतीम्। अनुसवनं हविर्भिर्यजमानामित्यर्थः॥ सुक्षत्रम्। बहुव्रीहौ 'नञ्सुभ्याम्' इति उत्तरपदान्तोदात्तत्वम्। सुवीर्यम्। 'वीरवीर्यौ च' इति बहुव्रीहौ उत्तरपदाद्युदात्तत्वम्। जह्नावीम्। जह्नुशब्दात् 'तस्येदम्' इत्यर्थे अण्। 'टिड्ढाणञ्' इति ङीप्। जाह्नवी। ह्रस्वदीर्घयोर्विनिमयः पृषोदरादित्वात्। उक्तं च –'वर्णागमो वर्णविपर्ययश्च' (का० ६. ३. १०९) इति। अत एव मध्योदात्तत्वम् ॥१९॥

शब्दा० –रयिम्=धन, सुक्षत्रम्=सुन्दर शक्तियुक्त, स्वपत्यम्=सुन्दर संतानयुक्त, आयुः=उम्र, सुवीर्यम्=सुन्दर पराक्रमवाले, नासत्या=ओ सत्य स्वभाववाले, वहन्ता=लाते हुये, जह्नावीम्=जह्नु के पुत्रों को, समनसा=एकमत से, उप=पास, वाजैः=धन के साथ, त्रिः=तीन बार, अह्नः=दिन में, भागम्=हिस्सा, दधतीम्=देनेवाले, आयातम्=आये।

हि० अ० –ओ अश्विन्, सुन्दर शक्ति एवं सुन्दर संतान युक्त धन तथा पराक्रमशाली आयु लाते हुये (अर्थात् प्रदान करते हुये) दिन में तीन बार (तुम्हारा) हिस्सा प्रदान करने वाले जह्नु के पुत्रों के यहाँ तुम एकमत से धन के साथ आये।

*Trans.*—O true ones, carrying wealth accompanied by good strength and good offspring, and life accompanied with heoric vigour, you with accordant mind and with riches came to descendants of Jahnu who offered (your) share thrice a day.

*Notes*—सुक्षत्रम्, स्वपत्यम्, सुवीर्यम्—All are Bahuvrihi compds. accented on the second member (नञ्सुभ्याम्—Pāṇ. VI. 2.172). आयुः—Sāyaṇa takes it to mean food. वहन्ता—$\sqrt{}$*vah* to carry. pres part. nom. dual. जह्नावीम्—The word जह्नु with the suffixes अण् and ङीप् would be जाह्नवीम्, but the place of vowels of the first and the second syllables has been interchanged. दधतीम्—$\sqrt{}$*dhā* to put, pres. part. fem. acc. sing. अयातम्—$\sqrt{}$*yā* to go, impf. 2nd. dual.

परिऽविष्टम् । जाहुषम् । विश्वतः । सीम् । सुऽगेभिः । नक्तम् । ऊहथुः । रजःऽभिः ॥ विऽभिन्दुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातम् ॥२०॥

सा० भा०—जाहुषो नाम कश्चिद्राजा । विश्वतः सर्वतः परिविष्टं शत्रुभिः परिवृतं तं राजानं हे नासत्यावश्विनौ अजरयू जरारहितौ नित्यतरुणौ युवां विभिन्दुना विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन नक्तं रात्रौ सुगेभिः सुष्ठु गन्तुं शक्यैः रजोभिः रञ्जकैर्मार्गैः ऊहथुः तस्मात् शत्रुसमूहान्निरगमयतम् । सीम् इत्येतत् पादपूरणम् । निर्गतेन तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान् वि अयातं विशेषेणागच्छतम् ॥ परिविष्टम् । 'विश प्रवेशने' । कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । 'सुदुरोरधिकरणे' इति गमेर्डः । विभिन्दुना । 'भिदिर् विदारणे' । औणादिक उप्रत्ययो नुमागमश्च । अजरयू । न जरा अजरा तामात्मान इच्छन्तः । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ह्रस्वदीर्घयोर्निषेधः । 'क्याच्छन्दसि' इति उप्रत्ययः ॥

शब्दा०—परिविष्टम्=घिरा हुआ, जाहुषम्=जाहुष को, विश्वतः=चारों तरफ से, सीम्=पादपूरण के लिये एक निपात, सुगेभिः=चलने में आसान, नक्तम्=रात्रि में ऊहथुः=लाये, रजोभिः=आकाश मार्ग से, विभिन्दुना=शत्रुओं का भेदन करनेवाले, नासत्या=ओ सत्य स्वभाववाले, रथेन=रथ से, पर्वतान्=पर्वतों को, अजरयू=ओ कभी वृद्ध न होनेवाले, वि अयातम्=पार किये ।

हि० अ०—तुम लोगो ने जाहुष को जो चारो तरफ से (शत्रुओं द्वारा) घिरा हुआ था, रात्रि में चलने में आसान आकाश मार्ग से लाया । ओ कभी वृद्ध न होनेवाले, ओ अश्विन्, (शत्रुओं का) भेदन करनेवाले रथ से तुम लोग पर्वतो को पार किये ।

*Trans.*—You brought Jāhusa who was surrounded on all sides, by night through aerial region, (on the path) easy to travel. O true ones, with your foe-overwhelming chariot you came across the mountains, O unaging ones.

*Notes*—परिविष्टम्—From √*viś* with the prefix परि to surround, past part.; for accent see निहिताः (I. 24.7.) सीम्—An emphatic particle which gives a slight emphasis on the preceding word. It is used in all numbers and genders of 3rd person. सुगेभिः—Bahuvrihi compd. accented on the second member (नञ्सुभ्याम् Pāṇ. VI. 2.172). विभिन्दुना—From √*bhid* to cut; It is an adjective of रथेन; Wilson following Sāyaṇa takes it to mean 'foe-overwhelming'. According to Peterson विभिन्दुना means 'which cuts a way before it'. अजरयू—Final ऊ forming dual is called Pragṛhya; hence, इति is added *to it in the Pada-text.* वि अयातम्—√*yā* with वि *to cross* over, impf. 2nd dual.

एकस्याः । वस्तोः । आवतम् । रणाय । वशम् । अश्विना । सनये । सहस्रा ॥ निः । अहतम् । दुच्छुनाः । इन्द्रऽवन्ता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥२१॥

सा० भा०—हे अश्विनौ वशम् एतत्संज्ञमृषिं एकस्याः वस्तोः एकस्याह्नः रणाय रमणीयाय सहस्रा सहस्रसंख्याकाय सनये धनलाभाय आवतम् अरक्षतम् । स ऋषिः प्रत्यहं यथा सहस्रसंख्यं धनं लभते तथा रक्षितवन्तावित्यर्थः । अपि च हे वृषणौ कामानां वर्षितारावश्विनौ इन्द्रवन्ता इन्द्रेण संयुक्तौ युवां दुच्छुनाः दुष्टमुखान् दुःखस्य कर्तॄन् पृथुश्रवसः विस्तीर्णयशसः अरातीः शत्रून् निरहतं निःशेषेणावधिष्टम् । यद्वा । कानीनस्य पृथुश्रवःसंज्ञस्य राज्ञः शत्रूनिति योज्यम् ॥ सहस्रा । 'सुपां सुलुक्' इति चतुर्थ्या आदेशः । अहतम् । लङि थसस्तम् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । दुच्छुनाः शुनमिति सुखनाम । दुष्टं सुखं यासां तास्तथोक्ताः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् ॥

शब्दा०—एकस्याः=एक, वस्तोः=दिन में, आवतम्=रक्षा किया, रणाय=रमणीय, वशम्=वश नाम के ऋषि को, अश्विना=ओ अश्विन्, सनये=धन की प्राप्ति के लिये, सहस्रा=हजारों, निरहतम्=नष्ट किया,

दुच्छुनाः=कष्ट देनेवाले, इन्द्रवन्ता=इन्द्र के साथ, पृथुश्रवस=पृथुश्रवस् के, वृषणौ=ओ इच्छाओं की पूर्ति करनेवाले, अरातीः=शत्रुओ को।

हि॰ अ॰—ओ अश्विन्, तुम लोगो ने वश को, एक ही दिन में हजारो सुन्दर धन की प्राप्ति के लिये, (उसकी) रक्षा की। ओ इच्छाओ की पूर्ति करनेवाले, इन्द्र के साथ तुमने पृथुश्रवस् को कष्ट देनेवाले शत्रुओं को नष्ट किया,

*Trans*—O Asvins, you protected Vasa for (his) gain of beautiful thousands (of wealth) in course of a single morning Accompanied by Indra you smote away malignant enemies of Prthusravas, O fulfiller of desires

*Notes*—आवतम्—√*av* to protect, impf 2nd, dual रणाय—From √*ran* to rejoice, Sāyana takes it to mean 'beautiful' सनये—Dative infinitive in ए from √*san* to gain अहतम्—√*han* to kill, impf 2nd dual दुच्छुना—Bahuvrihi compd (दुष्ट सुख यासा तास्तयोक्ता) accented on the first syllable of the second member (परादिश्छन्दसि बहुलम् Pān VI 2 199) Griffith and Peterson think it as an abstract noun meaning 'misfortune', 'ill luck'

शरस्य। चित्। आर्चत्ऽकस्य। अवतात्। आ। नीचात्। उच्चा। चक्रथुः। पातवे। वाः। इति वाः॥ शयवे। चित्। नासत्या। शचीभिः। जसुरये। स्तर्यम्। पिप्यथुः। गाम्॥२२॥

सा॰ भा॰—आर्चत्कस्य ऋचत्कपुत्रस्य शरस्य एतत्संज्ञस्यापि स्तोतु पिपासितस्य पातवे पानार्थं नीचात् नीचानात् अवतात् कूपात् उच्चा उच्चै-रुपरिष्टात् वाः उदक हे अश्विनौ युवाम आ चक्रथुः आभिमुख्येन कृतवन्तौ। तथा हे नासत्यावश्विनौ शचीभिः युष्मदीयै कर्मभि परिचरणं जसुरये श्रान्ताय शयवे चित् शयुनाम्ने ऋषये स्तर्यं निवृत्तप्रसवा गाम् अग्निहोत्रार्थस्य पयसो

दोग्ध्रीं पिप्यथुः पयसा पूर्वामापूरितवन्तौ ॥ पातवे । 'पा पाने' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्यय । जसुरये । 'जसु हिंसायाम् ।' 'जसिसहोरुरिन्' (उ० सू० २ २३१) । स्तर्यम् । स्तीर्यते आच्छाद्यते प्रसवसामर्थ्याभावेन इति स्तरी । 'अवितृस्तृतन्त्रिभ्य ई' (उ० सू० ३ ४३८) इति ईकारप्रत्यय । 'छान्दसि' इति अमि पूर्वत्वस्य विकल्पितत्वात् अभावे यणादेश । 'उदात्तस्वरितयोर्यण' इति परस्यानुदात्तस्य स्वरितत्वम । पिप्यथु । 'प्यायी वृद्धौ' लिटि व्यत्ययेन परस्मैपदम । 'लिड्यङोश्च' (पा० सू० ६ १ २९) इति पीरभाव ।

शब्दा०=शरस्य=शर नाम के स्तोता के, चित्=आदर अर्थ में प्रयुक्त निपात, आर्चत्कस्य=ऋचत्क के पुत्र के, अवतात्=कुयें से, नीचात्=नीचे से, उच्चा=ऊंचा, आ चक्रथुः=ऊपर किया, पातवे=पीने के लिये, वाः=जल, शयवे=शयु के लिये, चित्=आदर अर्थ में प्रयुक्त निपात, नासत्या=ओ सत्यस्वभाववाले, शचीभिः=शक्ति से, जसुरये=थके हुये स्तर्यम्=वन्ध्या, पिप्यथुः=दूध देने वाली बनाया, गाम्=गाय को ।

हि० अ०—ऋचत्क के पुत्र शर के पीने के लिये (तुमने) नीचे कुयें से जल को ऊपर किया । ओ अश्विन, थके शयु के लिये अपनी शक्ति से वन्ध्या गाय को दूध देनेवाली बनाया ।

*Trans* —(You) raised on high the waters from the bottom of well for drinking of Sara, the son of Rcatka O true ones, by your power you made a sterile cow swell milk for exhausted Śayu

*Notes*—पातवे—Dative infinitive in तवे from √*pā* to drink वाः—Nom sing of वार्; the visarjaniya is rhotosized, hence, इति is added to it in the Pada-text It is repeated only to show that it is not the form of वारिन् but of वार् जसुरये—Dative sing of जसुरि from √*jas* (to be exhausted) with noun making termination उरिन् स्तर्यम्—Sterile, for accent see note on स्तर्यम् (I 32 2). पिप्यथुः—√*pi* to swell, perf 2nd dual

वस्यते । स्तुवते । कृष्णियाय । ऋजूऽयते । नासत्या । शचीभिः ।
शुम् । न । नष्टम्ऽइव । दर्शनाय । विष्णाप्वम् । ददथुः ।
रवकाय ॥२३॥

सा० भा० —अवस्यते अवन रक्षणमात्मन इच्छते । स्तुवते स्तुति कुर्वते कृष्णियाय । कृष्णो नाम कश्चित । तस्य पुत्राय । ऋजूयते आर्जवमिच्छते विश्वकाय एतत्सज्ञाय ऋषये हे नासत्यौ युवा शचीभि आत्मीयं कर्मभि विष्णाप्वं नाम विनष्ट पुत्र दर्शनाय दर्शनार्थं ददथुः दत्तवन्तौ । तत्र दृष्टान्त । पशुं न नष्टमिव । एक उपमार्थीय पूरक । यथा कश्चिद्विनष्ट पशु स्वामिनो दृष्टिपथ प्रापयति तद्वत् ॥ अवस्यते । अव शब्दात् 'सुप आत्मन क्यच' । 'क्युतनुम' इति विभक्तेरुदात्तत्वम् । कृष्णियाय । कृष्णशब्दादपत्यार्थे छान्दसो घश् ॥

शब्दा०—अवस्यते=सहायता चाहनेवाले, स्तुवते=स्तुति करनेवाले, कृष्णियाय=कृष्ण के पुत्र, ऋजूयते=सरल जीवन व्यतीत करने वाले, नासत्या =औ सत्य स्वभाववाले, शचीभिः=शक्ति से, पशुम्=पशु, नष्टमिव=नष्ट हुये की तरह, न= उपमा का वाचक किन्तु यहां पदपूरण के लिये, दर्शनाय =देखने के लिये, विष्णाप्वम्=विष्णापू को, ददथुः=दिया, विश्वकाय =विश्वक के लिये ।

हि० अ० ओ अश्विन् सहायता चाहनेवाले, स्तुति करनेवाले, तथा सरल जीवन व्यतीत करनेवाले कृष्ण के पुत्र विश्वक के लिये तुमने अपनी शक्ति से, विष्णापू को दिया जैसे चुराया हुआ पशु (मालिक [illegible] पास) देखने के लिये (आ जाय) ।

*Trans* —To Visvaka, the son of Krṣna, seeking for protection, praying and living a holy life, O true ones, by your power you gave him Visnāpū like a lost animal to see

*Notes*—अवस्यते—Dative sing of अवस् (from √*av* to protect) by adding the suffix क्यच् स्तुवते—Dative of स्तुवत् from √*stu* to praise ऋजूयते—Dative of ऋजयत् from denom base √*rjūya* to act in a simple manner

Wilson takes it to mean 'lover of rectitude' and Griffith as 'righteous;

दश॑ । रात्री॑: । अशि॑वेन । नव॑ । द्यून् । अव॑ऽनद्धम् । श्न॒थि॒तम् । अप्ऽसु । अन्तरि॑ति ॥ विऽप्रु॑तम् । रेभम् । उ॒दनि॑ । प्रऽवृ॑क्तम् । उत् । नि॒न्य॒थुः । सोम॑म्ऽइव । स्रु॒वेण॑ ॥२४॥

सा० भा० – पुरा खलु रेभमृषिं पाशैर्बध्वा असुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः । स च अश्विनौ स्तुवन् दश रात्रीः नवाहानि च कूपमध्ये तथैवावतस्थे । दशमेऽहनि प्रातः अश्विनौ तं कूपात् उदतारयतामिति । तदाह । अप्सु कूपान्तर्वर्तमानासु अन्तः मध्ये असुरैः पातितम् अशिवेन दुःखहेतुना दाम्ना अवनद्धं बद्धं श्नथितं शत्रुभिर्हिंसितं दश रात्रीः दशसंख्याका निशाः नव द्यून् नवसंख्याकान्यहानि च । अत्यन्तसंयोगे द्वितीया । एतावन्तं कालं तत्रैव कूपेऽव-स्थितम् अत एव उदनि उदके विप्रुतं विप्लुतं व्याक्षिप्तसर्वाङ्गं प्रवृक्तम् । लुप्तोपममेतत् । प्रवृञ्जनेन संतप्तं घर्ममिव व्यथया संतप्यमानम् एवभूतं रेभं हे अश्विनौ युवाम् उन्निन्यथुः तस्मात्कूपात् उन्नीतम् उत्तीर्णं कृतवन्तौ तत्र दृष्टान्तः । सोममिव यथा अग्निहोत्रहोमार्थम् अभिषुतं सोमरसं कूपसदृशे अग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेण अध्वर्युः उन्नयति ऊर्ध्वं नयति तद्वत् ॥ अवनद्धम् । 'णह बन्धने' । कर्मणि निष्ठा । 'नहो धः' (पा० सू० ८. २. ३४) । 'झषस्तथोर्धोऽधः' इति निष्ठातकारस्य धत्वम् । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । श्नथितम् । 'श्नथ हिंसार्थः' । निष्ठा । विप्रुतम् । 'प्रुङ् गतौ' । अवनद्धमत् प्राप्यस्वरौ । कपिलकादित्वात् लत्वविकल्पः । उदनि । 'पद्दन्' इत्यादिना उदकशब्दस्य उदन्भावः ॥

शब्दा० दश=दस, रात्रिः=रात, अशिवेन=दुःखदायी रस्सी से, नव=नव, द्युन=दिन, अवनद्धम्=बंधा हुआ, श्नथितम्=पीटा हुआ, अप्सु=जल में, अन्तः=बीच, विप्रुतम्=फेंका हुआ, रेभम्=रेभ को उदनि=जल में, प्रवृक्तम्=कष्ट सहता हुआ, उन्निन्यथुः=बाहर निकाला, सोममिव=सोम की तरह, स्रुवेण=स्रुवा से ।

हि० अ०—तुम लोगों ने स्रुवा से सोम की तरह रेभ को बाहर निकाला जो एक दुखदायी रस्सी से बांधकर तथा पीट कर जल में फेंक दिया गया था और दस रात्रि तथा नौ दिन तक उसी जल में उतराया हुआ एवं कष्ट सहता हुआ पड़ा था ।

*Trans.*—You brought out, like soma with ladle, Rebha, who fettered by a cruel rope and smitten had lain in the waters for ten nights and nine days, floating and suffering.

*Notes*—अशिवेन—Sāyaṇa renders it by दुःखहेतुना दाम्ना' Peterson takes it to mean 'by an evil doer ; नञ् compd. accented on the first syllable. अवनद्धम्—√*nah* to bind, past part. The breathing sound ह् before त् has been changed into ध्. For accent see निहितः (I. 24.7). श्नथितम् √*snath* to pierce. past part. अन्वः—Visarjaniya is rhotasized; hence, इति is added to it in the Pada-text. विप्रुतम्—√*pru* with the prefix वि to float ; past part. Sāyaṇa renders it by विप्लुतं व्याक्षिप्तसर्वाङ्गम् Wilson and Griffith take it to mean 'immersed'. प्रवृक्तम्—√*vrj* to twist, past part.

प्र । वाम् । दंसांसि । अश्विनौ । अवोचम् । अस्य । पतिः । स्याम् । सुऽगवः । सुऽवीरः ॥ उत । पश्यन् । अश्नुवन् । दीर्घम् । आयुः । अस्तम्ऽइव । इत् । जरिमाणम् । जगम्याम् ॥२५॥

सा० भा०—एवमनेन सूक्तेन अश्विनोर्महिमानं प्रशस्य अधुना मन्त्रद्रष्टा स्वाभीष्टं प्रार्थयते । हे अश्विनौ वां युवयोः दंसांसि पुरा कृतानि कर्माणि प्र अवोचम् इत्यम् उक्तवानस्मि । सोऽहं सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरश्च भूत्वा अस्य राष्ट्रस्य पतिः अधिपतिः स्यां भवेयम् । उत अपि च पश्यन् अक्षिभ्यां पश्यन् । उपलक्षणमेतत् । सर्वैरिन्द्रियैः स्वस्वविषयदर्शन-समर्थः दीर्घं वर्षशतरूपेण आयतम् आयुः जीवितं च अश्नुवन् प्राप्नुवन्नहम् अस्तमिव यथा गृहं स्वामी निष्कण्टकं प्रविशति एवं जरिमाणं जरां जगम्यां कण्टकराहित्येन प्राप्नुयाम् । वृद्धः सन् चिरकालं निवसेयमित्यर्थः । स्याम् । अस्तेः प्रार्थनायां लिङ् । यासुट् । 'श्नसोरल्लोपः' इत्यकारलोपः । अश्नुवन् । 'अशू व्याप्तौ' । व्यत्ययेन शतृ । जरिमाणम् । 'जॄष् वयोहानौ' । अस्मादौणादिकः इमनिच् । जगम्याम् । गमेः प्रार्थनायां लिङि 'बहुलं छन्दसि' इति विकरणस्य श्लुः ॥

शब्दा०—वाम्=तुम्हारे, दंसांसि=पराक्रमयुक्त कार्यों का, अश्विनौ=ओ अश्विन्, प्र अवोचम्=वर्णन किया, अस्य=इसका पतिः=स्वामी स्याम=होऊं, सुगवः=सुन्दर गायों से युक्त, सुवीरः=सुन्दर वीरों से युक्त, उत=और, पश्यन्=देखता हुआ, अश्नुवन्=प्राप्त करता हुआ, दीर्घम्=बड़ी, आयुः=उम्र, अस्तमिव=घर की तरह, इत्=पूर्ववर्ती शब्द पर बल देनेवाला निपात, जरिमाणम्=वृद्धावस्था, जगम्याम्=पहुँचूं।

हि० अ०—ओ अश्विन्, (इस प्रकार) मैंने तुम्हारे पराक्रम युक्त कार्यों का वर्णन किया। सुन्दर गायों तथा सुन्दर वीरों से युक्त मैं इस (राष्ट्र) का स्वामी बनूं। और देखता हुआ तथा लम्बी आयु को प्राप्त करता हुआ वृद्धावस्था को पहुँचूं जैसे (कोई अपने) घर को।

*Trans.*—O Aśvins, (thus) I declared your exploite. May I become the master of this (nation) having good kine and good heroes. Seeing and attaining a long life may I reach old age as (one reaches one's home.

*Notes*—अवोचम्—√*vac* to speak, impf. 1rst. sing. अस्य—As an oblique case अस्य is generally unaccented but here being emphasized it is not unaccented. सुगवः, सुवीरः—Bahuvrihi compds. accented on the second member (नञ्सुभ्याम्—Pāṇ. VI. 2. 172). पश्यन्—√*paś* to see, pres. part. अश्नुवन्—√*aś* to attain, irr. pres. part. जरिमाणम्—√*jṝ* to be old, irr. pres. part. जगम्याम्—√*gam* to go, perf. opt. 1rst. sing.

विष्णु



'विष्णोर्नु कम्' इति षडृचं पञ्चदशं सूक्तं दैर्घतमसं त्रैष्टुभं वैष्णवम्। अनुक्रमणिका —'विष्णोः षड्वैष्णवं हि' इति। अभिप्लवषडहेपृष्ठ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थम् इदमादिसूक्तद्वयं विनियुक्तम्। 'स्तोमे वर्धमाने' इति खण्डे सूत्रितं 'विष्णोर्नु कमिति सूक्ते परो मात्रयेत्यच्छावाकः' (आश्व० श्रौ० ७.९) इति। तथा तृतीयसवने सोमातिरेके उत्तरोत्तरस्योपगन्तव्यत्वात् आतिरात्रात् ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यम्। तत्रैतदेव सूक्तम्। 'सोमातिरेके' इति खण्डे सूत्रितं —'महाँ इन्द्रो नृवद्विष्णोर्नु कम्' (आश्व० श्रौ० ६.७) इति। आग्निमारुतशस्त्रे आद्या विनियुक्ता। 'अथ पर्येतम्' इति खण्डे सूत्रितं —'विष्णोर्नु कं वीर्याणि प्र वोच तन्तुं तन्वन्रजसो भानुमन्विहि' (आश्व० श्रौ० ५.२०) इति।

विष्णोः। नु। कम्। वीर्याणि। प्र। वोचम्। यः। पार्थिवानि। वि॒ऽम॒मे। रजांसि॥ यः। अस्कभायत्। उत्ऽतरम्। सधऽस्थम्। विऽचक्रमाणः। त्रेधा। उरुऽगायः॥१॥

सा० भा०—हे नराः विष्णोः व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु कम् अतिशीघ्रं प्र वोचम् प्रब्रवीमि। अत्र यद्यपि नु कम् इति पदद्वयम् तथापि यास्केन नवोत्तराणि पदानि (निरु० ३.१३) इत्युक्तत्वात् शाखान्तरे एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु कम् इति पदद्वयम्। कानि तानीति तत्राह। यः विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे। अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः। तथा च मन्त्रान्तरं— 'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः' (ऋ० सं० १.१०८.९) इति। तैत्तिरीयेऽपि—'योऽस्यां पृथिव्यामस्यायुषा' इत्युपक्रम्य 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' (तै० सं० १.२.१२.१) इति। तस्मात् लोकत्रयस्य पृथिवीशब्दवाच्यत्वम्। किंच यः च विष्णुः उत्तरम् उद्गततरम् अतिविस्तीर्णं सधस्थं सहस्थानं लोकत्रयाश्रयभूतमन्तरिक्षम् अस्कभायत् तेषामाधारत्वेन स्तम्भितवान् निर्मितवानित्यर्थः। अनेन अन्तरिक्षाश्रितं लोकत्रय-

मपि सृष्टवानित्युक्त भवति। यद्वा। यो विष्णु पार्थिवानि पृथिवीसबन्धीनि रजासि पृथिव्या अधस्तनसप्तलोकान् विममे विविध निर्मितवान। रज शब्दो लोकवाचो, 'लोका रजास्युच्यन्ते' इति यास्केनोक्तत्वात्। किंच यश्चोत्तरम उद्गततरम् उत्तरभाविन सधस्य सहस्थान पुण्यकृता सहनिवासयोग्य भूरादिलोकसप्तकम् अस्कभायत् स्कम्भितवान् सृष्टवानित्यर्थ। स्कम्भे 'स्तम्भुस्तुम्भु' इति विहितस्य श्न 'छन्दसि शायजपि' इति व्यत्ययेन शायजादेश। अथवा पार्थिवानि पृथिवीनिमित्तकानि रजासि लोकान् विममे। भूरादिलोक त्रयमित्यय। भूम्याम् उपार्जितकर्मभोगार्थत्वात् इतरलोकाना तत्कारणत्वम्। किंच यश्चोत्तरम् उत्कृष्टतर सर्वेषा लोकानामुपरिभूतम्। अपुनरावृत्ते तस्योत्कृष्टत्वम्। सधस्थम उपासकाना सहस्थान सत्यलोकमस्कभायत् स्कम्भितवान् ध्रुव स्थापितवानित्यर्थ। किं कुर्वन। त्रेधा विचक्रमाणः त्रिप्रकार स्वसृष्टान् लोकान्विविध क्रममाण। विष्णोस्त्रेधा क्रमणम् 'इद विष्णुर्वि चक्रमे (ऋ० स० १ २२ १७) इत्यादि श्रुतिषु प्रसिद्धम्। अत एव उरुगाय उरुभि महद्भि गीयमान अतिप्रभूत गीयमानो वा। य एव कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम्॥

श॰ दा॰—विष्णोः=विष्णु के, नु=शीघ्र, कम्=पादपूरण के लिये एक निपात, वीर्याणि=वीरतापूर्ण कार्यों को प्र वोचम्=कहूँगा, यः=जिसने, पार्थिवानि=पृथिवी सबन्धी, विममे=नापा, रजांसि=लोको को, यः=जिसने अस्कभायत्=निर्माण किया, उत्तरम्=ऊँचे, सधस्थम्=मिलन स्थान विचक्रमाणः=चलकर, त्रेधा=तीन, उरुगायः=विशाल गतिवाले मे बहुता द्वारा स्तूयमान ने

हि॰ अ॰—शीघ्र ही मैं विष्णु के वीरतापूर्ण कार्यों का वर्णन करूगा, जिस विशाल गतिवाले ने तीन कदमों से चलकर पृथिवी सम्बन्धी लोकों को नापा, जिसने (पवित्रात्माओं के लिये) ऊँचे, मिलन-स्थान का निर्माण किया।

*Trans* —I will, now, indeed, proclaim the heroic deeds of Visnu who measured the terrestrial regions, who established the upper station of congregation, (he who) of wide pace, striding thrice

*Notes*—कम्—Unaccented कम् always appears as an enclitic particle following the particles नु सु हि, and gives the sense of 'willingly', 'gladly', 'indeed'

(cf accented कृम् V 83 10) वीर्याणि—See I 32 1 वोचम्—See I 32 1 पार्थिवानि रजांसि—Sayana under stands it as regions occupied by Agni, Vāyu and Āditya According to him, by पार्थिवानि रजांसि one should understand three regions with पृथिवी ahead Griffith and Macdonell take them to mean earthly regions Macdonell in the note takes पार्थिवानि and रजांसि separately rendering as the earth and the contiguous air विममे—$\sqrt{ma}$ to measure, perf 3rd sing not unaccented because preceded by यः अस्कभायत्—$\sqrt{skabh}$ to prop, 3rd impf sing not unaccented because pre ceded by यः उत्तरम् सधस्थम्—Upper region i e heaven as opposed to the lower region i e earth According to Sayana by उत्तरम सधस्थम one should understand three upper regions with अन्तरिक्ष ahead In alter native, on the authority of Yaska he also takes it to mean the abode of pious men विचक्रमाणः—$\sqrt{kram}$ to stride, mid perf part उरुगायः—According to Yaska उरुगाय means he who has wide pace (विष्णोर्महागते — Nir II 7), Sayana takes it to mean 'praised widely' Griffith and Macdonell prefer Yaskas interpretation Griffith and Macdonell prefer Yaskas interpretation while Sayana derives it from उरु+$\sqrt{ga}$ to sing while Yaska from उरु+$\sqrt{ga}$ to go

प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः ॥ यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ॥२॥

यस्यति वक्ष्यमाणत्वात स इति अवगम्यते । ॥ महानुभाव

सा० भा०—स्तवते स्तूयते सर्वैः ॥ कर्मणि वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते स्तूयते सर्वैः । मृगो न सिंहादिरिव । यथा व्यत्ययेन शप् । वीर्येण स्तूयमानत्वे दृष्टान्त ।

स्वविरोधिनो मृगयिता सिंह भीम भीतिजनक कुचरः कुत्सितहिंसादिकर्ता दुगमप्रदेशगन्ता वा गिरिष्ठाः पवतादुन्नतप्रदेशस्थायी सर्वं स्तूयते। अस्मिन्नर्थे निरुक्त—'मृगो न भीम कुचरो गिरिष्ठा। मृग इव भीम कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकमणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव। कुचर इति चरतिकम कुत्सितमथ चेद्देवताभिधान क्वाय न चरतीति वा। गिरिष्ठा गिरिस्थायी गिरि पवत समुद्गीर्णो भवति पर्ववान पवत पर्व पुन पृणाते प्रीणातेर्वा' (निरु० १ २०) इति। तद्वयमपि मृगोऽन्वेष्टा शत्रूणा भीमो भयानक सर्वेषा भीत्यपादानभूत। परमेश्वराद्भीति 'भीषास्माद्वात पवते' (तै० आ० ८ ८ १) इत्यादिश्रुतिषु प्रसिद्धा। किंच कुचर शत्रुवधादिकुत्सित कमकर्ता कुषु सर्वासु भूमिषु लोकत्रये सचारी वा तथा गिरिष्ठा गिरिवत उच्छ्रितलोकस्थायी। यद्वा। गिरि मन्त्रादिरूपाया वाचि सवदा वतमान। ईदृशोऽय स्वमहिम्ना स्तूयते। किंच यस्य विष्णो उरुषु विस्तीर्णेषु त्रिसख्या केषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातानि अधि क्षियन्ति आश्रित्य निवसन्ति स विष्णु स्तूयते॥

शब्दा०—तत्=उस, विष्णुः=विष्णु, स्तवते=स्तुति किया जाता है, वीर्येण=वीरतायुक्त काय के कारण, मृगः=जगली पशु, न=तरह, भीम=भयानक, कुचरः=(१) कुत्सित काय करनेवाला, (२) सवत्र विचरण करनेवाला, गिरिष्ठाः=पवत पर रहने वाला या वाणी में निवास करने वाला, यस्य=जिसके, उरुषु=विशाल, त्रिषु=तीन, विक्रमणेषु=कदमो में, अधिक्षियन्ति=निवास करते है, भुवनानि=लोक, विश्वा=सम्पूण।

हि० अ०—विष्णु अपन उस वीरतायुक्त काय के कारण स्तुति किया जाता है जिस प्रकार पवत पर रहने वाला तथा अपनी इच्छानुकूल विचरण करनवाला भयानक पशु। (वह विष्णु) जिसके विशाल तीन कदमों में सम्पूण प्राणी निवास करते हैं।

*Trans*—Viṣṇu is worshipped by reason of his that heroic deed like a mountain haunting terrible beast, wandering at its disposal, (he) in whose wide threefold strides all the creatures dwell

*Notes*—स्तवते—$\sqrt{stu}$ to praise, mid 3rd sing मृगः—Yāska derives it from $\sqrt{mrs}$ to go (मृगो मार्ष्टेर्गतिकर्मणो

Nir I 20), this word was originally used for any beast but later on its meaning was contracted to a particular beast i e deer भीमः—From √*bhī* to fear (बिभ्यत्यस्मात्—Nir I 20) कुचरः—Yāska has two explanations of this word (i) doing ill (कुत्सित कर्म Nir I 20) and (ii) going anywhere क्वायं न चरतीति Nir I 20) Sāyana follows Yāska's interpretation कुचर is not analysed in the Pada text because कु does not appear as an independent word गिरिष्ठाः—Sāyana takes it to mean 'dwelling in a lofty world' or 'always abiding in speech Griffith takes it to mean mountain roaming and Macdonell as mountain haunting Tatpurusa compd accented on the second member, the change in the second member caused by the internal sandhi appearing in the Samhitā text is always removed in the Pada text when the word is analysed अधिक्षियन्ति—√*kṣi* to dwell, pres 3rd plu, not unaccented because preceded by यस्य

प्र । विष्णवे । शूषम् । एतु । मन्म । गिरिऽक्षिते । उरुऽगायाय । वृष्णे ॥ यः । इदम् । दीर्घम् । प्रऽयतम् । सधऽस्थम् । एकः । विऽममे । त्रिऽभिः । इत् । पदेभिः ॥३॥

सा० भा०—विष्णवे सर्वव्यापकाय शूषम् अस्मत्कृत्यादिजन्य बल सहत्व मन्म मनन स्तोत्र मननीय शूष बल वा विष्णुम् एतु प्राप्नोतु । कथम सम्प्रदानत्वात चतुर्थी । कीदृशाय । गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानाम । एव महानुभाव शूष प्राप्नोतु । कोऽस्य विशाय इति उच्यते । य विष्णु इद प्रसिद्ध दृश्यमान दीर्घम् अतिविस्तृत प्रयत नियत सधस्थं सहस्थान लोकत्रयम् एक इत् एक एवाद्वितीय सन त्रिभि पदेभि पादं विममे विशेषेण निर्मितवान ।

शब्दा०—विष्णवे=विष्णु के लिये, शूषम्=शक्तिशाली, प्रैतु=जावे, मन्म=प्रार्थना गिरिक्षिते=पर्वत पर निवास करनेवाले, वाणी में निवास

करनेवाले, उरुगायाय=विशाल गतिवाले, वृष्णे=कामनाओं को पूरा करने-वाले यः=जिसने, इदम्=इस, दीर्घम्=बड़े, प्रयतम्=अति विस्तृत, सधस्थम्=मिलन स्थान को, एक=अकेले, विममे=नापा था । त्रिभिः=तीन, इत्=पूर्ववर्ती शब्द पर बल देने वाला एक निपात, पदेभिः=कदमो से ।

हि० अ० – (मेरी) शक्तिशाली प्रार्थना ऊँचे लोक में निवास करनेवाले विशाल कदमोवाले, इच्छाओं की पूर्ति करनेवाले, विष्णु के पास जावे जिसने इस बड़े अति विस्तृत (पवित्रात्माओ के) मिलन-स्थान को अकेले तीन पदों से ही नापा था ।

*Trans*—Let (our) mighty hymn attain Visnu, dwelling in the lofty world, having wide pace, the fulfiller of desires, who alone measured out this long far extended station of congregation by three steps

*Notes*—एतु—√इ to go pres impv 3rd sing गिरिक्षिते—Sāyana takes it to mean 'dwelling in speech' or dwelling in the lofty world' preferably the first Tatpurusas compd accented on the second member क्षिते is dative sing of क्षिति from √*ksi* to dwell, with noun making termination ति like गति, भक्ति etc उरुगा-यस्य—See उरुगाय (I 154 1) प्रयतम्—√*yam* to stretch out, past part, for accent see निहिता (I 24 7) एकः—Sāyana takes it for Visnu who alone without the help of others did the task of measuring the region Macdonell thinks एक and त्रिभि as antithetical and translates 'with alone three', विममे—See I 154 1, not unaccented because synatactically connected with यः

यस्यं । त्री । पूर्णा । मधुंना । पदानि । अक्षीयमाणा । स्वधयां । मदंन्ति ।। यः । ऊँ इति । त्रिऽधातुं । पृथिवीम् । उत । द्याम् । एकः । दाधारं । भुवंनानि । विश्वां ।।४।।

सा० भा०—यस्य विष्णो मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्रीणि पदानि पादप्रक्षेपणानि अक्षीयमाणा अक्षीयमाणानि स्वधया अन्नेन मदन्ति मादयन्ति तदाश्रितजनान् । य उ य एव पृथिवीं प्रख्याता भूमिं द्याम् उत द्योतनात्मकमन्तरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दश लोकांश्च । यद्वा । पृथिवीशब्देन अधोवर्तीनि अतलवितलादिसप्तभुवनान्यु-पात्तानि । द्युशब्देन तदुपरितनरूपाणि भूरादिसप्तभुवनानि । एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रस्थानि भूतजातानि । त्रिधातु । त्रयाणां धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान् । तुजादित्वात् अभ्यासस्य दीर्घत्वम् । उत्पादितवानित्यर्थः । छन्दो-गारण्यके – 'तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षन्त' इति भूतत्रयसृष्टिमुक्त्वा 'हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छा० उ० ६ ३ २-३) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वय ॥

शब्दा०—यस्य=जिसके, त्री=तीन, पूर्णा=भरे हुये, मधुना=मधु से पदानि=कदम, अक्षीयमाणा=कभी क्षीण न होनेवाले, स्वधया=आत्म-शक्ति से, मदन्ति=आनन्दित करते हैं, यः=जो, उ=निश्चित अर्थ का वाचक एक निपात, त्रिधातु=पृथिवी, जल तथा तेज रूप तीन धातुओं को, पृथिवीम्=पृथिवी, उत=और, द्याम्=आकाश को, एकः=अकेले ही, दाधार=धारण करता हैं, भुवनानि=लोकों को, विश्वा=सम्पूर्ण ।

हि० अ०—कभी समाप्त न होनेवाले, जिसके मधुपूर्ण तीन कदम (मनुष्यों को) अपनी शक्ति से आनन्दित करते हैं, जो अकेले ही (पृथिवी, जल तथा तेज रूप) तीनों धातुओं, पृथिवी, आकाश तथा सम्पूर्ण लोकों को धारण करता हैं ।

*Trans* —Whose three unperishable, meadful steps rejoice (*mankind*) with self-power ; who verily alone upholds the threefold elements, earth heaven and all the creatures.

*Notes*—अक्षीयमाणा—√*ksi* to destroy, pass part नञ् compd ; hence, accented on the first member and not separated by avagraha in the *Pada-text*. स्वधया—स्वधा is enumerated in the list of the names of

water (Nigh I 12 97), food (Nigh II 7 17) and Dyāvāprthivī (Nigh III 30 1) Sāyana accepts it in the sense of 'food' Macdonell takes it to mean 'bliss' MWD takes 'self power' as one of the alternative meanings of स्वधया मदन्ति—√*mad* to rejoice, pres 3rd plu , not unaccented because preceded by यस्य त्रिधातु—Sayana explains it as 'त्रयाणां धातूनां समाहारस्त्रिधातु । पृथिव्यप्तेजोरूपधातुत्रयविशिष्ट', Wilson takes it to mean 'three elements , Griffith as 'threefold' and Macdonell as 'in threefold way' Macdonell thinks it as similar to त्रेधा दाधार—√*dhr* to hold, perf 3rd sing , the first syllable being regularly lengthened, it is not shortened in the Pada text , not unaccented because preceded by य

तत् । अस्य । प्रियम् । अभि । पाथः । अश्याम् । नरः । यत्र । देवऽयवः । मदन्ति ॥ उरुऽक्रमस्य । सः । हि । बन्धुः । इत्था । विष्णोः । पदे । परमे । मध्वः । उत्सः ॥५॥

सा० भा० अस्य महतो विष्णोः प्रियं प्रियभूतं तत् सर्वैः सेव्यत्वेन प्रसिद्धं पाथः । अन्तरिक्षनामैतत् 'पाथोऽन्तरिक्षं पथा व्याख्यातम्' (निरु० ६ ७) इति यास्केनोक्तत्वात् । अविनश्वरं ब्रह्मलोकमित्यर्थः । अश्याम् व्याप्नुयाम् । तदेव विशेष्यते । यत्र स्थाने देवयवः देवं द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तः नरः मदन्ति तृप्तिमनुभवन्ति । तदश्यामित्यन्वयः । पुनरपि तदेव विशेष्यते । उरुक्रमस्य अत्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना अत एव विष्णोः व्यापकस्य परमेश्वरस्य परमे उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वः मधुरस्य उत्सः निष्यन्दो वर्तते । तदश्याम । यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति सङ्कल्पमात्रेण अमृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः । ततोऽधिकं नास्तीत्याह । इत्था इत्थमुक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरो वा तस्य पदं प्राप्तवतां न पुनरावृत्तिः । 'न च पुनरावर्तते' इति श्रुतेस्तस्य बन्धुत्वम् । हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः ॥

शब्दा०—उत=और, वा=भी, यः=जो कोई, नः=हमको, अनागसः=पाप रहित को, अरातीवा=शत्रुता रखनेवाला, मर्तः=मनुष्य, सानुकः=अभिमानी, वृकः=लालची, बृहस्पते=ओ बृहस्पति, तम्=उसको, अपवर्तय=अलग करो, पथः=मार्ग से, सुगम्=आसानी से पार करने योग्य, नः=हम लोगों के मार्ग को, अस्यै=इस, देववीतये=यज्ञ के लिये, कृधि=करो।

हि० अ०—और जो कोई शत्रुता रखनेवाला, अभिमानी तथा लालची व्यक्ति हम पाप रहितों को कष्ट पहुँचाये, ओ बृहस्पति, उसको हमारे मार्ग से दूर करो; इस यज्ञ के लिये हमारे (मार्ग को) सुगम करो।

*Trans.*—And also the inimical, arrogant, rapacious man who may injure us, the sinless ones; O Brhaspati drive him away from our path and make (our path) easy to this sacrifice.

*Notes*—मर्चयात्—$\sqrt{mrc}$ to injure, subju. 3rd. sing. अनागसः—Peterson construes it with सानुकःवृकः and renders as 'veritable'; नञ् compd. accented on the first syllable. सानुकः—Arrogant (Wilson, Griffith), 'greedy' (Roth, Peterson). Roth and Grassmann derive it from $\sqrt{san}$ to gain. अपवर्तय—$\sqrt{vrt}$ with अप to remove away, caus. impv. 2nd. sing. देववीतये—Dative sing of देववीति; वीति is derived from $\sqrt{vī}$ to enjoy, with noun making termination ति. कृधि—$\sqrt{kr}$ to make, root-aorist, impv. 2nd. sing.

त्रातारम् । त्वा । तनूनाम् । हवामहे । अवऽस्पर्तः । अधिऽवक्तारम् । अस्मऽयुम् ॥ बृहस्पते । देवऽनिदः । नि । बर्हय । मा । दुःऽएवाः । उत्ऽतरम् । सुम्नम् । उत् । नशन् ॥८॥

सा० भा०—अवस्पर्तः उपद्रवेभ्यः पारयितः। यद्वा अवसा रक्षणेनापद्भ्यः पारयितः हे बृहस्पते तनूनाम् अङ्गानां पुत्रादीनां वा त्रातारं पालयितारम् अधिवक्तारं अस्मासु पक्षपातेन अधिकं वक्तारम् अस्मयुं हविःप्रदानस्मान्

कामयमानं त्वा त्वां हवामहे अस्मिन् कर्मण्याह्वयामः । किञ्च देवनिदः देवनिन्दकानसुरान् नि बर्हय विनाशय । दुरेवाः दुष्टगमना दुर्बुद्धयः शत्रवः उत्तरम् । उत्कृष्टतरं सुम्नं सुखं मा सन्नशन् मा व्याप्नुवन्तु ॥

शब्दा०—त्रातारम्=रक्षक, त्वा=तुमको, तनूनाम्=शरीर के, हवामहे=बुलाते हैं, अवस्पर्तः=ओ उपद्रवों से बचानेवाले, अधिवक्तारम्=हमारी ओर से बोलनेवाले, अस्मयुम्=हमारी तरफ झुकाववाले, बृहस्पते=ओ बृहस्पति, देवनिदः=देवताओं की निन्दा करनेवालों को, नि बर्हय=विनष्ट करो, मा=मत, दुरेवाः=दुष्ट बुद्धिवाले, उत्तरम्=बढ़कर, सुम्नम्=सुख, उत् नशन्=प्राप्त करें ।

हि० अ०—शरीर के रक्षक, (हमारा) पक्ष करनेवाले, तथा हमारी तरफ झुकाव वाले तुमको, ओ उपद्रवों से बचानेवाले, हम बुलाते हैं । ओ बृहस्पति, देवताओं की निन्दा करनेवालों को विनष्ट करो; दुष्ट-बुद्धिवाले (हमसे) अच्छा सुख न प्राप्त करें ।

*Trans.*—O defender (from distress )we invoke thee, the protector of our body, our advocate, well-disposed to us. O Brhaspati smite down the god-revilers and let not the evil-minded obtain loftier bliss (than ours).

*Notes*—हवामहे—See II. 23.1. अवस्पर्तः—Voc. of अवस्पर्तृ from $\sqrt{spr}$ with अव to protect; Sāyaṇa explains it as उपद्रवेभ्यः पारयितः । यद्वा । अवता रक्षणेनापद्भ्यः पारयितः'. अधिवक्तारम्—'Speaker of encourageous words' (Wilson), 'comforter' (Griffith), 'befriend' (Peterson); Governing compd. accented on the second member. अस्मयुम्—From अस्म with the desirderative suffix यु (see not, on देवयवः I. 154.5). देवनिदः—Tatpuruṣa compd. accented on the second member. नि बर्हय—$\sqrt{brh}$ with नि to smite down, caus. impv. 2nd. sing. दुरेवाः—From दुर्+$\sqrt{i}$ to go; Sāyaṇa renderers it by 'दुष्टगमना दुर्बुद्धयः शत्रवः', Grassmann takes it to mean 'of evil manner or way', Geldner as 'of evil will or inclination or ardour',

Peterson as 'evil-minded', Wilson as 'malevolent' and Griffith as 'unrighteous'. नशन्—√*naś* to attain, injun. 3rd. plu.

त्वया॑। व॒यम्। सु॒ऽवृधा॑। ब्र॒ह्म॒णः॒। प॒ते॒। स्पा॒र्हा। वसु॑। म॒नु॒ष्या॑।
आ। द॒दी॒म॒हि॒ ॥ याः। नः॒। दू॒रे। त॒ळितः॑। याः। अरा॑तयः।
अ॒भि। सन्ति॑। ज॒म्भय॑। ताः। अ॒न॒प्नसः॑ ॥९॥

सा० भा०—हे ब्रह्मणस्पते सुवृधा सुष्ठु वर्धयित्रा त्वया हेतुना वयं स्पार्हा स्पृहणीयानि वसु धनानि मनुष्या। 'सुपां सुलुक्' इति चतुर्थीबहुवचनस्याकारः। मनुष्येभ्यो दातृभ्यः आ ददीमहि गृह्णीमहि। 'आङो दोऽनास्यविहरणे' इत्यात्मनेपदम्। दूरे दूरदेशे याः अरातयः याः च तळितः अन्तिकेऽरातयः नः अस्मान् अभि सन्ति अभि भवन्ति अनप्नसः कर्महीनान् ताः अरातीस्तान् शत्रून् जम्भय नाशय। 'जभि नाशने'। चुरादिः। अत्र निरुक्तं—'त्वया वयं सुवर्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तळितो याश्चान्तिकेऽरातयोऽदानकर्माणो वादानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनाम (निरु० ३. ११) इति ॥

शब्दा०—त्वया=तुम्हारे द्वारा, वयम्=हमलोग, सुवृधा=अच्छी प्रकार से बढ़ानेवाले, ब्रह्मणस्पते=ओ ब्रह्मणस्पति, स्पार्हा=स्पृहणीय, वसु=धन, मनुष्या=मनुष्यों से, आ ददीमहि=ग्रहण करें, याः=जो, नः=हमारे, दूरे=दूर के, तळितः=समीप के, याः=जो, अरातयः=शत्रु, अभि सन्ति=अभिभूत करते हैं, जम्भय=कुचल डालो, ताः=उनको, अनप्नसः=निश्चेष्ट।

हि० अ०—ओ ब्रह्मणस्पति, अच्छी प्रकार से बढ़ानेवाले तुम्हारे द्वारा हम स्पृहणीय मानव सम्पत्ति को प्राप्त करें। दूर के और समीप के जो शत्रु हम पर आक्रमण करते हैं उनको कुचल डालो (जिससे) वे निश्चेष्ट हो जायें।

*Trans.*—O lord of prayer, through thee, the excellent strengthener, may we obtain covetable human possessons. The enemies, far and near, who attack us, crush them inactive.

*Notes*—आ ददीमहि—√*dā* with आ to take, pres. mid. opt. 1rst. plu. जम्भय—√*jambh* to chew, to devour. pres. impv. 2nd. sing.; not unaccented because beginning of a new sentence. अनप्नसः—Bahuvrihi compd. accented on the second member.

त्वया॑ । व॒यम् । उ॒त्ऽत॒मम् । धी॒म॒हे॒ । वयः॑ । बृह॑स्पते । पप्रि॑णा । सस्नि॑ना । यु॒जा ॥ मा । नः॒ । दुः॒ऽशंसः॑ । अ॒भि॒ऽदि॒प्सुः । ई॒श॒त॒ । प्र । सु॒ऽशंसाः॑ । म॒तिऽभिः॑ । ता॒रि॒षी॒म॒हि॒ ॥१०॥

सा० भा०—हे बृहस्पते पप्रिणा । 'पॄ पालनपूरणयोः' । आदृगमहन' इति किन्प्रत्ययः । छान्दसो यणादेशः । कामानां पूरकेण सस्निना शुद्धेन युजा सहायेन त्वया हेतुना उत्तमं वयः हविर्लक्षणमन्नं वयं धीमहे धारयामः । 'धी धारणे' । दैवादिकः । दुःशंसः दुःशंसनीयः अभिदिप्सुः अभिदम्भितुमभिभवितुमिच्छुः पुरुषः नः अस्माकं मा ईशत मा ईशिष्ट । ईश्वरो मा भवतु । 'ईश ऐश्वर्ये' । लेट्यडागमः । वयं मतिभिः स्तोत्रैः सुशंसाः शोभनशंसनोपेताः सन्तः प्र तारिषीमहि प्रकर्षेण वर्धेमहि ॥

शब्दा०—त्वया=तुम्हारे द्वारा, वयम्=हम, उत्तमम्=श्रेष्ठ, धीमहे =प्राप्त करें, वयः=शक्ति, बृहस्पते=ओ बृहस्पति, पप्रिणा=इच्छाओं को पूरा करनेवाली, सस्निना=प्रचुर धनवाली, युजा=मित्रता से, मा=मत, नः=हमारा, दुःशंसः=दुष्ट बुद्धिवाला, अभिदिप्सुः=हमें दबाने की इच्छावाला, ईशत=स्वामी बने, सुशंसाः=सुन्दर प्रार्थनावाले, मतिभिः=स्तुतियों के द्वारा, प्रतारिषीमहि=समृद्ध होवें ।

हि० अ०—ओ बृहस्पति, (इच्छाओं को) पूरा करनेवाली तथा प्रचुर धनवाली तुम्हारी मित्रता के द्वारा हम श्रेष्ठ शक्ति प्राप्त करें । हमें दबाने की इच्छावाला (कोई) दुष्ट-बुद्धि हमारे ऊपर मालिक न बने । सुन्दर प्रार्थनावाले हमलोग स्तुतियों के द्वारा समृद्ध होवें ।

*Trans.*—Through thy fulfilling and bounteous friendship, O Brhaspati, may we attain the highest vital strength. Let not the wicked, desiring (us) to

do harm, be our master. May we of excellent praises prosper with (our) prayers.

*Notes*—धीमहे—Sāyaṇa thinks the root $\sqrt{dhī}$ to hold but many scholars derive it from $\sqrt{dhā}$ to put; in either case it is form of root-aorist subju. 1rst. plu. पप्रिणा—Instr. sing. of पपृवांस् from $\sqrt{pṝ}$ to fill. perf. part. सस्निना—Instr. sing of ससवांस् from $\sqrt{san}$ to gain. अभिदिप्सुः—Noun, desid. from $\sqrt{dabh}$ to harm. ईशत—$\sqrt{iś}$ to be master, pres. injun. 3rd. sing. सुशंसाः—Bahuvrīhi compd. accented on the second member. प्रतारिषीमहि—$\sqrt{tṝ}$ with प्र to prosper. 'is'-aorist, opt. 1rst. plu.

अनानुऽदः । वृषभः । जग्मिः । आऽहवम् । निःऽतप्ता । शत्रुम् । पृतनासु । ससहिः ॥ असि । सत्यः । ऋणऽयाः । ब्रह्मणः । पते । उग्रस्य । चित् । दमिता । वीळुऽहर्षिणः ॥११॥

सा० भा०—हे ब्रह्मणस्पते अनानुदः । अनु पश्चाद्दातीत्यनुदः । स यस्य नास्तीत्यनानुदः । दात्रन्तरशून्य इत्यर्थः अत एव वृषभः कामानां वर्षिता आहवम् आहूयन्तेऽनेनेत्याहवो युद्धम् । 'आङि युद्धे' (पा० सू० ३. ३. ७३) इत्यप्प्रत्ययः संप्रसारणं च । तद्युद्धं जग्मिः गन्ता । 'आदृगमहन' इति किन्प्रत्ययः । लिड्वद्भावादाहवमित्यत्र षष्ठीप्रतिषेधः । शत्रुं शातयितारं निष्टप्ता नितरां तस्य तापकः । तृन्नन्तत्वात् षष्ठीप्रतिषेधः । 'निसस्तपतावनासेवने' (पा० सू० ८. ३. १०२) इति षत्वम् । 'तादौ च निति' इति गतेः स्वरः । पृतनासु संग्रामेषु सासहिः शत्रूणामभिभविता । एतादृशस्त्वं सत्यः सत्यपराक्रमः सत्यप्रज्ञो वा असि । ऋणयाः ऋणस्य यावयितासि । 'यु मिश्रणामिश्रणयोः' । ण्यन्तस्य विच्यपि णिलोपे 'लोपो व्योर्वलि' इति वलोपः । किञ्च उग्रस्य चित् ओजस्विनोऽपि दमिता उपशमयिता वीळुहर्षिणः दृढहर्षस्य कामुकस्य नास्तिकस्य चिद्दमितासि ॥

शब्दा०—अनानुदः=कभी समर्पण न करनेवाले, वृषभः=शक्तिशाली, जग्मिः=जानेवाले, आहवम्=युद्ध में, निष्टप्ता=तपानेवाले, शत्रुम्=शत्रु को, पृतनासु=युद्ध में, सासहिः=विजेता, असि=हो, सत्यः=वास्तव में,

ऋणया =ऋण से दूर करनेवाले, ब्रह्मणस्पते=ओ प्रार्थना के स्वामी, उग्रस्य=भयानक का, चित्=भी, दमिता=दमन करनेवाले, वीळुहर्षिण =अभिमानी बलवान का।

हि० अ०—ओ बृहस्पति, तुम वास्तव में, कभी समर्पण न करनेवाले, शक्तिशाली, युद्ध में जानेवाले, शत्रु को तपानेवाले, युद्ध में विजयी, ऋण से दूर करनेवाले तथा भयानक एवं अभिमानी बलवानों को भी दबानेवाले हो।

*Trans* —Thou art unyielding mighty, goer to the battle, tormentor of enemies, victorious in the battles, O lord of prayer, truly thou art remover from debts and subduer even of the terrible and strong excited

*Notes* —अनानुद—From √*da* with अनु to yield, Bahuvrihi compd accented on the second member (नञ्सुभ्याम्—Pān VI 2 172) The second syllable of the word अनु is lengthened (Rg Prāt IX 33) जग्मि—From the perf base of √*gam* by adding the noun making termination इ (cf ददि, दधि, वव्रि etc) सासहिः—Victorious, derived from the perfect base of √*sah* to conquer, final इ is a noun-making termination as in जग्मि, the first syllable is lengthened ऋणयाः—From ऋण+ √*yu* to separate, Tatpurusa compd accented on the second member. वीळुहर्षिण —Sāyana explains it as 'दृढहर्षस्य कामुकस्य नास्तिकस्य', Wilson as 'exulting', Griffith as 'widely passionate' and Peterson as 'stubborn excite', Bahuvrihi compd accented on the second member

अदेवेन। मनसा। यः। रिषण्यति। शासाम्। उग्रः। मन्यमानः। जिघांसति॥ बृहस्पते। मा। प्रणक्। तस्य। नः। वधः। नि। कर्म। मन्युम्। दुःऽएवस्य। शर्धतः॥१२॥

सा० भा०—यः पुमान् अदेवेन देवानमन्यमानेन यद्वा आसुरवृत्तिविशिष्टेन मनसा अस्मान् रिषण्यति हिनस्ति। 'दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति' इति

निपातितः । यश्च उग्रः पापचित्तः मन्यमानः आत्मानं बहु मन्यमानः पुमान् शासाम् उक्थस्य शंसितारम् । यद्वा अस्माकमाशंसाम् । शासां शासितॄणामुग्र इति वा योजनीयम् । अस्मान् जिघांसति हन्तुमिच्छति । हन्तेः सनि 'अज्झन-गमां सनि' इति दीर्घः । हे बृहस्पते तस्य वधः । वध्यतेऽनेनेति वधः आयुधम् । नः अस्मान् मा प्रणक् । 'पृची संपर्के' । श्नमुविकरणी । व्यत्ययेनाऽऽगमः । 'चादिलोपे' इति न निघातः । व्यत्ययेनाद्युदात्तः । किंच दुरेवस्य दुष्टगमनस्य शर्धतः बलवतः । यद्वा दुष्टाभिसंधेर्वेयं कुर्वतः तस्य मन्युं क्रोधं ज्ञानं वा नि कर्म त्वत्प्रसादान्निराकुर्मश्च ॥

शब्दा०– अदेवेन=अपवित्र, मनसा=मन से, यः=जो रिपण्यति=नुकसान करने पर तुला है, शासाम्=स्तुतिगायक को, उग्रः=भयानक, मन्यमानः=अपने को बड़ा समझता हुआ, जिघांसति=मारना चाहता है, बृहस्पते=ओ बृहस्पति, मा=मत, पृणक्=प्राप्त करे, तस्य=उसका, नः हम लोगों को, वधः=अस्त्र, निकर्म=प्रभावहीन करें, मन्युम्=क्रोध को, दुरेवस्य=दुष्ट के, शर्धतः=शक्तिशाली ।

हि० अ० –अपवित्र मन से जो नुकसान करने पर तुला है; (जो) भयानक अपने को बड़ा समझता हुआ, स्तुति-गायक (हम लोगों) को मारना चाहता है, ओ बृहस्पति उसका अस्त्र हम लोगों को न पावे । उस शक्तिशाली दुष्ट के क्रोध को हमलोग प्रभावहीन करें ।

*Trans.*—Who with ungodly mind is bent on harm; and (who) the terrible, regarding himself powerful, wants to kill the praise-singer, O Brhaspati let not his weapon attain us. May we inact the wrath of mighty wicked.

*Notes.*—रिपण्यति —Denom. from ऋपन् or ऋपण् (originally from $\sqrt{ris}$ to enjure), 3rd. sing.; not unaccented because preceded by यः. शासाम् —'Praise-singers' (Sāyaṇa), 'worshipper' (Wilson), 'mid-lords' (Griffith), 'revilers' (Grassmann), 'among those that command' (Geldner) 'by commands' (Oldenberg), 'by his ability to punish' (Peterson). मन्यमानः — $\sqrt{man}$ to think, pres. passive part. जिघांसति— $\sqrt{han}$ to kill,

desid. pres. 3rd. sing.; not unaccented because preceded by यः. प्रणक्—Sāyaṇa derives it from $\sqrt{prc}$ to mix and Macdonell from $\sqrt{naś}$ to attain: injun. 3rd. sing.; not unaccented because the conjunctive च, joining third and fourth pāda is dropped (चादिलोपे विभाषा—Pāṇ VIII. 1.63). निकर्म—$\sqrt{kr}$ with prefix नि to inact, to humiliate, root-aorist, injun. 1rst. plu.

भरेषु । हव्यः । नमसा । उपऽसद्यः । गन्ता । वाजेषु । सनिता ।
धनम्ऽधनम् । विश्वाः । इत् । अर्यः । अभिऽदिप्स्वः । मृधः ।
बृहस्पतिः । वि । ववर्ह । रथान्ऽइव ॥१३॥

सा० भा०—सः बृहस्पतिः भरेषु संग्रामेषु हव्यः योद्धृभिः स्वरक्षणार्थम् आह्वातव्यः नमसोपसद्यः सर्वैर्नमसोपसदनीयः किंच वाजेषु गन्ता संग्रामेषु रक्षार्थं गमनशीलः । तथा धनंधनं सनिता संभक्ता दाता । तृन्नन्तत्वात् षष्ठी-प्रतिषेधः । तथा अर्यः स्वामी बृहस्पतिः अभिदिप्स्वः अभिभवनेच्छावती विश्वाः इत् सर्वा एव मृधः हिंसिकाः सेनाः रथानिव युद्धे येषेन परकीयान् रथानिव वि ववर्ह विशेषेण शिथिलीचकार । यद्वा इवशब्दश्चार्थे । रथांश्च वि ववर्ह । छन्दसि लिट् ॥

शब्दा०—भरेषु=युद्ध में, हव्यः=बुलाने योग्य, नमसा=नमस्कार द्वारा, उपसद्यः=समीप आनेवाले, गन्ता=जानेवाले, वाजेषु=युद्ध में, सनिता=जीतनेवाले, धनंधनम्=प्रत्येक प्रकार के धन को, विश्वाः=सम्पूर्ण, इत्=पूर्ववर्ती शब्द पर जोर देनेवाला निपात, अर्यः=स्वामी, अभिदिप्स्वः =मारने के इच्छा रखनेवाले, मृधः=शत्रुओं को, बृहस्पतिः=बृहस्पति ने, वि ववर्ह=नष्ट कर दिया है, रथाँ इव=युद्ध में टूटे हुये रथों की तरह।

हि० अ०—युद्ध में बुलाने योग्य, नमस्कार द्वार समीप आनेवाले, युद्ध में जानेवाले, प्रत्येक प्रकार के धन को जीतनेवाले स्वामी बृहस्पति ने (हमें) मारने की इच्छा रखने वाली सम्पूर्ण शत्रु-सेनाओं को (युद्ध में टूटे हुये) रथों की तरह नष्ट कर दिया है।

*Trans.*—Lord Bṛhaspati, to be invoked in the battles, to be approached through salutation, goer in

the battles, winner of every kind of wealth, has destroyed all the foe armies, desiring to kill (us), like war chariots (of the enemies)

*Notes* —उपसद्य—Gerundive in य from √*sad* to sit घनंधनम्—Iterative compd accented on the first member अभिदिप्स्वः—Vide Appendix-B under कम्पस्व० ववर्ह—√*vrh* to tear, perf 3rd sing रथाँ इव For euphonic combination see Appendix 'A' Under आम्पद-पद वृत्ति

तेजिष्ठया । तपनी । रक्षसंः । तप । ये । त्वा । निदे । दधिरे । दृष्टऽवीर्यम् ॥ आविः । तत् । कृष्व । यत् । असंत् । ते । उक्थ्यम् । बृहस्पते । वि । परिऽरपंः । अर्दय ॥१४॥

सा० भा०—हे बृहस्पते तेजिष्ठया अतिशयेन तिग्मया तपनी तापकारिण्या हेत्या रक्षस राक्षसान् तप तापय । ये राक्षसा दृष्टवीर्यं युद्धेषु दृष्टपराक्रम त्वा निदे निन्दाया विषय दधिरे कृतवन्त तान् तापयेति समन्वय । ते तव उक्थ्यं सर्वं प्रशसनीय यत् वीर्यं असत् पूर्वमासीत् तत् अधुना आवि कृष्व प्रकटीकुरु । तेन च वीर्येण परिराप परिवदत निन्दकानसुरान् वि अर्दय विशेषेण बाधस्व ॥

शब्दा० – तेजिष्ठया=अत्यन्त तीक्ष्ण, तपनी=जलानेवाले शस्त्र से, रक्षस=राक्षसों को, तप=जलाओ, ये=जो, त्वा=तुम्हारी, निदे=निन्दा, दधिरे=धारण करते हैं अर्थात करते है, दृष्टवीर्यम्=जिनका पराक्रम देखा गया है, तत=उस पराक्रम को, आविष्कृष्व=प्रकट करो, यत्=जो, असत् =हो, ते=तुम्हारा, उक्थ्यम्=प्रशसनीय, बृहस्पते=ओ बृहस्पति परिराप =निन्दको को, वि अर्दय=विशेष रूप से दूर करो ।

हि० अ०—तीक्ष्ण जलानेवाले (अपने) अस्त्र से राक्षसो को जलाओ, जो तुम्हारी जिसकी शक्ति देखी गई है, निन्दा करते हैं । जो तुम्हारा प्रशसनीय (पराक्रम) हो उसे प्रकट करो । ओ बृहस्पति, निन्दको को विशेष रूप से अलग करो ।

*Trans* —With (thy) sharp pointed weapon burn the demons who have disdain for thee, whose power

has been seen Make manifest that which may be thine to be praised, O Brhaspatı stır variously the revilers

*Notes* —तप—$\sqrt{tap}$ to burn, impv 2nd sing दधिरे—$\sqrt{dhā}$ to put, perf 3rd plu ; not unaccented because preceded by ये दृष्टवीर्यम्—Whose power is seen or felt, Bahuvrihi compd आविष्कृष्व—$\sqrt{kr}$ with आविः to make manifest, root aorist, mid impv 2nd sing असत्—$\sqrt{as}$ to be pres subju 3rd sing, not unaccented because preceeded by यत् उक्थ्यम्—See I 48 12 परिराप—See II 23 3 अर्दय—$\sqrt{rd}$ to stir, caus pres impv 2nd sing

बृहस्पते । अति । यत् । अर्यः । अर्हात् । द्युऽमत् । विऽभाति ।
क्रतुऽमत् । जनेषु ॥ यत् । दीदयत् । शवसा । ऋतऽप्रजात ।
तत् । अस्मासु । द्रविणम् । धेहि । चित्रम् ॥१५॥

सा० भा०—बार्हस्पत्ये पशावेषा हविषोऽनुवाक्या । 'प्रधानानाम्' इति खण्डे सूत्रितं—'बृहस्पते अति यदर्यो अर्हादितमुत्विया उप याथ सचन्ते' (आश्व० श्रौ० ३ ७) इति । एवंवाश्विनशस्त्रे परिधानीया । सूत्रितं - 'बृहस्पते अति यदर्यो अर्हादिति परिधानीया' (आश्व० श्रौ० ६ ५) इति ।

ऋतप्रजात सत्येनोत्पन्न हे बृहस्पते अर्यः श्रेष्ठो ब्राह्मणः सर्वान् कामानतीत्य यत् ब्रह्मवर्चसं तेजः अर्हात् पूजयेत् । अर्ह पूजायाम् । लेट्याडागमः । ब्राह्मणेषु द्युमत् दीप्तियुक्तं क्रतुमत् ज्ञानोपेतं यद्ब्रह्मवर्चसं विभाति जनेषु । विशेषेण दीप्यते । यत् च शवसा बलेन स्वाश्रयं जनं दीदयत् । दीदयति- दीप्तिकर्मा । दीपयति । चित्रं चायनीयं तत् ब्रह्मवर्चसरूपं द्रविणम् अस्मासु धेहि निधेहि । यद्वा । अयं उदारोऽपि त्वया दत्तं धनम् अतीवार्हन् यद्धीत । यच्च त्वद्दत्तं धनं जनेषु तव स्तोत्रं कुर्वाणेषु दीप्तियुक्तं कर्मसाधनं च विभाति यच्च धनं शवसा अश्वादिसमृद्ध्या दीदयत् स्वाश्रयं दीपयति तादृशं धनमस्मासु धेहि । तथा च ब्राह्मणं—'बृहस्पते अति यदर्यो अर्हादित्येतया परिदध्यात्तेनस्कामो ब्रह्मवर्चसकामोऽतीव वा या ब्रह्मवर्चसमर्हति द्युमदिति द्युमदिव ह्येतं ब्रह्मवर्चसं

विभातीति वीव यै ब्रह्मवर्चसं भाति यद्दीदयच्छवस ऋतप्रजातेति दीदायेव वै ब्रह्मवर्चस तदस्मासु द्रविणं धेहि चित्रमिव वै ब्रह्मवर्चसं ब्रह्मयशसो भवति (ऐ० ब्रा० ४.११) इति ॥

शब्दा०—बृहस्पते=ओ बृहस्पति, अति=अधिक रूप से, यत्=जिससे, अर्यः=श्रेष्ठ आर्य, अर्हात्=पूजा कर सकें, द्युमत्=प्रकाश से युक्त, विभाति=चमकता है, क्रतुमत्=शक्ति से युक्त, जनेषु=मनुष्यों में, यत्=जो, दीदयत्=प्रकाशित हो, शवसा=शक्ति से, ऋतप्रजात=ओ यज्ञ के पुत्र, तत्=ऐसा, अस्मासु=हमें, द्रविणम्=धन, धेहि=प्रदान करो, चित्रम्=विचित्र ।

हि० अ०—ओ बृहस्पति, जिससे श्रेष्ठ आर्य अधिक रूप से पूजा कर सकें, जो प्रकाश तथा शक्ति से युक्त मनुष्यों के बीच चमकता है, जो सामर्थ्य से प्रकाशित हो; ओ यज्ञ के पुत्र, ऐसा (उपर्युक्त गुणों वाला) विचित्र धन हमें प्रदान करो ।

*Trans.*—O Brhaspati, wherewith the pious may worship exceedingly, endowed with lustre and will-power (which) shines among man, which may shine with strength; O born of sacrifice, bestow upon us that wonderful treasure.

*Notes*—अति यदर्यो अर्हात्—This Pāda has variously been interpreted by the scholars: Wilson following Sāyana translates as 'wherewith the pious man may worship exceedingly', Griffith renders as 'that which the foe deserves not'; and Peterson as 'such as would be worth beyond the reach of our opponents'. अर्हात्—√*arh* to worship, pres. subju. 3rd. sing.; not unaccented because preceded by यत्. विभाति—√*bhā* to shine, pres 3rd sing.; not unaccented because syntactically connected with यत्. दीदयत्—√*dī* to shine, pres. subju. 3rd. sing.; not unaccented because preceded by यत्. धेहि—√*dhā* to put, impv. 2nd. sing.

मा । नः । स्तेनेभ्यः । ये । अभि । द्रुहः । पदे । निरामिणः । रिपवः । अन्नेषु । जगृधुः ॥ आ । देवानाम् । ओहते । वि । व्रयः । हृदि । बृहस्पते । न । परः । साम्नः । विदुः ॥१६॥

सा० भा०—हे बृहस्पते नः अस्मान् स्तेनेभ्यः । स्त्यानमस्ति येष्विति स्तेनाश्चौराः । तेभ्यो मा दाः । तान् वशंयति । ये चौराः द्रुहः प्राणद्रोहस्य पदे स्थाने निरामिण' नितरां रमणशीलाः रिपवः हिंसकाः सन्तः अन्नेषु परकीयेषु अभि जागृधुः अभिकाङ्क्षन्ति । 'गृधु अभिकाङ्क्षायाम्' । लिटि रूपम् । ये च देवानां वि व्रयः विशेषेण वर्जनम् । व्री व्लो इति धातू वर्जने वर्तेते । 'य एव' विद्वान् दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनाति' (तै० ब्रा० २. २. ५. १) इत्येकस्य वर्जनार्थं दृष्टत्वादपरस्यापि वर्जनार्थत्वम् । तत् हृदि स्वकीये हृदये आ ओहते आवहन्ति । देवाना यागान् स्तुतीश्च न करयामेति मन्यन्त इति यावत् । तेभ्योऽस्मान् मा दा इति समन्वयः । ये पुमासः साम्नः साममयात्त्वत्तः परः परस्तादन्यदुत्कृष्ट साम यद्रक्षोघ्नम् । साम वै रक्षोहेति । न विदुः न जानन्ति । किंतु सर्वतापकं साम त्वामेव विदुर्योऽस्मान् स्तेनेभ्यो मा दा. ।

शब्दा०—मा=मत, नः=हम लोगो को, स्तेनेभ्यः=चोर शत्रुओ के लिये, ये=जो, द्रुहस्पदे=हत्या करनेवाले स्थान पर, निरामिणः=आनन्द पूर्वक घूमते हुये, रिपवः=शत्रु, अन्नेषु=दूसरों के धन का अभिजागृधुः=लालच करते हैं, देवानाम्=देवताओ को, आ ओहते=लाते हैं, वि व्रयः =अलग करने का विचार, हृदि=हृदय में, बृहस्पते=ओ बृहस्पति, न=नहीं, परः=सीमा, साम्नः=सामन् की, विदुः=जानते हैं ।

हि० अ०—ओ बृहस्पति, हम लोगो को चोर शत्रुओं के लिये मत (दो), जो हत्या करनेवाले स्थान पर आनन्दपूर्वक घूमते हुये (दूसरों के) धन का लोभ करते हैं और देवताओ को अलग करने का विचार हृदय में लाते हैं, (तुम्हारे) सामन् (शस्त्र) की (महिमा की सीमा) नहीं जानते।

*Trans.*—Give us not to the thieves, the enemies who taking delight at slaughtering place covet the food (of others), (who) cherish in (their) hearts the abandonment of gods. O Brhaspati (they) do not know the extent of (thy) Sāman (against evil spirits).

*Notes*—निरामिणः—From नि+√*ram* to take delight; Wilson following Sāyaṇa translates it as 'delighting', Griffith as 'who sits at ease' and Peterson as 'stopping. जागृधुः—√*gṛdh* to covet, perf. 3rd. plu.; not unaccented because syntactically connected with हे. The first syllable is lengthened in the Saṁhitā-text (Ṛg. Prāt. IX. 52), the original being restored in the Pada-text. ओहते—(1) √*ūh* to consider, pres. 3rd. plu. (Roth. Grassmann, Whitney, Macdonell); Macdonell also takes it in 3rd sing. (2) √*oh* to triumph, 3rd. sing. (Peterson), plu. (Oldenberg, Geldner). According to Geldner it is similar to *aoj* and *aog* of Avesta; not unaccented because the antithesis is indicated by आ and वि. व्रयः—Form √*vri* to forbid; 'abandonment' (Wilson, Griffith), 'excessive power' (Oldenberg), 'weakness' (Geldner), 'oppressive power' (Peterson). आ देवानामोहते वि व्रयः हृदि—This Pāda has variously been interpreted by scholars: '(who) in their hearts little mind the tyrannical power of the gods' (Olderberg), 'they affirm the weakness of the gods and deny (the weakness) in their own hearts' (Geldner), 'who cherish in their hearts the abandonment of the Gods' (Wilson, Griffith)., 'the oppressive power of the Gods triumphs directly and in diverse ways in their heart' (Peterson). बृहस्पते न परः साम्नो विदुः—Sāyaṇa construes it with नः in the first Pāda. Wilson, Griffith, Peterson all explain taking it as the adj. clause of स्तेनेभ्यः in the first Pāda: 'Who do not know the extent of thy powers (against evil spirits)' (Wilson), 'no further rest shall they obtain' (Griffith), 'they know of nothing higher than the Sāman (which is (thy) weapon (Peterson).

विश्वेभ्यः । हि । त्वा । भुवनेभ्यः । परि । त्वष्टा । अजनत् । साम्नःऽसाम्नः । कविः ॥ सः । ऋणऽचित् । ऋणऽयाः । ब्रह्मणः । पतिः । द्रुहः । हन्ता । महः । ऋतस्य । धर्तरि ॥१७॥

सा० भा०—हे ब्रह्मणस्पते त्वष्टा प्रजापतिः विश्वेभ्यः भुवनेभ्यः परि सर्वेभ्यो भूतजातेभ्य उत्कृष्टं त्वां अजनत् हि अजीजनत् खलु। ततस्त्वं साम्नः साम्नः सर्वस्यापि साम्नः कविः। 'कु शब्दे'। 'अच इः' इति इप्रत्ययः। उच्चारयिता कर्तासि। यद्वा कविः क्रान्तदर्शी त्वष्टा साम्नःसाम्नः सर्वस्यापि साम्नः सारेण त्वाम् अजीजनत्। किञ्च सः ब्रह्मणस्पतिः महः महतः ऋतस्य यज्ञस्य धर्तरि धारके यजमाने ऋणचित् स्तोतृकाममृणमिव चिनोतीति ऋणचित्। किञ्च ऋणयाः पापरूपस्य ऋणस्य यापयिता पृथक्कर्ता च द्रुहः कर्मणो द्रोग्धुरसुरस्य हन्ता भवति॥

शब्दा०—विश्वेभ्यः=सभी, हि=वास्तव में, त्वा=तुमको, भुवनेभ्यः=प्राणियों से, परि=श्रेष्ठ, त्वष्टा=त्वष्टा ने, अजनत्=उत्पन्न किया, साम्नःसाम्नः=प्रत्येक सामन् से, कविः=कवि, सः=वह, ऋणचित्=ऋण को जाननेवाला, ऋणयाः=ऋण को दूर करनेवाला, ब्रह्मणस्पति=प्रार्थना के स्वामी, द्रुहः=शत्रुओं को, हन्ता=मारनेवाला, महः=महान्, ऋतस्य=यज्ञ के, धर्तरि=धारण करनेवाले के।

हि० अ०—कवि त्वष्टा ने वास्तव में सभी प्राणियों से ऊपर, प्रत्येक सामन् से (सारभूत) तुमको उत्पन्न किया। वह ब्रह्मणस्पति महान् यज्ञ करनेवाले के ऋण को जाननेवाला है। (यजमान के) ऋण को दूर करनेवाला तथा (उसके) शत्रुओं को मारनेवाला है।

*Trans.*—(O Bṛhaspati) Tvaṣṭṛ, the poet, indeed, generated thee from each Sāman, above all the creatures. That Bṛhaspati is acknowledger of (worship as it were) debt to the supporter of great sacrifice; he is the remover of debt and slayer of the enemies (of his worshipper).

*Notes.*—अजनत्—√*jan* to generate, impf. 3rd, sing.; not unaccented because preceded by हि साम्नःसाम्नः—From each sāman; Iterative compd. accented on the

first member. ऋणचित्—According to Sāyaṇa ऋणचित् means 'one who gives head to worship as it were a debt'. Wilson takes it to mean 'one who acknowledges the debt', Griffith as 'guilt-scourger' and Peterson as 'collector of debt. धर्तरि—Locative infinitive from $\sqrt{dhṛ}$ to bear. Sāyaṇa construes it with ऋणचित् and ऋणयाः, while Griffith and Peterson take it as a separate predicative attribute of Bṛhaspati.

तव । श्रिये । वि । अजिहीत । पर्वतः । गवाम् । गोत्रम् । उत्-असृजः । यत् । अङ्गिरः ॥ इन्द्रेण । युजा । तमसा । परिऽवृतम् । बृहस्पते । निः । अपाम् । औब्जः । अर्णवम् ॥१८॥

सा॰भा॰—अङ्गिरः अङ्गिरस हे बृहस्पते गवाम् आवारको बलेनाधिष्ठितः पर्वतः तव श्रिये आश्रयणार्थं व्यजिहीत विवृतद्वारतामगच्छत् । ततस्त्वं यद् यदा गोत्रम् । 'हनिमकटचषकाच्च' इति समूहार्थे त्रप्रत्ययः । गवां समूहं उदसृज निरगमयः तदा इन्द्रेण युजा सहायेन युक्तस्त्वं तमसा वृत्रासुरेण परीवृतं परित आक्रान्तम् अपाम् अर्णवं स्थानभूतं मेघं नि औब्जः नितराम् अधोमुखमकार्षीः ॥

शब्दा॰—तव=तुम्हारे, श्रिये=आश्रय के लिये, वि अजिहीत=खोल दिया, पर्वतः=पर्वत ने, गवाम्=गायों के, गोत्रम्=बाड़े को, उदसृजः=खोला, यत्=जब, अङ्गिरः=ओ अङ्गिरस, इन्द्रेण=इन्द्र की, युजा=मित्रता से, तमसा=अन्धकार से, परिवृतम्=चारों तरफ से ढके हुये, बृहस्पते=ओ बृहस्पति, अपाम्=जल के, निरौब्ज=बहाया, अर्णवम्=समुद्र को ।

हि॰ अ॰—ओ अङ्गिरस, जब तुमने गायों के बाड़े को (जिसमें बल ने उन्हें बंद किया था) खोला, पर्वत ने तुम्हारे आश्रय के लिये (अपने द्वार को अपने आप) खोल दिया । इन्द्र के साथ से, ओ बृहस्पति, तुमने जल के समुद्र को बहाया, जो अन्धकार से ढका हुआ था ।

*Trans*—O Angiras, the mountain cleft itself apart for thy resort, when thou openedst the stall of the

kine. O Bṛhaspati, with Indra for ally thou released the ocean of waters, enveloped with darkness.

*Notes.*—श्रिये—From √*śri* to resort, dat. sing. Griffith takes it to mean 'for glory'. व्यजिहीत्—√*hā* with वि to cleave apart, to open out, impf. mid. 3rd. sing. उदसृजः—√*sṛj* to emit, impf. 2nd. sing.; not unaccented because followed by यत् (यद्धितुपरं छन्दसि—Pāṇ VIII. 1.56). परिवृतम्—Past part. from √*vṛt* with परि to surround; for accent see निहिताः (I. 24.7). नि औब्जः—√*ubj* with नि to let loose, impf. 2nd. sing.

ब्रह्मणः । पते । त्वम् । अस्य । यन्ता । सुऽउक्तस्य । बोधि । तनयम् । च । जिन्व ॥ विश्वम् । तत् । भद्रम् । यत् । अवन्ति । देवाः । बृहत् । वदेम । विदथे । सुऽवीराः ॥१६॥

सा० भा०—हे ब्रह्मणस्पते ब्रह्मणां स्तोत्राणामधिपते अस्य जगतः यन्ता नियामकः त्वं सूक्तस्य अस्मदीयमिदं ब्राह्मणस्पत्यं सूक्तं बोधि बुध्यस्व । त्वं तनयं पुत्रपौत्रादिलक्षणं संतानं जिन्व । जिविः प्रीणनार्थः । लोटि रूपम् । प्रीणय । भवादृशाः देवाः यदवन्ति रक्षन्ति तद् तादृशं विश्वं सर्वं भद्रं कल्याणं भवति । अतो वयं विदथे अस्मिन् यज्ञे सुवीराः शोभनपुत्रपौत्राः सन्तः बृहत् प्रभूतमिदं स्तोत्रं वदेम ब्रूयाम ।

शब्दा०—ब्रह्मणस्पते=ओ प्रार्थना के स्वामी, त्वम्=तुम, अस्य=इस, यन्ता=नियामक, सूक्तस्य=सुन्दर स्तोत्र के, बोधि=होवो, तनयम्=पुत्र पौत्रों को, च=और, जिन्व=कार्य में प्रवृत्त करो, विश्वम्=सभी, तत्=वे, भद्रम्=कल्याणकारी, यत्=जिसको, अवन्ति=रक्षा करते हैं, देवाः=देवता, बृहत्=जोर से, वदेम=बोलें, विदथे=यज्ञ में, सुवीराः=वीर पुत्रों से युक्त ।

हि० अ०—ओ ब्रह्मणस्पति, तुम इस सुन्दर स्तोत्र के नियामक होवो; पुत्र पौत्रों को (कार्य में) प्रवृत्त करो । वे सभी चीजें कल्याणकारी होती हैं जिसकी रक्षा (आप जैसे) देवता करते हैं; वीर पुत्रों से युक्त (हम) यज्ञ में जोर से गान करें ।

*Trans.*—O Brahmaṇaspati, be thou the regulator of this excellent speech, and inspire our offsprings. All is auspicious, that gods protect. May we accompanied with heroes speak aloud in the sacrifice.

*Notes.*—यन्ता—Nom. sing. of यन्तृ from √*yam* to restrain. सूक्तस्य—Of the excellent hymn; उक्त is the past part. of √*vac* to speak, by Samprasāraṇa. बोधि—√*budh* to know, root-aorist impv. 2nd sing. तनयम्—acc. sing. of तनय from √*tan* to stretch, meaning propagating a family, belonging to one's own family (तनयं तनोतेः—Nir.X.7). According to Yāska तनय means grandchild (Nir.XII.6). जिन्व—√*ji* or √*jinv* to inspire, pres. impv. 2nd. sing. अवन्ति—√*av* to protect, pres. 3rd. plu.; not unaccented because preceded by यत् वदेम—√*vad* to speak, pres. opt. 1rst. plu. विदथे—This word has been derived and interpreted variously: (1) √*vid* to find (Roth, Grassmann), (2) √*vidh* to sacrifice (Regnaud), (3) वि + √*dhā* to ordain (Oldenberg); 'sacrifice' (Sāyaṇa, Wilson), 'wisdom', 'spiritual or priestly knowledge', 'counsels of the wise' (Geldner). Griffith and Peterson follow Geldner in translating it as 'assembly'. सुवीराः—Bahuvrīhi compd. accented on the second member बृहद्वदेम विदथे सुवीराः—'May we with valiant men mightily raise our voice at the determining (of ordinances etc.)' (Oldenberg); 'May we lead the great word as masters in wisdom' (Geldner); 'Loud may we speak with heroes in assembly' (Griffith).

---

चतुर्थेऽनुवाके एकादश सूक्तानि । तत्र 'आ ते पितः' इति पञ्चदशर्चं प्रथमं सूक्तं गृत्समदस्यार्षं त्रैष्टुभं रौद्रम् । अनुक्रान्तं च—'आ ते पञ्चोना रौद्रम्' इति । शूलगवादिरुद्रयज्ञेषु अनेन सूक्तेन प्रतीची दिगुपस्थेया । सूत्रितं च—'कद्रुद्रायेमा रुद्राय ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' (आश्व० गृ० ४.८.२३) इति । रुद्रदेवत्ये पशौ 'आ ते पितः' इति हविषोऽनुवाक्या । सूत्रितं च—'आ ते पितर्मरुतां सुम्नमेतु प्र बभ्रवे वृषभाय श्वितीच इति तिस्रः' (आश्व० श्रौ० ३. ८) इति । अत्र शौनकः—चतुर्दशीमुपोष्यैको कृष्णस्य जुहुयाच्चरुम् । आतेसूक्तेन रौद्रेण प्रत्यृचं वाग्यतः शुचिः । पूर्वमाज्याहुतीर्हुत्वाप्येवमाय च संकरम् । हविःशेषेण वर्तेत एकान्तरमतन्द्रितः । पूर्णमासे जयेन्मृत्युं रोगांश्च परिमुच्यते (ऋग्वि० १. १६८-१७०) इति ।

आ । ते । पि॒तः॒ । म॒रु॒ता॒म् । सु॒म्नम् । ए॒तु॒ । मा । नः॒ । सूर्य॑स्य ।
स॒म्ऽदृशः॑ । यु॒यो॒थाः॒ ॥ अ॒भि । नः॒ । वी॒रः । अर्व॑ति । क्ष॒मे॒त ।
प्र । जा॒ये॒म॒हि॒ । रु॒द्र॒ । प्र॒ऽजाभिः॑ ॥१॥

सा० भा०—हे मरुतां पितः मरुत्संज्ञानां देवानामुत्पादक रुद्र । 'परमपि च्छन्दसि' इति षष्ठ्यन्तस्य पूर्वामन्त्रितानुषङ्गवद्भावात् सर्वानुदात्तत्वम् । ते त्वदीयमस्मभ्यं दातव्यं सुम्नं सुखम् आ एतु आगच्छतु । रुद्रस्य च मरुतां पितृत्वम् 'इव पित्रे मरुताम्' (ऋ० स० १.११४.६) इत्यत्रास्माभिः प्रतिपादितम् । तथा त्वं नः अस्मान् सूर्यस्य संदृशः संदर्शनात् मा युयोथाः मा पृथक्कार्षीः । 'यु मिश्रणामिश्रणयोः' । लङि छान्दसः शपः श्लुः । 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन ङित्त्वाभावात् गुणः । अर्वति अश्वे । 'भ्रातृव्यो वा अर्वा' (तै० सं० ६ ३.८.४) इति श्रुतेः । नः अस्माकं वीरः वीर्यवान् पुत्रादिः अभि क्षमेत अभिभवतु । यद्वा वीरस्त्वं नोऽस्मानभिक्षमेथाः अस्मान् कृतापराधानभिक्षमस्व । हे रुद्र प्रजाभिः पुत्रपौत्रादिभिः प्र जायेमहि प्रभूताः स्याम ।

शब्दा०—ते=तुम्हारा, पितर्मरुताम्=वो मरुतों के पिता, सुम्नम्=सुख, आ एतु=आवे, मा=मत, नः=हम लोगों को, सूर्यस्य=सूर्य की,

सदृश —दृष्टि से, युयोथाः=अलग करो। नः =हमारे, वीर =बहादुर (पुत्र पौत्रादि), अर्वति=शत्रु को, अभिक्षमेत=पराजित करें, प्र जायेमहि= वृद्धि को प्राप्त करें, रुद्र=ओ रुद्र देवता, प्रजाभि =सतति द्वारा।

हि० अ०— ओ मरुतो के पिता (रुद्र), तुम्हारे द्वारा प्रदत्त सुख (हमारे पास) आवे। सूय की दृष्टि से मुझे अलग मत करो। हमारे वीर (पुत्र, पौत्रादि) शत्रु को पराजित करें, हम सतति से वृद्धि को प्राप्त करें।

*Trans* —O father of the Maruts, may thy bliss come (to us), separate us not from the sight of the sun May our heroes overcome the enemies, O Rudra, we be multiplied with offsprings

*Notes*—पितर्मरुताम्—See notes on दुहितर्दिव (I 48 1) एतु—$\sqrt{i}$ to go, impv 3rd sing युयोथा —$\sqrt{yu}$ to separate, mid IIIrd conjugation, 2nd, sing injun अभि नो वीरो अर्वति क्षमेत—Wilson following Sāyana renders 'our valiant (descendents) may overcome (these) foes Sayana takes it also to mean 'may the valiant (Rudra) forgive our sins committed', Griffith translates, 'gracious to our fleet courses be the Hero' According to Ludwig 'let our brave son be mighty with the charger' क्षमेत—$\sqrt{ksam}$ to endure, mid opt 3rd sing जायेमहि—$\sqrt{ja}$ to be born mid 1rst, plu opt

त्वाऽदत्तेभिः । रुद्र । शमऽतमेभिः । शतम् । हिमाः । अशीय । भेषजेभिः ॥ वि । अस्मत् । द्वेषः । विऽतरम् । वि । अंहः । वि । अमीवाः । चातयस्व । विषूचीः ॥२॥

सा० भा०—हे रुद्र त्वादत्तेभि त्वया दत्ती शतमेभि अतिशयेन सुखकरै भेषजेभि भेषजैरौषधै शत हिमा शत हेमन्तान शतसवत्सरान अशीय व्याप्नुयाम। अश्नोतेर्लिङि छान्दसो विकरणस्य लुक। अपि च अस्मत् अस्मत्त द्वेष द्वेष्टॄन वि चातयस्व विनाशय। तथा अह पाप वितरम्

अत्यन्त विचातयस्व। अमीवा रोगान् विपूची विषु नाना अञ्चती कृत्स्न-शरीरव्यापकान् रोगान् विचातयस्व अस्मत्त पृथक्कृत्य विनाशय॥

शब्दा०—त्वादत्तेभिः=तुम्हारे द्वारा प्रदत्त, रुद्र=ओ रुद्र देवता, शतमेभि =कल्याणकारी, शतम्—सौ, हिमाः=शरद् ऋतु, अशीय=प्राप्त करें, भेषजेभि=औषधियों से, अस्मत्=हमसे, द्वेष =शत्रुओं को, वितरम्=अत्यन्त, अंहः=पाप को, अमीवा =रोगों को, वि चातयस्व=नष्ट करो, विपूची =सम्पूर्ण शरीर में व्याप्त रहनेवाले।

हि० अ०—तुम्हारे द्वारा प्रदत्त कल्याणकारी औषधियों से, ओ रुद्र, हम सौ शरत ऋतु (वर्ष की आयु) प्राप्त करें। शत्रुओं को हमसे दूर कर अत्यन्त नष्ट करो, पापों को पूर्णतया नष्ट करो, सम्पूर्ण शरीर में व्याप्त रोगों को नष्ट करो।

*Trans*—Given by thee, O Rudra, with the most auspicious medicines may I attain the hundred winters (i e years) Remove far away from us the enemies, completely remove sin (committed), remove all pervading diseases

*Notes*—त्वादत्तेभी—Tatpurusa compd accented on the first member (तृतीया कर्मणि—Pan 1 2 48), the final syllable is lengthened अशीय—√*amś* to attain, 'root' aorist, mid opt 1rst sing वितरम्—Wilson takes it as an adjective of अंह Here Wilson differs from Sāyana who thinks वितरम as an adverb which modifies the verb चातयस्व According to Macdonell it is the comparative form of वि, which means 'farther' चातयस्व—√*cat* to destroy, mid caus 2nd sing विपूची—From विष्वक्+√*añc* to go in various directions व becomes उ by Samprasārana When अञ् of अञ्च् is dropped the preceding syllable is lengthened व्यंऽस्मत्—See Appendix—B under सन्धिज and कम्प स्व०

श्रेष्ठः । जातस्य । रुद्र । श्रिया । असि । तवःऽतमः । तवसाम् । वज्रबाहो इति वज्रऽबाहो ॥ पर्षि । नः । पारम् । अंहसः । स्वस्ति । विश्वाः । अभिऽईतीः । रपसः । युयोधि ॥२॥

सा० भा०—हे रुद्र जातस्य उत्पन्नस्य सर्वस्य जगतो मध्ये श्रिया ऐश्वर्येण श्रेष्ठः प्रशस्यतमः असि भवसि । तथा हे वज्रबाहो आयुधहस्त रुद्र तवसां प्रवृद्धानां मध्ये तवस्तमः अतिशयेन प्रवृद्धोऽसि । स त्वं नः अस्मान् अंहसः पापस्य पारं तीरं स्वस्ति क्षेमेण पर्षि पारय । तथा रपसः पापस्य विश्वाः सर्वाः अभीतीः अभिगमनानि युयोधि पृथक्कुरु । यौतेश्छान्दसः शपः श्लुः । 'वा छन्दसि' इति अपित्वस्य विकल्पनात् ङित्वाभावे 'अङितश्च' इति हेर्धिः ॥

शब्दा०—श्रेष्ठः=सबसे अच्छा, जातस्य=उत्पन्न होनेवाले का, रुद्र =ओ रुद्र, श्रिया=यश से, असि=हो, तवस्तमः=सबसे शक्तिमान, तवसाम् =शक्तिशालियों में, वज्रबाहो=ओ वज्रधारण करनेवाले, पाप=पार करो, नः=हम लोगों को, पारम्=पार, अंहसः=पाप से, स्वस्ति=सुरक्षापूर्वक, विश्वाः=सम्पूर्ण, अभीतीः=प्रहारों से, रपसः=पाप के, युयोधि=अलग करो ।

हि० अ०—ओ रुद्र, यश में, उत्पन्न प्राणियों में तुम सर्वश्रेष्ठ हो; ओ वज्र धारण करनेवाले, शक्तिशालियों में तुम सबसे शक्तिमान हो । सुरक्षा पूर्वक पाप के समुद्र से हमें पार करो; पाप के सम्पूर्ण प्रहारो से दूर करो ।

*Trans.*—The best of beings (thou) art, O Rudra, in glory; (thou art) the mightiest of the mighties, O wielder of the bolt. Pass us in safety over the (ocean of) sin; keep us apart from all the attacks of mischief.

*Notes*—वज्रबाहो—The final ओ of the vocative is treated as Pragrhya in the Pada-text; hence, इति follows. वज्रबाहो is repeated after इति in the Pada-text only to separate the two members by avagraha. पर्षि—$\sqrt{pr}$ to pass, pres., 2nd. sing. युयोधि—$\sqrt{yu}$ to separate, pres. impv. 2nd. sing.

मा । त्वा । रुद्र । चुक्रुधाम । नमःऽभिः । मा । दुःऽस्तुती । वृषभ । मा । सऽहूती ॥ उत् । नः । वीरान् । अर्पय । भेषजेभिः । भिषक्ऽतमम् । त्वा । भिषजाम् । शृणोमि ॥४॥

सा० भा०—हे रुद्र त्वा त्वा नमोभि अयथाक्रियमाणैर्नमस्कारैर्हविर्भिर्वा मा चुक्रुधाम मा क्रोधयाम क्रुद्ध मा कार्ष्म । 'क्रुध कोपे' । अस्माण्ण्यन्तात् लुङि चङि रूपम् । हे वृषभ कामाना वर्षित दुष्टुती दु स्तुत्या अशोभनया स्तुत्या मा चुक्रुधामेत्येव । तया सहूती सहूत्या विसदृशैरन्यैर्देवै सहाह्वानेन मा क्रोधयाम । श्रेष्ठो हि स्वस्मान्न्यूनेन सहाह्वाने क्रुद्धो भवति । स त्व न अस्माक वीरान् पुत्रान् भेषजेभि त्वदीयैर्भेषजैरौषधै उत् अर्पय उत्कृष्ट सयोजय । हे रुद्र त्वा त्वा भिषजा चिकित्साभिज्ञाना मध्ये भिषक्तमम् अतिशयेन भैषज्यस्य कर्तार शृणोमि । 'प्रथमो दैव्यो भिषक्' (तै० स० ४ ५ १ २, वा० स० १६ ५) इति च मन्त्रान्तरेऽप्युक्तम् ॥४॥

शब्दा०—मा=मत, त्वा=तुमको, चुक्रुधाम=क्रोधित करें, उत्तेजित करें नमोभिः=(अधूरी) स्तुतियो द्वारा, मा=मत, दुष्टुती—अयोग्य स्तुतियो द्वारा, वृषभ=ओ शक्तिशाली, मा=मत, सहूती=अन्य महत्वहीन देवताओ की एक स थ स्तुति द्वारा नः=हमारे, वीरान्=पुत्र पौत्रादिको को उदर्पय =उत्कृष्ट करो, भेषजेभिः=औषधियो से भिषक्तमम्=सवश्रेष्ठ वैद्य, त्वा =तुमको, भिषजाम् वैद्यो मे, शृणोमि=सुनता हूँ ।

हि० अ० —ओ रुद्र, (अपूर्ण) प्रार्थनाओ से (हम) तुमको उत्तेजित न करें, ओ शक्तिशाली, अयोग्य स्तुतियो द्वारा न (क्रोधित करें), (अन्य महत्व-हीन देवताओ की) सहस्तुतियों द्वारा न (क्रोधित करें) । हमारे वीरो (पुत्र पौत्रादिकों) को अपनी औषधियों से उत्कृष्ट करो, (क्योंकि) तुमको वैद्यो में सबसे बडा वैद्य सुनता हूँ ।

*Trans* —O Rudra, let us not provoke (thee with (inadequate) salutations, not with unworthy praise, not with joint invocations (of other inferior deities), O mighty Strengthen our heroes (offsprings) with (thy) medicines, (for) I hear of thee (as) the best physician of physicians

*Notes*—चुक्रुधाम—√*krudh* to be angry, 'red.'-aorist, subju. 1rst. plu. Being subju. in form, in the context with the prohibitive particle मा, it is injunctive. दुद्दुती—Instr, sing. of दुष्टुति; stems ending in इ very often lengthen the final vowel in the 1rst. sing. सहूती—Instr. sing. of सहूति. उदर्पय—उद्+√ṛ to strengthen, caus. impv. 2nd. sing. शृणोमि—√*śru* to hear, pres. 1rst. sing.

हवीमऽभिः । हवते । यः । हविःऽभिः । अव । स्तोमेभिः । रुद्रम् । दिषीय ॥ ऋदूदरः । सुऽहवः । मा । नः । अस्यै । बभ्रुः । सुऽशिप्रः रीरधत् । मनायै ॥५॥

सा० भा०—यः रुद्रः हविर्भिः चरुपुरोडाशादिभिः सहितैः हवीमभिः आह्वानैः स्तुतिलक्षणैः हवते आहूयते स्तूयते व्यत्ययेन कर्मणि कर्तृप्रत्ययः । 'बहुलं छन्दसि' इति ह्वयतेः संप्रसारणम् । तं रुद्रं स्तोमेभिः स्तोत्रैः अव दिषीय अवखण्डयामि पृथक्करोमि । अपगतक्रोधं करोमीति यावत् । 'दो अवखण्डने' व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इतीत्वम् । ऋदूदरः । 'ऋदूदरो मृदूदरः' (निरु० ६. ४) इति यास्कः । सुहवः शोभनाह्वानः बभ्रुः भर्ता सर्वस्य बभ्रुवर्णो वा । सुशिप्रः । शिप्रे हनू नासिके वा । शोभनशिप्रः । एवंगुणविशिष्टः स रुद्रः अस्यै मनायै । हन्मीति मन्यमाना बुद्धिर्मना । तस्यै नः अस्मान् मा रीरधत् । मा वशं नैषीत् । 'रध हिंसासंराद्धयोः' । अस्माण्ण्यन्तात् लुङि चङि रूपम् । 'रध्यतिर्वशगमने' इति यास्कः ।

शब्दा०—हवीमभिः=आह्वानों द्वारा, हवते=पूजा जाता है, बुलाया जाता है, यः=जो, हविर्भिः=हविद्रव्यों द्वारा, स्तोमेभिः=स्तोत्रों द्वारा, रुद्रम्=रुद्र को, अव दिषीय=शान्त करूँ, ऋदूदरः=उदार, सरल हृदय-वाला, सुहवः=आसानी से प्रार्थनाओं को सुननेवाला, मा=मत, नः=हम लोगों को, अस्यै=उस, बभ्रुः=भूरे रंगवाला, सुशिप्रः=सुन्दर ओष्ठवाला, रीरधत्=शिकार बनावे, मनायै=क्रोध का ।

हि० अ०—(उस) रुद्र को स्तुतियों से शान्त करूँ जो आह्वानों तथा यज्ञों द्वारा पूजा जाता है । उदार, आसानी से (प्रार्थनाओं को) सुननेवाला भूरे वर्णवाला, सुन्दर ओष्ठवाला (रुद्र) हमको (अपने विख्यात) क्रोध का शिकार न बनावे ।

*Trans* —With songs of praise I may pacify Rudra who is worshipped with invocations and oblations Let not the soft-bellied, easy to invoke, brown-coloured, fair-lipped (Rudra) subject us to that malevolent disposition

*Notes*—हवीमभिः—Instr plu of the stem हवीमन् from √*hū* to call हवते—√*hū* to call mid pres 3rd sing ; not unaccented because followed by च (चवियुपर छन्दसि —Pān VIII-1-56) दिपीय—√*dā* to divide, 1rst sing 's'-aorist, opt ऋदूदर—Bahuvrihi compd aconted on the second member Yāska followed by Sāyana renders it by ऋदु उदर or मृदु उदर soft-bellied Griffith takes it mean 'gracious' and Macdonell as 'compassionate सुहव—Bahuvrihi compd accented on the second member; 'swift hearing' (Griffith), 'easy to invoke' (Macdonell) 'reverently invoked' (Wilson) रीरधद्—√*randh* to make subject, red -aorist, injun 3rd sing

उत् । मा । ममन्द । वृषभः । मरुत्वान् । त्वक्षीयसा । वयसा । नाधमानम् ॥ घृणिऽइव । छायाम् । अरपाः । अशीय । आ । विवासेयम् । रुद्रस्य । सुम्नम् ॥६॥

सा० भा०—वृषभः कामाना वर्षिता मरुत्वान् मरुद्भि पुत्रैर्युक्तो रुद्र नाधमानं याचमान मा मा त्वक्षीयसा दीप्तेन वयसा अन्नेन उत् ममन्द उत्कर्षेण तर्पयतु । अपि चाह घृणीव छायां यथा सूर्यकिरणसतप्त छाया प्रविशति एव रुद्रस्य सुम्न सुखम् अरपा अपाप सन् अशीय व्याप्नुयाम् । तदर्थं त रुद्रम् आ विवासेयं परिचरेयम् । विवासति परिचरणकर्मा ॥

शब्दा०—मा=मुझको, उत् ममन्द=आनन्दित करे, वृषभः=शक्तिशाली रुद्र, मरुत्वान्=मरुतो के साथ, त्वक्षीयसा=तेजस्वी, वयसा=शक्ति से, नाधमानम्=प्रार्थना करनेवाले को, घृणीव=सूर्य किरणों से सतप्त

व्यक्ति की तरह, छायाम्=छाया को, अरपाः=पापरहित होकर, अशीय=प्राप्त करूं, आ विवासेयम्=सेवा करूं, रुद्रस्य=रुद्र के, सुम्नम्=सुख को।

हि० अ०—शक्तिशाली (रुद्र) मरुतों के साथ मुझ स्तुति करनेवाले को अपनी तेजस्वी शक्ति से आनन्दित करें। मैं (रुद्र की) सेवा करूं (ताकि) पापरहित होकर रुद्र के सुख को उसी प्रकार प्राप्त करूं जिस प्रकार सूर्य-किरणों से संतप्त (व्यक्ति) छाया में (सुख पाता है)।

*Trans.*—May the mighty one, accompanied with Maruts, gladden me, his worshipper, with shining vitality. I, free from sin, propitiate (so that) I may attain the bliss of Rudra as a (man) distressed by heat attains (relief) in shades.

*Notes* - ममन्द—√*mand* to exhilerate, perf. 3rd. sing. नाधमानम्—√*nādh* to seek aid, pres. part. acc. sing. अरपाः—Bahuvrihi compd. accented on the second member because the first member is अ (नञ्सुभ्याम्—Pāṇ. VI. 2. 172). अशीय—√*aṁś* to attain, mid. root-aorist, opt. 1rst. sing. विवासेयम्—√*van* to win. opt. desid. 1rst. sing.

क्व॑। स्यः। ते॒। रु॒द्र॒। मृ॒ळ॒याकुः॑। हस्तः॑। यः। अस्ति॑। भे॒ष॒जः। जला॑षः॥ अ॒प॒ऽभ॒र्ता। रप॑सः। दैव्य॑स्य। अ॒भि। नु। मा॒। वृ॒ष॒भ॒। च॒क्ष॒मी॒थाः॥७॥

सा० भा०—हे रुद्र ते तव मृळयाकुः सुखयिता स्यः सः हस्तः क्व कुत्र वर्तते। यः हस्तः भेषजः भैषज्यकृत् जलाषः सर्वेषां सुखकरः अस्ति भवति। स हस्तो विद्यते एव। तेन हस्तेन मां रक्षेति भावः। अपि च हे वृषभ कामानां वर्षित. दैव्यस्य देवकृतस्य रपसः पापस्य अपभर्ता अपहर्ता विनाशयिता भूत्वा कृतापराधं मा मां नु क्षिप्रम् अभि चक्षमीथाः अभिक्षमस्व। 'क्षमष् सहने'। लङि छान्दसः शपः श्लुः। 'बहुलं छन्दसि' इतीडागमः॥

शब्दा०—क्व=कहां स्यः=वह, ते=तुम्हारा, रुद्र=ओ रुद्र देवता, मृळयाकुः=सुखदायी, हस्तः=हाथ, यः=जो, अस्ति=है, भेषजः=स्वास्थ्य

देनेवाला, जलाषः=शीतलता पहुंचानेवाला, अपभर्ता=दूर करनेवाले, रपसः=पाप को दैव्यस्य=देवताओं द्वारा भेजा हुआ, नु=अभी, मा=मेरे ऊपर, वृषभ=ओ शक्तिशाली, अभि चक्षमीथाः=दया करो।

हि॰ अ॰—ओ रुद्र, वह तुम्हारा सुखदायी हाथ जो सबको स्वास्थ्य एवं शीतलता (आराम) पहुंचानेवाला है, कहां है ? ओ शक्तिशाली, देवताओं द्वारा प्रेषित पाप को (भी) दूर करनेवाले (जो तुम हो) मेरे ऊपर दया करो।

*Trans.*—Where is that thy gracious hand, O Rudra, which is curing and cooling (i.e. giving comforts to all). (As thou art) the dispeller of sin coming from gods, quickly have compassion upon me, O mighty.

*Notes*—क्व ! स्य—Vide Appendix—B under कम्प स्व०.

चक्षमीथाः—√*kṣam* to endure, perf. opt. 2nd. sing.

प्र । बभ्रवे॑ । वृष॒भाय॑ । श्वि॒ती॒चे । म॒हः । म॒हीम् । सु॒ऽस्तु॒तिम् । ई॒र॒या॒मि॒ ॥ न॒म॒स्य । क॒ल्म॒ली॒कि॒न॑म् । नमः॑ऽभिः । गृ॒णी॒मसि॑ । त्वे॒षम् । रु॒द्रस्य॑ । नाम॑ ॥८॥

सा॰ भा॰—बभ्रवे विश्वस्य भर्त्रे बभ्रुवर्णाय वा वृषभाय कामानां वर्षित्रे तद्वत्प्रसह्यकारिणे वा श्वितीचे श्वैत्यमञ्चते। 'श्विता वर्णे'। औणादिक इन्प्रत्ययः श्वितिमञ्चतीत्यञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्। चतुर्थ्येकवचने 'अचः' इत्यकार लोपे 'चौ' इति दीर्घत्वम्। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्। एवंगुणविशिष्टाय रुद्राय महो महीं महतोऽपि महतीं सुष्टुतिं शोभनस्तुतिं प्र ईरयामि प्रकर्षेणोच्चारयामि। हे स्तोतः कल्मलीकिनम्। ज्वलतो नामधेयमेतत् (निरु॰ १. १७)। ज्वलन्तम्। कलयति अपगमयति मलमिति कल्मलीकं तेजः। तद्वन्तं रुद्रं नमोभिः नमस्कारैः हविर्भिर्वा नमस्य पूजय। वयं च रुद्रस्य महादेवस्य त्वेषं दीप्तं नाम गृणीमसि गृणीमः संकीर्तयामः। 'गॄ शब्दे'। क्र्यादिकः। इदन्तो मसिः। 'प्वादीनां ह्रस्वः'॥

शब्दा॰—बभ्रवे=भूरे वर्णवाले, वृषभाय=शक्तिशाली के लिये श्वितीचे=सफेद आकृतिवाले, महः=बड़े से (भी) महीम्=बड़ी, सर्वश्रेष्ठ, सुष्टुतिम्=सुन्दर स्तुति को, प्र ईरयामि=अर्पित करता हूँ, भेजता हूँ,

नमस्य=नमस्कार करो, कल्मलीकिनम्=कलुष को नष्ट करने वाले, नमोभिः =स्तुतियो द्वारा, गृणीमसि=गान करते है, त्वेषम्=दीप्तिमान, रुद्रस्य=रुद्र देवता के, नाम=नाम का।

हि० अ०—भूरे वर्णवाले, शक्तिशाली, सफेद आकृतिवाले (रुद्र) को मैं अपनी सर्वश्रेष्ठ सुन्दर स्तुति अर्पित करता हूँ। कलुष को नष्ट करनेवाले (रुद्र) को स्तुतियों द्वारा नमस्कार करो। हमलोग रुद्र के दीप्तिमान नाम का गान करते हैं।

*Trans*—I utter forth the mightiest laudation to the mighty, brown coloured, the white-complexioned (Rudra) Adore the brilliant (i e consumer of darkness) with salutations We glorify the shining name of Rudra

*Notes*—श्वितीचे—Dative, sing from the stem श्वित्यञ्च् ईरयामि—$\sqrt{ir}$ to set in motion, caus pres 1rst, sing नमस्या—$\sqrt{nam}$ to bend, impv 2nd sing Final syllable is metrically lengthened Macdonell takes it as subju 1rst sing नमस्या कल्मलीकिनं नमोभि—Wilson following Sāyana translates 'adore the consumer (of sin) with prostrations Macdonell renders 'I will adore the radiant one with obeisances', According to Griffith 'we serve the brilliant God with adorations' गृणीमसि—$\sqrt{gr}$ to sing, pres 1rst plu , accented because it begins the Pāda त्वेषम्—'Illustrious' (Yāska, Sayana) 'terrible' (Macdonell)

स्थिरेभिः। अङ्गैः। पुरुऽरूपः। उग्रः। बभ्रुः। शुक्रेभिः। पिपिशे। हिरण्यैः॥ ईशानात्। अस्य। भुवनस्य। भूरेः। न। वै। ऊँ इति। योषत्। रुद्रात्। असुर्यम्॥९॥

सा० भा०—स्थिरेभिः स्थिरं दृढं अङ्गैः अवयवैर्युक्त पुरुरूपः अष्टमूर्त्यात्मकैर्बहुभी रूपैरुपेत उग्रः उद्गूर्णस्तेजस्वी बभ्रु भर्ता बभ्रुवर्णो वा रुद्र

शुक्रेभिः दीप्तैः हिरण्यैः हिरण्मयैर्हितरमणीयैर्वालंकारैः पिपिशे दीप्यते। 'पिश अवयवे'। कर्मणि लिट्। ईशानात् ईश्वरात् अस्य भुवनस्य भूतजातस्य भूरेः भर्तुः रुद्रात् असुर्यम्। 'असु क्षेपणे'। असेरुरन्। असुरः क्षेप्ता। 'तत्र साधुः'। असुर्यं बलं न वा उ योषत् नैव पृथक् भवति। यौतेर्लेट्यडागम। 'सिब्बहुलं लेटि' इति सिप्॥

शब्दा०=स्थिरेभि =दृढ़, अङ्गैः=अङ्गों से युक्त, पुरुरूपः=अनेक रूपवाले, उग्रः=भयानक बभ्रुः=भूरे रंगवाले, शुक्रेभि =चमकते हुए, पिपिशे =अलंकृत किया है, हिरण्यैः=स्वर्णाभूषणों से, ईशानात्=शासक से, अस्य=इस, भुवनस्य=लोक के, भूरेः=सबके मालिक, न=नहीं, वै=पूर्ववर्ती शब्द पर जोर देनेवाला एक निपात, योषत्=अलग होती है, असुर्यम् =प्राणदातृ शक्ति।

हि० अ०- दृढ़ अङ्गों से युक्त, अनेक रूपवाले, भयानक भूरे रंगवाले (रुद्र) ने चमकते हुये स्वर्णाभूषणों से अपने को अलंकृत किया है। इस लोक के शासक, सबके मालिक रुद्र से प्राणदातृ शक्ति कभी अलग नहीं होती।

*Trans* —Furnished with firm limbs, having many forms, terrible, brown coloured (Rudra) has adorned himself with illustrious golden ornaments The life giving force never departs from Rudra, the supreme ruler and the lord of this world

*Notes*—पुरुरूपः—Bahuvrihi compd accented on the second member, because the first member is dissyllabic adjective ending in 'उ' In the R V it invariably happens when the first member is बहु or पुरु (MVGS p 455) पिपिशे—$\sqrt{}$*pis* to adorn, mid perf 3rd sing ईशानात—Abl sing of pres participial stem ईशान from $\sqrt{}$*is* to be master योषत—$\sqrt{}$*yu* to separate 's' aorist, 3rd sing

neckless

अर्हन् । बिभर्षि । सायकानि । धन्वं । अर्हन् । निष्कम् । यज-

तम् । विश्वऽरूपम् ॥ अर्हन् । इदम् । दयसे । विश्वम् । अभ्वम् । न । वै । ओजीयः । रुद्र । त्वत् । अस्ति ॥१०॥

सा० भा०—हे रुद्र त्वम् अर्हन् अर्हो योग्य एव सन् सायकानि शरान् धन्व धनुश्च विभर्षि धारयसि । तथा अर्हन् एव यजतं यजनीयं पूजनीयं विश्वरूपं बहुविधरूपयुक्तं निष्कं हारं बिभर्षि । तथा अर्हन् एव इदं विश्वं सर्वम् अभ्वम् । महद्यामंतत् । अतिविस्तृतं जगत् दयसे रक्षसि । 'देङ् रक्षणे' । हे रुद्र त्वत् त्वत्तोऽन्यत् किंचित् ओजीयः ओजस्वितरं बलवत्तरं न वै अस्ति न खलु विद्यते । अतस्त्वमेव उक्तव्यापारेषु योग्य इत्यर्थः । ओजः शब्दात मत्वर्थीयो विनिः । ततः आतिशायनिकः इष्टन् । 'विन्मतोर्लुक्' । 'टेः' इति टिलोपः ॥

शब्दा०—अर्हन्=ओ योग्य, बिभर्षि=धारण करते हो, सायकानि=बाणों को, धन्व=धनुष को, अर्हन्=ओ योग्य, निष्कम्=हार, यजतम्=पूजनीय, विश्वरूपम्=विभिन्न रूपों को, अर्हन्=ओ योग्य, इदम्=इसको, दयसे=विभाजित करते हो, विश्वम्=सम्पूर्ण, अभ्वम्=विस्तृत सृष्टि का, न=नहीं, वै=पूर्ववर्ती शब्द पर जोर देने वाला एक निपात, ओजीयः=अधिक शक्तिशाली, रुद्र=ओ रुद्र देवता, त्वत्=तुमसे अलग, अस्ति=है ।

हि० अ०—ओ योग्य (रुद्र), (तुम) बाण तथा धनुष धारण करते हो; ओ योग्य, (तुम) पूजनीय तथा विभिन्न रूप की माला (धारण करते हो) । ओ योग्य (तुम) सम्पूर्ण सृष्टि का विभाजन करते हो; तुमसे बढ़कर शक्तिशाली, ओ रुद्र, कोई नहीं है ।

*Trans.*—O worthy, thou bearest arrows and bow; O worthy, thou (bearest) adorable and omniformed necklace. O worthy, thou dividest the whole extent; none is more powerful than thou, O Rudra.

*Notes*—अर्हन्—Vocative sing. accented on the first syllable. Accordig to Sāyaṇa it is participle. Macdonell takes it as adverb. बिभर्षि—√*bhṛ* to bear, pres. 2nd, sing. विश्वरूपम्—Bahuvrīhi compd. accented on the first member. दयसे—√*dā* to divide, pres. 2nd. sing. Sāyaṇa derives दयसे from देङ् to pro-

tect. In the line स्थिरा चिदन्ना दयते विजम्मैः (IV.7.10) he derives दयते from √*dā* to divide. इदं दयसे विश्वमभ्वं— Wilson following Sāyaṇa translates: 'thou preservest all this vast universe'. Griffith renders: 'thou cuttest here each fiend to pieces'. According to Macdonell, 'thou wieldest all this force. ओजीयः— Comparative degree of ओजः

स्तुहि । श्रुतम् । गर्तऽसदम् । युवानम् । मृगम् । न । भीमम् । उपऽहत्नुम् । उग्रम् ॥ मृळ । जरित्रे । रुद्र । स्तवानः । अन्यम् । ते । अस्मत् । नि । वपन्तु । सेनाः ॥११॥

सा० भा० –हे स्तोतः श्रुतं विश्रुतं प्रख्यातं रुद्रं स्तुहि । कीदृशम् गर्तसदं गर्तो रथः । तत्र सीदन्तं युवानं नित्यतरुणं मृगं न भीमं मृगं सिंहमिव भयंकरम् । उपहत्नुम् उपहन्तारं शत्रूणाम् उग्रं उद्‌गूर्णं हे रुद्र त्वं स्तवानः अस्माभिः स्तूयमानः सन् जरित्रे स्तोत्रे मह्यं मृळ सुखय । ते त्वदीयाः सेनाः अस्मत् अन्यम् अस्मद्व्यतिरिक्तं पुरुषं नि वपन्तु निघ्नन्तु ।

शब्दा० स्तुहि=स्तुति करो, श्रुतम्=विख्यात, गर्तसदम्=रथ पर बैठे हुये, युवानम्=युवक को, मृगम्=जंगली पशु को, न=तरह, भीमम्=भयानक, उपहत्नुम्=शत्रु को मारनेवाले, उग्रम्=भयानक, मृळ=दया करो, जरित्रे=स्तुति करने वाले के लिये, रुद्र=हे रुद्र देवता, स्तवानः=स्तूयमान होकर, अन्यम्=दूसरे को, ते=तुम्हारे, अस्मत्=हमसे भिन्न को, नि वपन्तु =नष्ट करें, सेनाः=शस्त्र ।

हि० अ०—विख्यात, रथ पर बैठे हुये, युवक, जंगली पशु की तरह भयंकर, (शत्रु को) मारनेवाले, भयानक रुद्र की स्तुति करो । हे रुद्र, स्तूयमान होकर स्तुतिगायक के लिये दया करो । तुम्हारे शस्त्र हमसे अन्य (शत्रु) का विनाश करें ।

*Trans* —Praise the well-known, sitting on the chariot, the young, the fierce like a wild beast, the slayer (*of the enemies*), the terrible (Rudra). O

Rudra, being praised, be merciful to the singer. Let thy weapons smite down another than us.

*Notes*—स्तुहि—√*stu* to praise, impv. 2nd. sing. गर्तसदम्—Tatpurusa compd. accented on the second member. The first member is locative in sense and the second member is a verbal noun. मृळ—√*mṛḍ* to be gracious, pres. impv. 2nd. sing.; accented because it begins the Pāda. स्तवानः—√*stu* to praise pres. part. pass. in sense. वपन्तु—√*vap* to strew, impv. 3rd. plu.

कुमारः । चित् । पितरम् । वन्दमानम् । प्रति । ननाम । रुद्र । उपऽयन्तम् ॥ भूरेः । दातारम् । सत्ऽपतिम् । गृणीषे । स्तुतः । त्वम् । भेषजा । रासि । अस्मे इति ॥१२॥

सा० भा०—वन्दमानम् आयुष्मान्भव सौम्य इति स्तुवन्तं पितरं कुमारश्चित् यथा कुमारः । चिदित्येतदुपमार्थे । हे रुद्र उपयन्तम् अस्मत्समीपे गच्छन्तं त्वा प्रति ननाम प्रतिनतोऽस्मि । अपि च भूरेः बहुनो धनस्य दातारं सत्पतिं सतां पालयितारम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । हे रुद्र एवंभूतं त्वां गृणीषे स्तौमि । मिपः 'तिङां तिङो भवन्ति' इति सेआदेशः । स्तुतः च त्वम् अस्मे अस्मभ्यं भेषजा भेषजानि रासि देहि ।

शब्दा०—कुमारः=पुत्र, चित्= उपमा अर्थ का वाची एक निपात, पितरम्=पिता को, वन्दमानम्=आशीर्वचनम् बोलने वाले, प्रति=की ओर, ननाम=प्रणाम करता हूँ, रुद्र=ओ रुद्र देवता, उपयन्तम्=अपने पास आनेवाले तुमको, भूरेः=प्रचुर, दातारम्=देनेवाले, सत्पतिम्=सत्यस्वामी को, गृणीषे=गाता हूँ, स्तुतः=स्तूयमान होकर, त्वम्=तुम, भेषजा=औषधियाँ रासि=प्रदान करते हो। अस्मे=हम लोगों के लिये।

हि० अ०—जिस प्रकार एक पुत्र आशीर्वचन बोलनेवाले पिता को (प्रणाम करता है) उसी प्रकार, ओ रुद्र, मैं अपने पास आनेवाले, तुमको प्रणाम करता हूँ। मैं, प्रचुरता में देनेवाले सत्यस्वामी (तुम्हारी) स्तुति गाता हूँ। (उन गुणों से युक्त) तुम, स्तूयमान होकर हमको औषधियां प्रदान करते हो।

*Trans* —As a son before (his) sire, bestowing a blessing, O Rudra we bow to thee, coming (towards us) I glorify (thee) the profound bestower and true lord, thou (as such) being praised do grant us medicines

*Notes* —नानाम —$\sqrt{nam}$ to bend, perf 1rst sing First syllable is metrically lengthened Macdonell takes it as perf 3rd sing He translates कुमारश्चित्—उपयन्तम as 'A son bows towards his father who approving approaches him, O Rudra' सत्पतिम्—Tatpurusa compd accented on the first member (पत्यावैश्वर्ये—Pan—VI 2 18) गृणीषे—$\sqrt{gr}$ to sing mid pres 1rst sing स्तुत —$\sqrt{stu}$ to praise, past part रासि—$\sqrt{r\bar{a}}$ to give, pres 2nd sing, Sāyana and Griffith translate it in imperative sense, while Macdonell in pres indicative sense अस्मे—For अस्मभ्यम्, final ए in Pragrhya, hence, इति in the Pada text

या । वः । भेषजा । मरुतः । शुचीनि । या । शम्ऽतमा । वृषणः । या । मयःऽभु ॥ यानि । मनुः । अवृणीत । पिता । नः । ता । शम् । च । योः । च । रुद्रस्य । वश्मि ॥१३॥

सा० भा० —हे मरुतः रुद्रपुत्रा वः युष्माकं या यानि भेषजा भेषजान्यस्मदारोग्यहेतुभूतान्यौषधानि शुचीनि शुद्धानि निर्मलानि सन्ति । हे वृषणः कामानां वर्षितारो मरुतः या यानि च युष्मदीयानि भेषजानि शंतमा अतिशयेन सुखकराणि । या यानि च भेषजानि मयोभु मयोभूनि मयस सुखस्य भावयितृणि नः अस्मत्पिता मनुः यानि भेषजानि युष्मदीयानि अवृणीत वृतवान् ता तानि भेषजानि रुद्रस्य महादेवस्य सबन्धि शं च योश्च यच्छमनीयानां रोगाणामुपशमनं यावनीयानां भयानां यथावनमस्मत्त पृथक्करणं तदुभयं च वश्मि कामये ॥ 'वश कान्तौ' । आदादिक ।

शब्दा० —या=जो, वः=तुम्हारी, भेषजा=औषधियाँ, मरुतः=ओ मरुतगण, शुचीनि=पवित्र, या=जो, शंतमा=अत्यधिक कल्याणकारी,

वृषणः=ओ शक्तिशालियों, या=जो, मयोभु=हितकारी, यानि=जिनको, मनुः=मनु ने, अवृणीत=चुना था, पिता=पिता, नः=हम लोगों के, ता=उन औषधियों की, शम्=आनन्द, च=और, योः=कल्याण, च=और, रुद्रस्य=रुद्र की, वश्मि=इच्छा करता हूँ ।

हि० अ०—ओ मरुद्गण, तुम्हारी औषधियां जो पवित्र हैं, जो अत्यधिक सुख देनेवाली हैं, ओ शक्तिशाली, जो हितकारी हैं, जिनको हमारे पूर्वज मनु ने चुना था; उन (औषधियों) की तथा रुद्र की (औषधियों) की जो आनन्द तथा कल्याण प्रदान करने वाली हैं, इच्छा करता हूँ ।

*Trans.*—O Maruts, your medicines that are pure, that are the most pleasant, O powerful, that are beneficent, that our forefather Manu chose; these and those of Rudra that are pleasure-giving (by cure) and blessing (by defending from danger), I crave.

*Notes.*—शंतमा—The superlative degree of शम् (pleasant). अवृणीता—√*vr* to choose, mid. impf. 3rd. sing. Final syllable is lengthened. वश्मि—√*vaś* to desire, pres. 1rst. sing.

परि । नः । हेतिः । रुद्रस्य । वृज्याः । परि । त्वेषस्य । दुःऽमतिः । मही । गात् ॥ अव । स्थिरा । मघवत्ऽभ्यः । तनुष्व । मीढ्वः । तोकाय । तनयाय । मृळ ॥१४॥

सा० भा०—रुद्रस्य महादेवस्य हेतिः आयुधं नः अस्मान् परि वृज्याः परिवर्जयतु । तथा त्वेषस्य दीप्तस्य रुद्रस्य मही महती दुर्मतिः दुःखकारिणी बुद्धिश्च परि गात् अस्मान् वर्जयित्वा अन्यत्र गच्छतु । 'अपपरी वर्जने' (पा० सू० १. ४. ८८) । हे मीढ्वः सेचनसमर्थ रुद्र स्थिरा स्थिरतराणि त्वदीयानि धनूंषि मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः अव तनुष्व अवततज्यानि कुरु । तथा तोकाय अस्मत्पुत्राय तनयाय तत्पुत्राय च मृळ सुखं कुरु ॥

शब्दा०—नः=हम लोगों को, हेतिः=शस्त्र, रुद्रस्य=रुद्र का, परि वृज्याः=दूर रखे, त्वेषस्य=तेजस्वी रुद्र का, दुर्मतिः=क्रोध, मही=भया-

नक, परि गात्=दूर जावे, स्थिरा=दृढ, मघवद्भ्यः=उदार दाताओ के लिये, अव तनुष्व=ढीला करो, मीढ्व=ओ दयालु, तोकाय=पुत्रो पर, तनयाय,=पौत्रो पर, मृळ=दया करो ।

हि॰ अ॰ – रुद्र का शस्त्र हमको अलग रखे, तेजस्वी (रुद्र) का भयानक क्रोध हमसे दूर रहे । (हमारे) उदारदाताओ के लिये (अपने) दृढ़ शस्त्र को ढीला करो, ओ दयालु (रुद्र), (हमारे) पुत्र पौत्रादिको पर दया करो ।

*Trans* —May the missile of Rudra avoid us May the great ill disposition (i e wrath) of the terrible one avoid us, *loosen (thy) firm (bow) for our liberal* patrons, O bounteous, be gracious to our sons and grandsons

*Notes* —वृज्या —√*vrj* to twist, root aorist prec 3rd sing गात्—√*gā* to go, root aorist injun 3rd sing तनुष्व—√*tan* to stretch mid impv 2nd sing मीढ्वः—Voc from unreduplicated perf part मीढ्वांस It begins the Pāda, hence, accented मृळ—√*mrd* to be gracious, impv 2nd sing

एव । बभ्रो इति । वृषभ । चेकितान । यथा । देव । न । हृणीषे । न । हंसि ॥ हवनऽश्रुत् । नः । रुद्र । इह । बोधि । बृहत् । वदेम । विदथे । सुऽवीराः ॥१५॥

सा॰ भा॰—हे बभ्रो जगतो भर्तबभ्रुवर्ण वा वृषभ कामानां वर्षित चेकितान सर्वं जानन हे देव द्योतमान रुद्र यथा येन प्रकारेण न हृणीषे न क्रुध्यसि न च हंसि । 'हृणीङ लज्जायाम' । अयं क्रुध्यतिकर्मा च । एव हवनश्रुत् अस्मदीयमाह्वानं शृण्वन् नः अस्मान् हे रुद्र इह अस्मिन देशे बोधि बुध्यस्व । विदथे यज्ञे गृहे वा सुवीरा शोभनपुत्रा सन्त बृहत् प्रौढ त्वदीय स्तोत्र वदेम उच्चारयाम ॥

शब्दा॰—एव=इस प्रकार, बभ्रो=ओ भूरे रंगवाले, वृषभ=ओ शक्तिशाली, चेकितान=ओ सर्वज्ञ, यथा=जिस प्रकार, देव=ओ देव, न =नहीं, हृणीषे=क्रोध करो, न=नहीं, हंसि=मार सको, हवनश्रुत्=

स्तुतियों को सुननेवाले, नः=हमारी, रुद्र=ओ रुद्र देवता, इह=यहां, बोधि =होवो, बृहत्=जोर से, वदेम=बोलें, विदथे=यज्ञ मण्डप में, सुवीराः= पुत्र पौत्रादिकों से युक्त ।

हिं० अ०—ओ भूरे रंगवाले ओ शक्तिशाली, ओ सर्वज्ञ, ओ देव, (ऐसे तुम) हमारी स्तुतियों को सुननेवाले होवो, जिससे ओ रुद्र, तुम (मुझपर) क्रोध न कर सको, मार न सको। वीर (पुत्र पौत्रादिको) से युक्त हम यज्ञमण्डप में जोरों से (तुम्हारा) गान करें।

*Trans.*—O tawny-coloured, O powerful, O omniscient, O god, (thou as such) be listening our invocations here, O Rudra, so that thou may not be angry, nor slay us. May we accompanied with heroes speak aloud in the assembly.

*Notes.*—बभ्रो—Final ओ of the vocative is Pragrhya; hence, इति in the Pada-text. चेकितान—Voc. of inte. pres. part. चेकितत् from √*cit* to know. हवनश्रुत्—Tatpuruṣa comp. the final member of which [illegible] a verbal noun. बोधि—√*bhū* to be, root-aorist impv. 2nd. sing. वदेम—√*vad* to speak, pres. opt 1rst plu.

'उपेम्' इति पञ्चदशर्चं तृतीयं सूक्तं गार्त्समदं त्रैष्टुभम् अपांनपाद्देवताकम्। तथा चानुक्रान्तम्—'उपेमपोनप्त्रीयम्' इति। सूक्तविनियोगो लैङ्गिकः॥

उपं। ईम्। असृक्षि। वाजऽयुः। वचस्याम्। चनः। दधीत। नाद्यः। गिरः। मे॥ अपाम्। नपात्। आशुऽहेमा। कुवित्। सः। सुऽपेशंसः। करति। जोषिंषत्। हि॥१॥

सा॰ भा॰—वाजयुः वाजमन्नमात्मन इच्छन्नहम् ईम् एनां वचस्यां वचसः स्तोत्रस्येच्छाम् उप असृक्षि उपासृजामि उत्पादयामि। अपां नपातं स्तोतुं प्रवृत्तोऽस्मीत्यर्थः। सृजश्छान्दसो लुङ्। 'लिङ्सिचावात्मनेपदेषु' इति सिचः कित्त्वाद्गुणाभावः। सः च नाद्यः नदीनां शब्दकारिणीनां मेघस्थानामपां संबन्धी आशुहेमा आशु शीघ्रं गन्ता। 'हि गतौ' इत्यस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। एवंभूतः अपां नपात् अपां पौत्रस्थानीयः। अद्भ्यः ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्यः एषोऽग्निर्जायत इति तस्यौत्रत्वम्। एतत्संज्ञको देवः गिरः गृणातीति गीः स्तोता। तस्य मे मम कुवित् बहुनामैतत्। बहुलं चनः अन्नं दधीत दधातु विदधातु। प्रयच्छत्वित्यर्थः। अपि चास्मान् सुपेशसः शोभनरूपान् शोभनालंकारान् वा करति करोतु। करोतेर्लेट्यडागमः शप्। 'कः करत्करतिकृधिकृतेष्वनदितेः' (पा॰ सू॰ ८ ३.५०) इति विसर्जनीयस्य सत्वम्। हि यस्मात् अयं देवः जोषिषत् स्तोत्राणि सेवते तस्मादस्मानेवमनुगृह्णात्वित्यर्थः। 'जुषी प्रीति सेवनयोः'। लेट्यडागमः। विकरणः सिप्। इडागमश्च। 'हि च' इति निघातप्रतिषेधः॥

शब्दा॰—उप=समीप, ईम्=इसके, असृक्षि=मैंने भेजी है, वाजयुः=धन की इच्छावाला, वचस्याम्=वाणी को, चनः=प्रसन्नतापूर्वक, दधीत=स्वीकार करे, नाद्यः=नदी से उत्पन्न, गिरः=वाणी को, मे=मेरी, अपां नपात्=जल का पुत्र, आशुहेमा=शीघ्रगामी, कुवित्=शायद, सः=वह,

सुपेशस = सुन्दर रूप वाला, करति = करेगा, जोषिषत = आनन्द लेगा, हि = निश्चित रूप से ।

हि० अ० — धन की इच्छा से (मैंने अपनी) वाणी को (उसके पास) भेजी है। नदी का पुत्र मेरी वाणी को प्रसन्नतापूर्वक स्वीकार करे। शीघ्रगामी अपां नपात् शायद उनको अलङ्कृत करेगा क्योंकि (वही) उनका आनन्द लेगा।

*Trans* —Desirous of booty I have uttered forth this hymn, may the son of streams accept my songs with favour He, the swift moving son of waters, perchance will make (them) adorned, for verily he will enjoy (them)

*Notes*—असृक्षि—√*srj* to emit, mid 's' aorist, sing वाजयु—A desiderative suffix यु is added to वाज like किय् माय् अवस्यु etc, 'desiring food' ( Wilson ) 'eager for spoil' (Griffith) चन—Accordig to Sāyana चन is the object of दधीत and means 'aburdant food' Griffith and Macdonell take it as an adverb and translate 'With favour' (Griffith), 'gladly' (Macdonell) दधीत—√*dha* to put, mid opt 3rd sing आशुहेमा—हेमा from √*hi* to go with the suffix मनिन्, Bahuvrihi compd accented on the second member (vide note on पुरुरूप—II 33 9) कुवित्—A pronominal interrogative particle which is employed as an elliptical expression of doubt सुपेशस — Bahuvrihi compd accented on the second member (नञ्सुभ्याम्—Pan VI 2 172) करति—√*kr* to do, root aorist subju 3rd sing, unaccented because कुवित which could accent the verb is not in the same Pāda जोषिषत-√*jus* to enjoy, is-aorist, subju 3rd sing, accented because firstly, it begins a new sentence and secondly, it is followed by हि (यद्धितुपरं छन्दसि—Pān VIII 1 56)

इमम् । सु । अस्मै । हृदः । आ । सुऽतष्टम् । मन्त्रम् । वोचेम । कुवित् । अस्य । वेदत् ॥ अपाम् । नपात् । असुर्यस्य । मह्ना । विश्वानि । अर्यः । भुवना । जजान ॥२॥

सा० भा०—अस्मै अपानपात्सञ्ज्ञकाय देवाय हृद हृदयात् सुतष्टं सुष्ठु निर्मितम् इमं मन्त्र सुष्ठु, आ आभिमुख्येन वोचेम ब्रवाम । अस्य अस्माभिरुक्तमिम मन्त्र कुवित् वेदत् बहुल जानातु । वेत्तेर्लेट्यडागम । 'निपातैर्यद्यदिहन्त' इति निपातप्रतिषेध । किं स्तोत्रमिति चेदुच्यते । अर्यः स्वामी अपानपात्सञ्ज्ञको देवोऽग्नि असुर्यस्य । असुर शत्रून् क्षेप्ता । तस्य स्वभूतस्य बलस्य मह्ना महिम्ना महत्त्वेन विश्वानि सर्वाणि भुवना भुवनानि वृष्टिपूर्वकाणि वृष्टिप्रपादनेन भूतजातानि वा जजान जनयामास ॥

शब्दा०—इमम्=इस, सु=अच्छी प्रकार से, अस्मै=उसके लिये हृद=हृदय से, सुतष्टम्=अच्छी प्रकार से निर्मित, मन्त्रम्=मन्त्र को, आ वोचेम=सम्मुख गावें, कुवित्=शायद, अस्य=इसका अभिप्राय, वेदत्=जाने, अपां नपात्=जल का पुत्र, असुर्यस्य=प्राणदातृ शक्ति की, मह्ना=महिमा से, विश्वानि=सम्पूर्ण, अर्यः=स्वामी, भुवना=लोकों को, जजान=उत्पन्न किया है।

हि० अ०–हम अच्छी प्रकार से हृदय से उद्भूत इस मन्त्र को उसके लिये गावें। शायद वह उसको समझे। (सबके) स्वामी जल के पुत्र ने (अपनी) प्राणदातृ शक्ति की महिमा से सम्पूर्ण प्राणियों को उत्पन्न किया है।

*Trans*—Let us speak forth for him this well-fashioned hymn from our heart Perhaps he will know of it. The son of waters, the lord by greatness of (his) life-giving force, has created all beings

*Notes*—सुतष्टम्—Governing compd accented on the *first* member अस्मै—Unaccented because it replaces a substantive अस्य—unaccented like अस्मै. वोचेम—$\sqrt{vac}$ *to speak* pres opt 1rst plu वेदत्—$\sqrt{vid}$ to know, pres subju 3rd sing, accented because

preceded by कुवित्. असुर्यस्य–For accent see वीर्याणि (I.32.1). जजान – $\sqrt{jan}$ to generate, perf. 3rd. sing.

सम् । अ॒न्याः । यन्ति॑ । उप॑ । य॒न्ति॒ । अ॒न्याः । स॒मा॒नम् । ऊ॒र्वम् । न॒द्यः॑ । पृ॒ण॒न्ति॒ ॥ तम् । ऊँ इति॑ । शुचि॑म् । शुच॑यः । दीदि॒ऽवांस॑म् । अ॒पाम् । नपा॑तम् । परि॑ । त॒स्थुः॒ । आप॑ः ॥३॥

सा० भा०—अन्याः वर्ष्या आपः सं यन्ति भूम्या संगच्छन्ते । अन्याः च पूर्वं तत्रावस्थिताः उप यन्ति उपगच्छन्ति । ताः सर्वा आपः समानं सह नद्यः नदीभूताः ऊर्ध्वं समुद्रमध्ये वर्तमानं वडवानलं पृणन्ति प्रीणयन्ति । 'प्रीण प्रीणने' । तौदादिकः तमु तमेव अपां नपातं शुचिं निर्मलं दीदिवांसं दीप्यमानम् । दीदेतिश्छान्दसो दीप्तिकर्मा । लिटः क्वसुः । 'वस्वेकाजाद्घसाम्' । इति नियमादिडभावः । 'छन्दसि वेति वक्तव्यम्' इति वचनात् द्विर्वचनाभावः । एवंभूतं शुचयः शुद्धाः आपः परि तस्थुः परिवृत्य तिष्ठन्ति । एष हि वैद्युताग्निरूपेण मेघे वर्तमानः अस्मानजीजनदिति बुद्ध्या वडवानलरूपेण वर्तमानं तं पर्युपासते इत्यर्थः । यद्वा अन्या एकधनाख्या आपः संयन्ति चात्वालोत्करयोर्मध्ये वसतीवरीभिः संगच्छन्ते । अन्या वसतीवर्याख्या आपश्चोपयन्ति उपगच्छन्ति । ऐकमत्यं प्राप्ता भवन्ति । एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्यवृष्टिद्वारा नद्यो भूत्वा ऊर्ध्वं पृणन्ति इत्यादि समानम् । एवं हि 'आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्यामः (ऐ० ब्रा० २.२०) इत्यादिकं ब्राह्मणविनियोगश्चानुगृह्यते ॥

शब्दा० अन्याः=कुछ, संयन्ति=एक साथ बहता है, उपयन्ति=जाता है, अन्याः=दूसरे, कुछ, समानम्=समान रूप से, ऊर्वम्=समुद्र को, नद्यः=नदियाँ, पृणन्ति=भरती हैं, तम्=उसको, उ=पूर्ववर्ती शब्द पर जोर देनेवाला एक निपात, शुचिम्=पवित्र को, शुचयः=पवित्र, दीदिवांसम्=चमकनेवाले, अपां नपातम्=जल के पुत्र को परितस्थुः=चारो तरफ से घेरा हुआ है, आपः=जल ।

हि० अ०—कुछ (वर्षा का जल पृथ्वी पर ऊपर से) एक साथ बहता है; कुछ दूसरा (जो पृथ्वी पर पहले से एकत्रित है) एक ओर जाता है; (सभी जलों के मेल से बनी) नदियां समुद्र को समान रूप से भरती हैं । उस पवित्र, चमकनेवाले जल के पुत्र को पवित्र जल चारों तरफ से घेरे हुए हैं ।

*Trans* —Some (rain waters) flow together (on the earth), some others (already collected on the earth) flow to (the sea), (all combined together forming themselves as) streams fill the common reservoir (i e sea) Him, the pure and shining son of waters, the pure waters stand around

*Notes*—समन्या यन्त्युप यन्त्यन्या are antithetical clauses The first verb of the two antithetical clauses is accented when the antithesis is clearly indicated by the words अन्य अन्य, एक एक, च च or वा वा पृणन्ति — √*pr* or √*prn* to fill pres 3rd plu दीदिवांसम्—Perf part acc sing of दीदिवांस् from √*di* or *didi* to shine तस्थु — √*sthā* to stand, perf 3rd plu

तम् । अस्मेराः । युवतयः । युवानम् । मर्मृज्यमानाः । परि । यन्ति । आपः ॥ सः । शुक्रेभिः । शिक्वऽभिः । रेवत् । अस्मे इति । दीदाय । अनिध्मः । घृतऽनिर्निक् । अप्ऽसु ॥४॥

सा० भा०—तम् अपा नपातमग्निम अस्मेराः अस्मयमाना दर्परहिता युवतयो युवान युवराजमिव मर्मृज्यमानाः अत्यर्थमलकुर्वाणा आप । 'मृजू शौचालकारयो' । परि यन्ति परितो गच्छन्ति प्राप्नुवन्ति । घृतनिर्णिक दीप्तरूप सः अपा क्षरणशीलोदकनिर्णेजन । यद्वा निर्णिगिति रूपनाम । नपादग्नि अप्सु मेघान्तर्गतासु समुद्रगतासु वा मध्ये अनिध्म इन्धनरहित एव सन् अस्मे अस्माक रेवत धनयुक्तमन्न यथा भवति तथा शुक्रेभिः शुभ्रै निर्मलै शिक्वभि तेजोभि दीदाय दीप्यते ॥

शब्दा०—तम्=उस, अस्मेरा =न मुस्करानेवाली, युवतय =युवतिया, युवानम्=युवक को, मर्मृज्यमानाः= अलकृत करती हुई, परि यन्ति=चारो तरफ से बहती है, आपः=नदिया, सः=वह, शुक्रेभि =प्रकाशमान, शिक्वभिः =लपटो से, रेवत्=धनवान, अस्मे=हम लोगो के लिये, दीदाय =प्रकाशित होता है, अनिध्म=बिना इन्धन के ही, घृतनिर्णिक्=घृत से आवृत, अप्सु=जल में ।

हि० अ०—न मुस्करानेवालों (गम्भीर) युवतियां, नदियां उस युवक को अलङ्कृत करती हुई (उसके) चारों तरफ विचरण करती हैं, वह प्रकाशमान लपटों द्वारा, हमारे लिये धनवान (होता हुआ), बिना इन्धन के ही, घृत से आवृत, नदियों (युवतियों) में हमारे लिये प्रकाशित होता है।

*Trans*—The not-smiling (i e modest) young maidens, the waters, wiping (him) move around him, the youth He with brilliant flames bountifully shines for us in waters, (though) unfed with fuel, enveloped in clarified butter

*Notes*—अस्मेराः—'Modest' (Wilson) 'carefully' (Griffith) 'not smiling' (Macdonell) It is an adj of युवतय which are waters and nothing else, नञ् compd accented on the first member मर्मृज्यमानाः —$\sqrt{mrj}$ to wipe, inte part रेवत्—'Abundance' (Wilson) 'splendid beauty' (Griffith) 'bountifully' (Macdonell) दीदाय—$\sqrt{d\bar{i}}$ to shine, perf 3rd sing, accented because it begins the Pāda अनिध्मः—Bahuvrīhi compd accented on the second member घृतनिर्णिक्—'Cleansed with clarified butter' (Wilson), 'oil enveloped' (Griffith) 'having a garment of ghee' (Macdonell), Bahuvrīhi compd accented on the first member

अस्मै । तिस्रः । अव्यथ्याय । नारीः । देवाय । देवीः । दिधिषन्ति । अन्नम् ॥ कृताःऽइव । उप । हि । प्रऽसर्स्रे । अप्ऽसु । सः । पीयूषम् । धयति । पूर्वऽसूनाम् ॥५॥

सा० भा०—नारीः नेत्र्य तिस्रः देवीः देव्य इळासरस्वतीभारत्याख्या अव्यथ्याय अव्यथनाय अस्मै देवाय अपां नपाते अन्नं सोमाख्यं दिधिषन्ति धारयन्ति । 'धिष शब्दे', जौहोत्यादिक । व्यत्ययेनान्तादेश । धातूनामनेकार्थत्वादत्र धारणार्थ । अप्सु उदकेषु कृता इव उप प्रसर्स्रे प्रसरन्ति । सृ गतौ'।

लिटि 'इरयो रे' रेआदेश । छान्दसो हलादिशेषाभाव । यस्मादेव तस्मात पूर्वसूना पूर्वं प्रसूण ताकाशादुत्पन्नानामपां पीयूषं सारभूत सोमाख्यममृत सः अपां नपादस्मि धयति पिबति । हि पूरण ॥

शब्दा० तस्मै=उस, तिस्रः=तीन, अव्यथाय=कभी व्यथित न होने-वाले के लिये, नारीः=स्त्रियां, देवाय=देव के लिये, देवीः=देवियां, दिधिषन्ति=धारण करने की इच्छा करती हैं, अन्नम्=अन्न, कृता इव=नवजात की तरह, हि=निश्चित अर्थ का वाचक एक निपात, उप प्रसर्त्रे=ऊपर फैलता है, अप्सु=जलों में पीयूषम्=अमृत, धयति=पान करता है, पूर्वसूनाम्=प्रथम उत्पन्न करने वाली माताओं का ।

हि० अ०—उस अव्यथितमान देव (अपां नपात) के लिये तीन स्वर्गीय युवतियां भोजन देने की इच्छा करती हैं। चूँकि नवजात (बच्चे) की तरह जल में तैरता है (इसलिये) वह प्रथम उत्पन्न करनेवाली (माताओं) का दुग्धपान करता है।

*Trans* —To him, the uninjurable god, the three divine ladies desire to give food Since, like a newly born (child) floats on the waters, he sucks the nector (i e milk) of the mothers that first bring forth

*Notes*—तिस्रो देवीः—Three goddesses Ilā, Sarasvati and Bhārati are meant According to Griffith these three goddesses are the personifications of prayer and worship According to Macdonell three goddesses are the waters in the three worlds अव्यथाय—'Uninjurable' (Wilson) 'immovable' (Macdonell) Bahu vrihi compd accented on the second member दधिषन्ति-√*dha* to put desid 3rd plu कृता इव प्रसर्त्रे–Wilson following Sayana translates the line 'as if formed in the waters they spread abroad' Griffith renders 'within the waters hath he pressed as hollows' According to Macdonell, 'for he has stretched forth as it were to the breasts' प्रसर्त्रे—√*sr* to flow, with prefix प्र, pres

inte, 3rd sing. accented because preceded by हि
धयति—$\sqrt{dh\bar{a}}$ to suck, pres 3rd sing

अश्वस्य । अत्र । जनिम । अस्य । च । स्वः । द्रुहः । रिपः ।
सम्ऽपृचः पाहि । सूरीन् ॥ आमासु । पूर्षु । परः । अप्रऽमृष्यम् ।
न । अरातयः । वि । नशन् । न । अनृतानि ॥६॥

सा० भा०—अत्र अस्मिन्नपांनपात्संज्ञके देवे अश्वस्य जनिम जन्म भवति। अपांनपादधिष्ठितात् समुद्रात् ऊर्ध्वं अश्वस्य जातत्वात्। किं बहुना। अस्य च स्व सुष्ठु अरणीयस्य सर्वस्य जगतो जन्म अस्मिन्नेव भवति। अयं हि मेघमध्ये वर्तमानो वृष्टिद्वारेण सर्वं जगज्जनयति। तादृशोऽपांनपात्त्वं द्रुह द्रोग्धु अपहर्तु रिप हिंसकस्य च संपृच संपर्कात् सूरीन् स्तोतॄनस्मान् पाहि रक्ष। आमासु अपरिपक्वासु पूर्षु पूरयितव्यास्वप्सु पर परस्तात् वर्तमानम् अप्रमृष्यम् अप्रधृष्यमाणं देवम् अरातय अदातार पुरुषा न वि नशन् न प्राप्नुवन्ति। नशतिर्व्याप्तिकर्मा। लेट्यडागम। अनृतानि मायाविनो रक्षांसि च न प्राप्नुवन्ति॥

शब्दा० अश्वस्य=अश्व का, अत्र=यहाँ, जनिम=जन्म, अस्य=उसका, च=और, स्वः=द्युलोक में, द्रुहः—द्वेष करनेवाले, रिपः=सतानेवाले, संपृचः=संपर्क से, पाहि=रक्षा करो, सूरीन्=उदार दाताओं की, आमासु=कच्चे, पूर्षु=दुर्ग में अर्थात् बादलों में, परः=बहुत दूर, अप्रमृष्यम्—कभी नष्ट न होनेवाले, कभी न हारनेवाले, न=नहीं, अरातयः=शत्रु, वि नशन्—प्राप्त करें, अनृतानि=मायावी, झूठ बोलनेवाले।

हि० अ०—अश्व (अपां नपात्) का जन्म स्थान यहीं (पार्थिव जल) है; द्युलोक में भी उसका (जन्मस्थान है)। उदार दाताओं की, द्वेष करनेवालों तथा सतानेवालों के संपर्क से, रक्षा करो। बहुत दूर कच्चे दुर्ग (बादलों) में रहनेवाले कभी नष्ट न होनेवाले (देव) को शत्रु तथा मायावी न प्राप्त करें।

*Trans*—The birth of the horse (is) here (in the terrestrial water), his (is) also in heaven Protect the bounteous givers from the company of haters

and oppressors Let not the miser and deceitful ones attain him, the inconceivable (god) (dwelling) far away, in the raw (i e natural) fortress

*Notes* —संपृच —Abl infinitive from $\sqrt{}$*prc* to mix पाहि —$\sqrt{}$*pā* to protect impv 2nd sing पूर्षु —Griffith and Macdonell take it as the locative plu of पुर् which means 'fort' पर —An adverb and means 'far away' If the accent is on the first syllable it becomes nom sing adj meaning 'other' अप्रमृष्यम्— 'inconceivable' (Wilson) 'indestructible' (Griffith) '*not to be forgotten*' (Macdonell) Bahuvrihi accented on the second member नशन्—$\sqrt{}$*nas* to attain pres injun 3rd plu

स्वे । आ । दमे । सुऽदुघा । यस्य । धेनुः । स्वधाम् । पीपाय । सुऽभु । अन्नम् । अत्ति ॥ सः । अपाम् । नपात् । ऊर्जयन् । अप्ऽसु । अन्तः । वसुऽदेयाय । विधते । वि । भाति ॥७॥

सा० भा०—य अपा नपात् स्वे दमे स्वकीये गृहेऽन्तरिक्षलक्षण आ सीदति । यस्य च धेनु माध्यमिका वाक सुदुघा सुखेन दोग्धव्या भवति । स देव स्वधा वृष्ट्युदक पीपाय वर्धयति । 'प्यायी वृद्धौ' । 'लिडयडोश्च' इति पीभाव । सुभु सुष्ठु भूत कृष्टे सकाशादुत्पन्न हविलक्षणम अन्न च अत्ति भक्षयति । स अपानपात्संज्ञको देव ऊर्जयन् बल कुर्वन अप्स्वन्त मेघस्था- स्वप्सु मध्ये विधते परिचरते यजमानाय वसुदेयाय धनदानार्थं वि भाति विशेषेण दीप्यते ॥

श० दा० स्वे=अपने, दमे=घर में, सुदुघा=अच्छी प्रकार से दूध देने- वाली, यस्य=जिसकी, धेनु—गाय, स्वधाम्=अमृत को, पीपाय=उडलता है सुभु=सुन्दर बन, अन्नम्=भोजन, अत्ति=खाता है, स –वह अपा नपात्=जल के पुत्र, ऊर्जयन्=शक्ति बढ़ाता हुआ, अप्सु=जलो में, अन्त बीच में, वसुदेयाय=धन देने के लिये, विधते=पूजा करनेवाले को, विभाति=प्रकाशित होता है ।

हि॰ अ॰—(वह) जिसके अपने घर में अच्छी प्रकार से दूध देने वाली गाय हो, अमृत को उड़ेलता है, सुन्दर बने (पदार्थ) का भोजन करता है। वह जल का पुत्र, जल के बीच अपनी शक्ति बढ़ाता हुआ पूजा करनेवाले को, धन देने की इच्छा से, विशेष रूप से, प्रकाशित होता है।

*Trans* —(He) in whose, own house is a cow, yielding good milk, swells the nector and eats well prepared food He (as such), the son of waters gathering vigour in the waters, shines forth with a view to conferring wealth upon the worshipper

*Notes* —पीपाय —$\sqrt{pi}$ to swell, perf 3rd sing, with lengthened red syllable अप्स्व + न्तर्—Vide Appendix —B under अग्निज and कम्प स्व॰ विधते–Dative sing of pres part विधत् from $\sqrt{vidh}$ to worship —भाति $\sqrt{}$ *bhā* to shine, pres 3rd sing

यः । अप्ऽसु । आ । शुचिना । दैव्येन । ऋतऽवा । अजस्रः । उर्विया । विऽभाति ॥ वयाः । इत् । अन्याः । भुवनानि । अस्य । प्र । जायन्ते । वीरुधः । च । प्रऽजाभिः ॥८॥

सा॰ भा॰—यः अपां नपात् ऋतावा । ऋतमित्युदकनाम । तद्वान् सत्यवान् वा अजस्र नित्य एकरूपेण सदा वर्तमान उर्विया उरुविस्तीर्ण अप्सु मेघस्थासु मध्ये शुचिना शोचकेन दैव्येन देवसम्बन्धिना तेजसा आ समन्तात विभाति विशेषेण प्रकाशते । अस्य अपांनपात अन्या अन्यानि भुवनानि सर्वाणि भूतजातानि वयाः इत् शाखा एव । वीरुध ओषधय प्रजाभि स्वकीयाभि पुष्पफलादिभि सह अस्मादेव प्र जायन्ते । च पूरण ॥

शब्दा॰ —य — जो, अप्सु=जलों में, शुचिना=प्रकाश से, दैव्येन= देवत्व से, ऋतावा=सत्यवान, अजस्र =कभी न थकनेवाला, अजर, उर्विया=विस्तृत रूप में, आ विभाति=चारों तरफ से प्रकाशित होता है, वया =शाखायें, इत्=पूर्ववर्ती शब्द पर जोर देनेवाला एक निपात, अन्या= दूसरे, भुवनानि=लोक, अस्य=उसी से, प्र जायन्ते=उत्पन्न होती हैं, वीरुध =वनस्पतियां, च=और, प्रजाभि =पुष्प फलादि के साथ ।

हि० अ० —सत्यवान् अजर (अपां नपात्) जो जल में तेज तथा देवत्व से विस्तृत रूप में चारों तरफ से प्रकाशित होता है, सम्पूर्ण प्राणी उस (जल के पुत्र) की शाखायें हैं; (सम्पूर्ण) वनस्पतियां फल फूल सहित उसी से उत्पन्न होती हैं।

*Trans.*—The truthful, the unaging one, who in the waters widely shines forth with lustre and divinity, all *other beings (are) his offshoots* ; (all) the vegetables with fruits and flowers are born (of him).

*Notes.*—ऋतावा—The short syllable [illegible] preceding the suffix वा is lengthened in the Saṁhitā-text, while it is retained in the Pada-text. भाति—√*bhā* to shine, pres. 3rd. *sing.*; *accented because preceded by* यः. जायन्ते—√*jā* to be born, mid. pres. 3rd. sing.

अपाम् । नपात् । आ । हि । अस्थात् । उपऽस्थम् । जिह्मानाम् । ऊर्ध्वः । विऽद्युतम् । वसानः ॥ तस्य । ज्येष्ठम् । महिमानम् । वहन्तीः । हिरण्यऽवर्णाः । परि । यन्ति । यह्वीः ॥९॥

सा० भा० —अपांनपात्संज्ञकोऽग्निः उपस्थम् अपामुपस्थानमन्तरिक्षम् आ अस्थात् आस्थितवान् आरूढवान् खलु । किं कुर्वन् । जिह्मानां कुटिलगतीनामपां मध्ये ऊर्ध्वः स्वयमूर्ध्वं ज्वलन् विद्युतं विद्योतमानम् मेघं वसानः आच्छादयन् । अन्तरिक्षमास्थाय वर्षणं कृतवान् । तस्य वर्षितुरपांनपातः ज्येष्ठं प्रशस्यतमं महिमानं माहात्म्यं वहन्तीः वहन्त्यः सर्वत्र प्रापयन्त्यः यह्वीः यह्व्यः महत्यः हिरण्यवर्णाः । नदीनामेतत् । हिरण्यवन्निर्मलरूपा नद्यः परि यन्ति परितो गच्छन्ति । अपांनप्त्रा महती वृष्टिरस्माकं प्रवहनायोत्पादिता इति कृतज्ञतया तदीयं माहात्म्यं सर्वत्र प्रकटयन्त्य इव नद्यः प्रवहन्तीत्यर्थः ॥

शब्दा०—अपां नपात्=जल का पुत्र, हि=निश्चित रूप से, आ अस्थात्=स्थित है, उपस्थम्=गोद में, जिह्मानाम्=नीचे जानेवाले, ऊर्ध्वः =ऊपर, विद्युतम्=बिजली से, वसानः=आवेष्ठित, तस्य=उसकी, ज्येष्ठम् =श्रेष्ठ, महिमानम्=महिमा को, वहन्तीः=ढोती हुई, हिरण्यवर्णाः= स्वर्ण रंग वाली, परि यन्ति=चारों तरफ से बहती हैं, यह्वीः=नदियां।

हि० अ०—जल का पुत्र निश्चित रूप से अधोगामी जल की गोद में, (स्वय) उपर विद्युत से आवेष्ठित स्थित है। उसकी श्रेष्ठ महिमा को ढोती हुई स्वर्ण वर्णवाली नदियां उसके चारो तरफ विचरण करती है।

*Trans* —The son of waters has stationed in the lap of waters directed downwards, (himself) above, wearing lightning (as garment) Bearing his sublimest glory, the rivers of golden colour flow around him

*Notes* —अस्थात्—√*stha* to stand, root aorist, 3rd sing जिह्मानाम्—'Tortuously moving' (Wilson) 'curled' (Griffith) 'prone' (Macdonell) वसान —√*vas* to wear pres part वहन्ती —√*vah* to carry, pres part हिरण्यवर्णा —Bahuvrihi compd accented on the first member यन्ति—√*i* to go, pres 3rd sing यही —'Great' (Sāyana), 'swift' (Roth) 'young' (Geldner)

हिरण्यऽरूपः । सः । हिरण्यऽसंदृक् । अपाम् । नपात् । सः । इत् । ऊँ इति । हिरण्यऽवर्णः ॥ हिरण्ययात् । परि । योनेः । निऽसद्य । हिरण्यऽदाः । ददति । अन्नम् । अस्मै ॥१०॥

सा० भा०—स अपा नपात् हिरण्यरूप । रूप्यते इति रूप शरीरम् । सुवर्णमयशरीरो हितरमणीयशरीरो वा । तथा हिरण्यसंदृक् । सम्यक् पश्यन्ति यानि इन्द्रियाणि । सुवर्णमयेन्द्रियो हितरमणीयेन्द्रियो वा । सेदु स एवात्मीयम् हिरण्यवर्णः हिरण्यसदृशवर्णसंयुक्त । एवभूत सन् हिरण्ययात् सुवर्णमयात् योनेः स्थानात् परि उपरि निषद्य उपविश्य वर्तत इति शेष । अस्मै ईदृग्विधाय अपां नपाते हिरण्यदा हिरण्यस्य सुवर्णस्य दातारो यजमाना अन्नं हविर्लक्षण ददति प्रयच्छन्ति ।

हि० व्या०—हिरण्यरूप —स्वर्ण के समान रूपवाला सः—वह हिरण्यसंदृक् —स्वर्ण की तरह आहृतिवाला, अपा नपात् —जल का पुत्र सः—वह, इदु —इस ओर उ दोनों पूर्णतया निश्चय पर भार देने वाले निपात हैं हिरण्यवर्णः —स्वर्ण रगवाला हिरण्ययात् —स्वर्णमय परि—ऊपर, योनेः स्थान पर

से, निषद्य=बैठकर, हिरण्यदाः=स्वर्ण दान करनेवाले यजमान, ददति=प्रदान करते हैं, अन्नम्=भोजन, अस्मै=उसके लिये।

हि० अ०—स्वर्ण के समान रूपवाला, स्वर्ण की तरह आकृतिवाला यह जल का पुत्र, स्वर्ण के समान रंगवाला (है)। स्वर्णमय स्थान पर बैठकर यहाँ से चमकता है। स्वर्णदान करनेवाले यजमान उसको हवि प्रदान करते हैं।

*Trans.*—He (is) of golden form, of golden appearance, verily he, the son of waters, (is) of golden colour. Seated upon the golden seat (shines) therefrom; givers of gold give him food

*Notes*—हिरण्यरूपः, हिरण्यसंदृक्, हिरण्यवर्णः—All are the Bahuvrihi compds. accented on the first member. सेदु—For euphonic combination see I 32 15 हिरण्यदाः—Tatpurusa compd accented on the second member ददति—$\sqrt{d\bar{a}}$ to give, pres 3rd. plu

तत् । अस्य । अनीकम् । उत । चारु । नाम । अपीच्यम् । वर्धते । नप्तुः । अपाम् ॥ यम् । इन्धते । युवतयः । सम् । इत्था । हिरण्यवर्णम् । घृतम् । अन्नम् । अस्य ॥११॥

सा० भा०—अस्य अपां नप्तु देवस्य अनीकं रश्मिसमूहरूप शरीर चारु शोभनम्। उत अपि च अस्य नाम सज्ञा च चारु शोभनम्। न पातयति न विनाशयतीति नपादिति तद्व्युत्पत्ते। तदुभयम् अपीच्यम्। अन्तर्हितनामैतत्। मेघान्तर्हित सत् वर्धते। युवतय सगमनस्वभावा आप हिरण्यवर्णं हिरण्यसमानतेजस यम् अपानपातम् इत्था अमुत्रान्तरिक्षे सम् इन्धते सम्यक् दीपयन्ति। अस्य च देवस्य घृतं क्षरणशीलमुदकम् अन्नं भक्ष्यम्। अविन्धनो ह्यसौ वैद्युतोऽग्नि ॥

शब्दा०—तत्=वह, अस्य=उसकी, अनीकम्=किरणो की समूहरूपात्मक आकृति, उत=और, चारु=सुन्दर, नाम=नाम, अपीच्यम्=रहस्य में, वर्धते=बढ़ता है, नप्तुः अपाम्=जल के पुत्र का, यम्=जिसको, इन्धते

=प्रज्वलित करती हैं, युवतयः=युवतियाँ, सम्=संयुक्त रूप से, इत्था =इस प्रकार, हिरण्यवर्णम्=स्वर्ण रंगवाले को, घृतम्=घी, अन्नम्= भोजन, अस्य=इसका।

हि० अ०—उस जल के पुत्र की वह आकृति और (वह) सुन्दर नाम रहस्य में बढ़ता है। जिस स्वर्ण वर्णवाले को युवतियाँ (जल) इस प्रकार संयुक्त रूप से प्रज्वलित करती हैं, घी उसका भोजन है।

*Trans.*—That face of his and dear name of the son of waters flourish in secret. Whom, the golden coloured, the young maidens thus kindle collectively, clarified butter (is) his food.

*Notes.*—वर्धते—√*vrdh* to grow, mid. pres. 3rd. sing. इन्धते—√*idh* to kindle, mid. pres. 3rd. plu. accented because preceded by यम्.

अस्मै। बहूनाम्। अवमार्य। सख्ये। यज्ञैः। विधेम। नमसा। हविःऽभिः॥ सम्। सानु। मार्ज्मि। दिधिषामि। बिल्मैः। दधामि। अन्नैः। परि। वन्दे। ऋक्ऽभिः॥१२॥

सा० भा०—अस्मै पुरोवर्तिने बहूनाम् देवानाम् अवमाय आद्याय सख्ये अस्माभिः समानख्यानाय अपां नपाते यज्ञैः यागसाधनैः हविर्भिः चरुपुरोडाशादिभिः नमसा नमस्कारेण च विधेम परिचरेम। अस्यापांनपातः सानु समुच्छ्रितप्रदेशं सं मार्ज्मि सम्यक् शोधयामि अलंकरोमि वा। मृजू शौचालंकारयोः।' 'चादिलोपे विभाषा' इत्यस्य निघातप्रतिषेधः॥ दिधिषामि धारयामि च बिल्मैः भासनैः काष्ठैरेनम्। 'धिष शब्दे'। अयं धारणार्थोऽपि। जुहोत्यादित्वात् शपः श्लुः। सिपो व्यत्ययेनाडागमः। 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम्। दधामि धारयामि चैनं गार्हपत्यादिरूपेण स्थितम् अन्नैः हविर्लक्षणैः। तथा ऋग्भिः मन्त्रैः परि वन्दे परितः स्तौमि॥

शब्दा०—अस्मै=उस, बहूनाम्=सबसे अधिक, अवमाय=समीपवर्ती, सख्ये=मित्र के लिये, यज्ञैः=यज्ञों द्वारा, विधेम=पूजा करें, नमसा= नमस्कार द्वारा, हविर्भिः=हविष्यों द्वारा, सानु=श्रेष्ठ स्थान, संमार्ज्मि

=अच्छी प्रकार से साफ करता हूं, दिधिषामि=धारण करने की इच्छा करता हूं, विल्मै =लकडी के टुकडों से, दधामि=धारण करता हूं, अन्नै =भोजन से, परिवन्दे=चारो तरफ से बन्दना करता हूं ।

हि० अ० -उस सबसे अधिक समीपवर्ती, मित्र (अग्नि) को हम यज्ञो, नमस्कारों तथा हविद्रव्यो से पूजा करें । उसके श्रेष्ठ स्थान (वेदी) को (मैं) अच्छी प्रकार से साफ करता हूं, (उस अग्नि को) लकडी के टुकडों से धारण करने की इच्छा करता हूं, (उस अग्नि को) भोजन (घृतादि हवि पदार्थों) द्वारा प्रज्वलित रखता हूं, ऋचाओं द्वारा (उस अग्नि को) चारों तरफ से वन्दना करता हूं ।

*Trans* —To him, the closest of many, the friend, may we worship with sacrifices, salutation, and oblations (I) wipe (his) high place (i e altar) carefully, (I) desire to support (him) with pieces of wood, (I) nourish (him) with food, (I) greet (him) with hymns

*Notes*—अवमाय—'First' (Wilson) 'nearest' (Griffith and Macdonell) According to Macdonell अव means low and म is superlative termination विधेम—$\sqrt{}$*vidh* to worship, pres opt 1rst plu समार्ज्मि—$\sqrt{}$*mrj* to wipe, pres 1rst sing, accented because the conjunctive च joining मार्ज्मि and दिधिषामि is dropped (चादि लोपे विभाषा—Pan—VIII 1 63) दिधिषामि—$\sqrt{}$*dha* to put, pres desid 1rst sing, accented because beginning of a new sentence दधामि—$\sqrt{}$*dha* to put, pres 1rst sing, accented because beginning of a new sentence वन्दे—$\sqrt{}$*vand* to greet, mid pres 1rst sing

मः । ईम् । वृषा । अजनयत् । तासु । गर्भम् । सः । ईम् । शिशुः । धयति । तम् । रिहन्ति ॥ सः । अपाम् । नपात् । अनभिम्लात-वर्णः । अन्यस्यऽइव । इह । तन्वा । विवेष ॥१३॥

सा०भा०—स ईं सोऽयमपांनपात्संज्ञको देवः वृषा सेक्ता भूत्वा तासु मेघस्थास्वप्सु गर्भम् अजनयत् स्वात्मानमेव गर्भरूपेण वर्षणार्थं कृतवानित्यर्थः। गर्भो भूत्वा च स ईं सोऽयं माध्यमिकः वैद्युतोऽग्निस्तासां शिशुः पुत्रः सन् धयति मेघस्थास्ताः पिबति अविन्धनो ह्यसौ। तं पुत्रस्थानीयमद्भिः आपश्च रिहन्ति लिहन्ति। 'लिह आस्वादने'। कपिलकादित्वाल्लत्वविकल्पः। सः अयम् अपां नपात् वृष्ट्या सह भूमौ निपतितः अनभिम्लातवर्णः अभितो म्लातो म्लानः क्षीणो वर्णो यस्य तद्विपरीतोऽयम् दीप्यमानः सन् इह अस्मिन् लोके अन्यस्येव। इवशब्दोऽवधारणे। अन्यस्य पार्थिवस्यैवाग्नेः तन्वा शरीरेण काष्ठेन्धनत्वलक्षणेन विवेष व्याप्तो बभूव। 'विष्लृ व्याप्तौ'॥

शब्दा०—सः=वह, ईम्=यही, वृषा=शक्तिशाली, अजनयत्=उत्पन्न किया है, तासु=उन जलों में, गर्भम्=गर्भ रूप में, सः=वह, ईम्=यही, शिशुः=कुमार, धयति=दुग्धपान करता है, तम्=उसको, रिहन्ति=प्यार से चाटती हैं, चुम्बन करती हैं, सः=वह, अपां नपात्=जल का पुत्र, अनभिम्लातवर्णः=कभी मलिन न होनेवाले रंगवाला अर्थात् सर्वदा प्रकाशित होनेवाला, अन्यस्य इव=दूसरे की तरह अर्थात् पार्थिव यज्ञाग्नि के रूप में, इह=यहाँ, तन्वा=शरीर से, विवेष=कार्य करता है।

हि० अ०—उसी शक्तिशाली ने (अपने को) उनमें (जल में) गर्भ (रूप में) उत्पन्न किया है; वही कुमार (उनका) दुग्धपान करता है; (वे भी) उसको (प्यार से) चुम्बन करती हैं। वह जल का पुत्र, चमकीले वर्णवाला, यहाँ (पृथ्वी पर) दूसरे की तरह (पार्थिव यज्ञाग्नि के रूप में) शरीर से कार्य करता है।

*Trans.*—Verily he, the vigorous, has generated (himself as) embryo in them (i.e. waters); verily he, the child, sucks (them) (and they, too,) lick him. He (as such), the son of waters, of unfaded colour, acts here with body as it were of another.

*Notes*—अजनयत्—$\sqrt{jan}$ to generate, caus. impf. 3rd. sing. धयति—$\sqrt{dh\bar{a}}$ to suck, pres. 3rd. sing. रिहन्ति—$\sqrt{rih}$ to lick, pres. 3rd. plu. अनभिम्लातवर्णः—Bahuvrīhi compd. accented on the first member. विवेष—$\sqrt{viṣ}$ to be active, perf. 3rd. sing.

अ॒स्मिन् । प॒दे । प॒र॒मे । त॒स्थि॒ऽवांस॑म् । अ॒ध्व॒स्मऽभिः॑ । वि॒श्वहा॑ । दी॒दि॒ऽवांस॑म् ॥ आपः॑ । नप्त्रे॑ । घृ॒तम् । अन्न॑म् । वह॑न्तीः । स्व॒यम् । अत्कैः॑ । परि॑ । दी॒य॒न्ति॒ । य॒ह्वीः ॥१४॥

सा० भा०—परमे उत्कृष्टे अस्मिन् पदे अन्तरिक्षलक्षणे स्थाने तस्थिवांसं स्थितवन्तम् अध्वस्मभिः ध्वंसनरहितैस्तेजोभिः विश्वहा सर्वाण्यहानि दीदिवांसं दीप्यमानमपां नपातं यह्वीः यह्वयो महत्यः आपः स्वयम् आत्मनैव अत्कैः सतनशीलैः सततगन्तृभिः स्वकीयैः रूपैः परि दीयन्ति परिगच्छन्ति । दीयतिर्गतिकर्मा । 'दीङ् क्षये' । व्यत्ययेन परस्मैपदम् । किं कुर्वत्यः । नप्त्रे अपां नपाते घृतं क्षरणशीलोदकात्मकम् अन्नं वहन्तीः वहन्त्यः ॥

शब्दा०—अस्मिन्=इस, पदे=स्थान में, परमे=सर्वोच्च, तस्थिवांसम्=बैठे हुये को, अध्वस्मभिः=विनाश रहित (किरणों) से, विश्वहा=सदा, दीदिवांसम्=चमकनेवाले को, आपः नप्त्रे=जल के पुत्र के लिए, घृतम्=घी, अन्नम्=भोजन, वहन्तीः=लाती हुई, स्वयम्=अपनी, अत्कैः=निरन्तर गति से, परिदीयन्ति=चारों तरफ से बहती हैं, यह्वीः=बड़ी नदियां ।

हि० अ० – इस सर्वोच्च स्थान में बैठे हुये, विनाश रहित (किरणों) से सदा चमकनेवाले के चारों तरफ, महान् नदियां अपने पुत्र के लिए घी का भोजन लाती हुई, अपनी निरन्तर गति से विचरण करती हैं ।

*Trans.*—(Him) seated in this highest place, shining with imperishable (light) for ever, the great waters carrying clarified butter (as) food for the son of waters, themselves fly around with their movements.

*Notes*—तस्थिवांसम्—Perf. part. acc. sing. from √*sthā* to stand. दीदिवांसम्—See notes (II. 35.3) अत्कैः—'Movement' (Wilson), 'wandering' (Griffith), 'garment' (Macdonell). दीयन्ति—√*dī* to fly, pres. 3rd. plu. वहन्तीः—√*vah* to carry, pres. part. fem.

श्रयां॑सम् । अ॒ग्ने॒ । सु॒ऽक्षि॒तिम् । जना॑य । श्रयां॑सम् । ऊँ॒ इति॑ । म॒घव॑त्ऽभ्यः । सु॒ऽवृ॒क्तिम् ॥ विश्व॑म् । तत् । भ॒द्रम् । यत् । अव॑न्ति । दे॒वाः । बृ॒हत् । व॒दे॒म॒ । वि॒दथे॑ । सु॒ऽवीराः॑ ॥१५॥

सा० भा० —हे अग्ने सुक्षिति शोभननिवास त्वाम् अयांसम् उपागच्छम्। किमर्थम्। जनाय अस्मदीयपुत्रादिजनार्थम्। तथा मघवद्भ्यः हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यश्च सुवृक्ति शोभनावर्जक त्वद्विषय स्तोत्रम् अयांसम् उपागच्छम्। 'यम उपरमे'। अत कारणात् यत् भद्रं सर्वे देवाः अवन्ति रक्षन्ति विश्वं सर्वं तत् भद्रम् अस्माकं भवतु। सुवीराः सुपुत्रा वय विदथे यज्ञे गृहे वा बृहत् प्रौढ स्तोत्र वदेम उच्चारयाम ॥

शब्दा० —अयांसम्=आया हूं, अग्ने=ओ अग्नि, सुक्षितिम्=सुन्दर निवासवाले, जनाय=संतति के लिये, अयांसम्=आया हूं, उ=पूर्ववर्ती शब्द पर जोर देनेवाला एक निपात, मघवद्भ्यः=प्रचुर धन देनेवाले यजमानो के लिए, सुवृक्तिम्=सुनिर्मित प्रार्थनावाले, विश्वम्=सम्पूर्ण, तत्=वे चीजें, यत्=जिनकी, अवन्ति=रक्षा करते हैं, देवाः=देवता, बृहत्=जोर से, वदेम=बोलें, विदथे=यज्ञ मण्डप में, सुवीराः=वीरों से युक्त।

हि० अ० —ओ अग्नि, सुन्दर निवासवाले (तुम्हारे पास) मैं संतति के लिए आया हूं, सुनिर्मित प्रार्थना वाले (तुम्हारे पास) मैं प्रचुर धन देनेवाले यजमानों के लिए आया हूं। वे सभी कल्याण कारी चीजें जिनकी रक्षा देवता करते हैं (हमारी होवें), वीरो से युक्त (हम) यज्ञ में जोरो से बात करें।

*Trans* —I have come, O Agni, (to thee) of good dwelling for offspring, I have come (to thee) of well-fashioned hymn for the bounteous patrons May all auspicious that gods protect, be of ours, may we accompanied with heroes speak aloud in the assembly (i e at the place of sacrifice)

*Notes*—अयासम् —$\sqrt{yam}$ to stretch out, 's'-aorist, 1rst sing सुक्षितिम् —Bahuvrihi compd accented on the second member Griffith and Macdonell take it to mean 'good dwelling' सुवृक्तिम् —Bahuvrihi compd accented on the second member 'With propitiatory hymns' (Wilson), 'goodly preparation' (Griffith), 'a song of praise' (Macdonell) अवन्ति—$\sqrt{av}$ to protect, 3rd plu, accented because preceded by यत्

---

'उदु ष्यः' इत्येकादशर्चं षष्ठं सूक्तं गार्त्समदं त्रैष्टुभं सवितृदेवताकम्। अत्रानुक्रमणिका—'उदु ष्य एकादश सावित्रम्' इति। व्यूढे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्रे एतत्सूक्तं सावित्रनिविद्धानीयम्। 'व्यूळ्हश्चेत्' इति खण्डे सूत्रितं—'षष्ठस्योदु ष्य देव इति गार्त्समदम्' (आश्व० श्रौ० ८·८) इति।

उत्। ऊँ इति। स्यः। देवः। सविता। सवाय। शश्वत्ऽतमम्। तत्ऽअपाः। वह्निः। अस्थात्॥ नूनम्। देवेभ्यः। वि। हि। धाति। रत्नम्। अथ। आ। अभजत्। वीतिऽहोत्रम्। स्वस्तौ॥१॥

सा० भा०—स्यः सः देवः द्योतमानः सविता सवाय लोकानां प्रसवाय अनुज्ञायै शश्वत्तमं प्रतिदिनम् उत् अस्थात् उत्तिष्ठति। कीदृशः सविता। तदपाः तत्प्रसवकर्मा। अपः अप्नः (नि० २. १. १) इति कर्मनामसु पाठात्। वह्निः वोढा जगताम्। किंच नूनं संप्रति देवेभ्यः स्तोतृभ्यः रत्नं धनं वि हि धाति प्रयच्छति। हि इति पूरणे। अथ अपि च वीतिहोत्रं कान्तयज्ञं यजमानं स्वस्तौ अविनाशे क्षेमे अभजत् भागिनं करोतु। यद्यपि स्वस्तिशब्दः विभक्त्यन्तनिर्दिष्टः अव्ययपदः तथापि अपर्यवसानात्तदर्थपरो भवति॥

शब्दा०—स्यः=वह, देवः=देव, सविता=सवितृ देव, सवाय=उत्पन्न करने के लिये, शश्वत्तमम्=सर्वदा, तदपाः=जिनका यही काम है, वह्निः=लानेवाले, उदस्थात्=उदित होते हैं, नूनम्=इस समय, देवेभ्यः=पवित्र लोगों को, हि=निश्चित रूप से विधाति=प्रदान कर रहे हैं, रत्नम्=कीमती धन, अथ=इस प्रकार, आ अभजत्=प्रदान करें, वीतिहोत्रम्=हवि प्रदान करनेवाले को, स्वस्तौ=कल्याण।

हि० अ०—(जगत् को प्रकाश में) लानेवाले सवितृ देव, जिनका यही काम है, (प्राणियों को) उत्पन्न करने के लिये सर्वदा उदित होते हैं। इस समय वे पवित्र लोगों को कीमती धन प्रदान कर रहे हैं, इसलिये हवि प्रदान करनेवाले को कल्याण प्रदान करें।

*Trans* :—That god Savitar, the carrier (of the world), having that his office, constantly rises to sti-

mulate (mankind). Now he grants the precious treasures to the pious worshippers. Therefore, may he grant bliss to the sacrificer.

*Notes* :—स्यः—nom. sing (masc.), 3rd. per. pronoun. It works as a demonstrative adj. सवाय—Dative sing. of सव from √*su* to generate, stimulate, सदपाः—Bahuvrihi compd. accented on the first member. 'Who neglects not his duty' (Griffith), 'for that exclusive mission of his' (Peterson). वह्निः—From √*vah* to carry; 'carrier' (Sāyaṇa), 'priest' (Griffith), 'driving in a chariot' (Peterson). उदस्थात्—√*sthā* with उत् to rise, root-aorist, 3rd sing. धाति—√*dhā* with वि to give, to grant, pres. 3rd. sing. ; not unaccented because preceded by हि अथ—A later form of अध It generally comes in the beginning of a Pāda or a sentence, and expresses the sense of 'and', 'then', 'so'. आ अभजत्—√*bhaj* with आ to grant, injun 3rd. sing. वीतिहोत्रम्—वीति is derived from √*vī* to enjoy, with noun making termination ति; Bahuvrihi compd. accented on the first member.

विश्वस्य । हि । श्रुष्टये । देवः । ऊर्ध्वः । प्र । बाहवा । पृथुऽपाणिः । सिसर्ति ॥ आपः । चित् । अस्य । व्रते । आ । निऽमृग्राः । अयम् । । चित् । वातः । रमते । परिऽज्मन् ॥२॥

सा० भा०—देवः द्योतमानः सविता पृथुपाणिः महत्कारः विश्वस्य श्रुष्टये जगतः सुखाय ऊर्ध्वः उद्गतः सन् बाहवा बाहू प्र सिसर्ति प्रसारयति । आपश्चित् आपोऽपि अस्य व्रते प्रसवाख्ये कर्मणि सति । 'व्रतं कर्वरम्' (नि० २. १. ७) इति तन्नामसु पाठात् । आ स्यन्दन्त इति शेषः । ताश्च निमृग्राः नितरां शोधयित्र्यो गङ्गादिरूपेण जगत्पावयन्तीत्यर्थः । अयं चिद्वातः अयमपि वायुः परिज्मन् परितो गते व्याप्तेऽन्तरिक्षे रमते ॥

शब्दा०—विश्वस्य=सबके, श्रुष्टये=कल्याण के लिये, सुख के लिये, देवः=देव, ऊर्ध्वः=ऊँचे स्थित, बाहवा=भुजाओं को अर्थात् किरणों को, पृथुपाणिः=लम्बी भुजावाले, सिसर्ति=फैला रहे हैं, आपः=जल, चित् =भी, अस्य=इसकी, व्रते=आज्ञा में, आ=बहती हैं, निमृगाः=पवित्र, अयम्=यह, चित्=भी, वातः=वायु, रमते=विचरण करता है, परिज्मन् =अन्तरिक्ष में।

हि० अ०—ऊँचे स्थित, लम्बी भुजावाले (सवितृ) देव, सबके कल्याण के लिये अपनी भुजाओं (किरणों) को फैला रहे हैं; पवित्र नदियां उन्हीं की आज्ञा में (बहती हैं); यह वायु (उन्हीं की आज्ञा में) अन्तरिक्ष में रमण करता है।

*Trans.*—Having gone up on high, broad-handed god stretches forth his arms for the welfare of all. Even the purifying waters are in his commandment; even this wind rests in the circumbient (region).

*Notes*—श्रुष्टये—Dative sing of श्रुष्टि from √*śruṣ* to hear, with noun-making termination ति; 'for the walfare of all world' (*Sāyaṇa*), 'that all may mark him' (Griffith), 'that all might obey' (Peterson). पृथुपाणिः—Broad-handed; Bahuvrihi compd. accented on the first member. सिसर्ति—√*sṛ* with प्र to stretch, III conjug. pres 3rd. sing.; *not unaccented because preceded by* हि. निमृगाः—'Purifying' (Wilson), 'bent down' (Griffith), 'submissive', 'suvservient' (Peterson). मृगः is derived from √*mrj* to wipe. रमते—√*ram* to rest, pres. 3rd. sing. परिज्मन्—Loc. sing. of परिज्मन् from √*gam* to go; 'in the circumbient region' (Sāyaṇa, Griffith) 'in the course' (Peterson).

आशुऽभिः । चित् । यान् । वि । मुचाति । नूनम् । अरीरमत् ।
अतमानम् । चित् । एतोः ॥ अहिऽपूषाम् । चित् । नि । अयान् ।
अविष्याम् । अनु । व्रतम् । सवितुः । मोकी । आ । अगात् ॥३॥

सा० भा०—यान् गच्छन सविता आशुभिश्चित् शीघ्रगामिभिरपि रश्मिभि वि मुचाति विमुच्यते। नूनम् इति पुरण। अतमानं चित सतत गच्छन्तमपि जनम् एतोः गमनात अरीरमत् उपरमयति। किंच अह्यर्पूणाम्। अहिमाहन्तार शत्रुमर्षन्त्यभिगच्छन्तीत्यह्यषव। तेषामपि अविष्या गमनेच्छा न्ययान् नियच्छति। सवितुः प्रेरकस्य सूयस्य व्रत कर्म अनु पश्चात मोकी रात्रि। 'मोकी शोकी' (नि० १ ७ १८) इति रात्रिनामासु पाठात। अगात् आगच्छति। सवितुश्चेष्टोपरतौरात्रिरागच्छतीति यावत॥

शब्दा०—आशुभिः=शीघ्रगामी किरणो के द्वारा, चित्=भी, यान्=घूमते हुये, वि मुचाति=छोड दिये गये है, नूनम्=अब, अरीरमत्=रोक दिया है, अतमानम्=जानेवाले को, चित्=भी, एतोः=जाने से, अह्यर्पूणाम् =शत्रु पर आक्रमण करनेवालो की, नि अयान्=नियन्त्रित किया है, अविष्याम्=इच्छा को, अनु=पीछे, व्रतम्=काय काल के, सवितुः=सवित् देव के, मोकी=रात्री, आ अगात्=आई है।

हि० अ०—घूमते हुये (सवित् देव) अब अपनी शीघ्रगामी किरणो के द्वारा छोड दिये गये है, (उन्होने) जानेवाले को जाने से रोक दिया है, शत्रुओ पर आक्रमण करनेवाले की इच्छा को नियन्त्रित किया है। सवित् देव के कायकाल के पश्चात रात्री आई है।

*Trans*—Going (Sun) is now liberated by his quick (rays), (he) has stayed the wanderer from going (He) has restrained the desire for combat of the warriors The night has approached after the office of Savitar

*Notes*—यान्—√*ya* to go, pres part वि मुचाति—√*muc* to release, pres subjn 3rd sing Sāyana explains it as विमुच्यते According to him Savitar himself is liberated by his rays at evening Griffith and Peterson supply 'rider' to मुचाति अरीरमत्—√*ram* to stop, red-aorist, 3rd sing, not unaccented because it begins the Pāda अतमानम्—√*at* to wander, pres part एतो—From going, abl sing of एतु from √*i* to go नि अयान्—√*yam* with नि to restrain, 's' aorist, 3rd sing अगात्—√*gā* to go, root-aorist, 3rd sing

पुनरिति । सम् । अव्यत् । विऽतंतम् । वयंन्ती । मुध्या । कर्तोः । नि । अघात् । शक्म । धीरः ॥ उत् । सम्ऽहाय॑ । अस्थात् । वि । ऋतून् । अदर्धः । अरमंतिः । सविता । देवः । आ । अगात् ॥४॥

सा० भा०—वयन्ती वस्त्र वयन्ती नारीव रात्रि विततम् आलोक पुन समव्ययत संवेष्टयते । पुन शब्द पूर्वेद्युरप्येवमकार्षीदिति द्योतयति । धीर प्रज्ञोऽपि सर्वो लोक कर्तो क्रियमाण कर्म । 'कर्तो कर्तवे' (नि० २ १ १८) इति तन्नामसु पाठात् । शक्म कर्तुं शक्यमपि मध्या मध्ये उपक्रान्त कर्मापरि-समाप्येत्यर्थ । न्यधात निहितवान् सवितर्युपरते इति शेष । सर्वो लोक संहाय शय्यां विहाय सत अस्थात् । अवशिष्ट कर्म कर्तुं पुनरुत्तिष्ठति । सपूर्वो जहाति शय्यापरित्यागे यतते । तथा च श्रूयते—'कलि शयानो भवति सजिहा-नस्तु द्वापर' (ऐ० ब्रा० ७ १५) इति । सविता सर्वस्य प्रसविता सूर्य अरमति अनुपरति देव द्योतमान आगात आगच्छति उदेतीति यावत् । ऋतून् कालविशेषांश्च वि अदर्ध विदारयति ॥

शब्दा०—पुनः=फिर, समव्यात्=आवृत कर लिया है, विततम्=फैले हुये प्रकाश को, वयन्ती=बुनती हुई, मध्या=बीच में, कर्तो =कार्य के, नि अधात=रोक दिया, शक्म=शक्ति को, धीर.=बुद्धिमान ने, सहाय=छोड़कर, उदस्थात=चल पड़ा, ऋतून्=समय को, वि अदर्धः=विभाजित किया, अरमति =कभी न रुकनेवाले, सविता=सवितृ, देव =देव, आ अगात्=आ गये ।

हि० अ० —(कपड़ा बुननेवाली स्त्री के समान) बुनती हुई (रात्री ने) फैले हुये प्रकाश को पुन आवृत कर लिया है, बुद्धिमान (सवितृ) ने (अपनी) शक्ति को कार्य के बीच में ही रोक दिया, (प्रत्येक व्यक्ति शय्या को) छोड़कर (कार्य के लिये) चल पड़ा । कभी न रुकनेवाले सवितृ देव (जिन्होंने) समय का विभाजन (दिन-रात के रूप में) किया है, आ गये ।

*Trans* —(The night) has enveloped the extended light again (like a woman) weaving (a garment), the wise (Savitar) has stopped, (his) power in the midst of the work (Everybody) having left the bed sprang up, when the unstaying god Savitar (who) has divided the time (into day and night) appeared

*Notes*—पुनः—Visarjaniya is rhotasized one ; hence, इति is added after it in the Pada-text. समव्यत्— √*vī* with सम् to envelope, impf. 3rd. sing विततम्—According to Sāyaṇa वितत means day-light and it is the object of समव्यत् Oldenberg thinks it as object of वयन्ती and supplies 'all-beings' as object to समव्यत्. Griffith takes it to mean 'what was spread out' and Peterson as 'extended web of darkness'. वयन्ती— √*vā* to weave, pres. part fem. कर्तोः—Gen. infinitive from √*kr* to make. कर्तोः has been enumerated in the list of the names of 'action' (Nigh II. 1.18). न्यधात्—√*dhā* with नि to stop, root-aorist, 3rd. sing. शक्म—'Work', (Geldner) 'labour' (Griffith) 'Power' (Peterson). संहायः— √*hā* to leave, gerund in य, 'having left the bed' (Sāyaṇa), 'from rest' (Griffith), 'other lying quiet (at day time)' (Peterson) अस्थात्—See II.38.1. वि अदर्धः—√*dhr* with वि to divide, inte. impf. 3rd. sing. अरमतिः—'Unwearied' (Wilson), 'holy-minded' (Griffith), 'not resting' (Roth), 'genus of prayer' (Grassmann), 'punctual' (Geldner), 'servant as well as 'service' (Maxmuller), 'the fierce red glow of the sky deified' (Peterson). अगात्— √*gā* to go, root-aorist, 3rd. sing.

नाना । ओकांसि । दुर्यः । विश्वम् । आयुः । वि । तिष्ठते ।
प्रऽभवः । शोकः । अग्नेः ॥ ज्येष्ठम् । माता । सूनवे । भागम् ।
आ । अधात् । अनु । अस्य । केतम् । इषितम् । सवित्रा ॥५॥

सा० भा० - प्रभवः प्रभूतः अग्नेः शोकः तेजः दुर्यः गृह्यो गृहे भवः नानौकांसि यजमानानां पृथग्भूतान् गृहान् वि तिष्ठते अधितिष्ठति । विश्वमायुः सर्वमन्नं चाधितिष्ठति । 'आयुः सूनृता' (नि० २.७.२३) इत्यन्ननामसु पाठात् । माता उषाः सवित्रा अनु इषितं प्रेषितम् अस्य केतं प्रज्ञापकमग्नेः ज्येष्ठं प्रथममग्निहोत्राख्यं भागं सूनवे अग्नये आधात् आदधाति ॥

शब्दा०—नाना=अनेक, ओकांसि=गृहों में, दुर्यः=घर में उत्पन्न, विश्वम्=सम्पूर्ण, आयुः=जीवन के लिये, वि तिष्ठते=अधिष्ठित हो रहा है, प्रभवः=शक्तिशाली, शोकः=प्रकाश, अग्नेः=अग्नि का, ज्येष्ठम्=श्रेष्ठ, माता=माता (उषा) ने, भागम्=हिस्सा, आ अधात्=प्रदान किया है अनु=अनुसार, अस्य=उसकी, केतम्=इच्छा के, इषितम्=भेजा गया है, सविता=सवितृ देव के द्वारा।

हि० अ०—अग्नि का गृहों में उत्पन्न शक्तिशाली प्रकाश सम्पूर्ण जीवन के लिये घर-घर में अधिष्ठित हो रहा है। माता (उषा) ने पुत्र (अग्नि) को प्रथम अग्निहोत्र नामक हिस्सा प्रदान किया है जो सवितृ (देव) के द्वारा उस की इच्छा के अनुसार भेजा गया है।

*Trans*—The mighty home born lustre of Agni spreads through the various dwellings for whole life-time The mother (dawn) has placed to the son (fire) the largest share (which is) imparted by Savitar in accordance with (his) will

*Notes*—ओकांसि—Nom plu of ओक from √uc to be pleased Dwelling is called ओक because every one is pleased there दुय—(From दुर door), Geldner takes it to mean 'whosoever has a house', विश्वमायुः—आयु means food (Nigh II 7 23) Geldner takes it to mean 'persons of all ages', Griffith 'through entire existence', Peterson as 'a whole life time' तिष्ठते—√sthā to stand, mid pres 3rd. sing According to Sāyana it has two objects नाना ओकांसि and विश्वमायु, Griffith, Geldner and Peterson understand it as having only one object नाना ओकांसि The verb in it's un accented form indicates that both नाना ओकांसि and विश्वमायु cannot be two clauses for in that case it would have been accented according to the rule चाहलोप एवेत्यवधारणम् Pān VIII 1 62, see also MVGS p 468 शोकः—From √śuc to shine माता—Sayana and Griffith understand

it for 'Dawn' but Peterson takes it for 'Night': सूनवे—Dat. sing. of सूनु, son who is Agni. केतम्—(From √*kit* or √*cit* to know); 'manifestation' (Sāyaṇa), 'summons' (Griffith), 'desire' (Peterson). इषितम्—√*iṣ* to send, past. part. अन्वस्य केतमिषितं सवित्रा—Wilson following Sāyaṇa translates: 'which is the manifestation of him imparted by Savitar'; Griffith renders as 'Savitar hath sped to meet his summons'; Peterson as 'it being sent by Savitar in accordance with his desire'.

सम्ऽआवर्वर्ति । विऽस्थितः । जिगीषुः । विश्वेषाम् । कामः । चरताम् । अमा । अभूत् ॥ शश्वान् । अपः । विऽकृतम् । हित्वी । आ । अगात् । अनु । व्रतम् । सवितुः । दैव्यस्य ॥६॥

सा० भा०—जिगीषुः विजयेच्छुः योद्धा विष्ठितः युद्धार्थं प्रस्थितः समावर्वर्ति समावर्तयति। विश्वेषां सर्वेषां चरतां जङ्गमानाम् अमा। 'अमा इमे' (नि० ३. ४. ११) इति गृहनामसु पाठात्। गृहं प्रति कामः अभूत् भवति। शश्वान्-नित्यं कर्मरतः अपः कर्म विकृतम् अर्धकृतं हित्वी हित्वा आगात् गृहमागच्छति। एतत्सर्वं दैव्यस्य दिविभवस्य सवितुः प्रेरकस्य सूर्यस्य व्रतम् अस्तमयाख्यं कर्म अनु जायते इत्यर्थः।

शब्दा०—समावर्वर्ति=लौट रहा है, विस्थितः=बाहर गया हुआ, जिगीषु=युद्ध की इच्छावाला, विश्वेषाम्=सम्पूर्ण की, कामः=इच्छा, चरताम्=जंगम प्राणियों की, अमा=घर के प्रति, अभूत्-हो गई है, शश्वान्=सभी, अपः=कार्य को, विकृतम्=अपूर्ण, हित्वी=छोड़कर, आ अगात्=आ गया है अनु=पश्चात्, व्रतम्=कार्य के, सवितुः=सवित् देव के, दैव्यस्य=द्युलोक में रहनेवाले के।

हि० अ०—विजय की इच्छा से बाहर गया योद्धा लौट रहा है। सम्पूर्ण जंगम प्राणियों की इच्छा घर की तरफ हो गई है। सवित् देव के कार्य के समाप्त होने पर प्रत्येक (व्यक्ति) काम को अपूरा छोड़कर आ गया है।

*Trans.*—Warrior, desirous of victory, who had gone out, returns. The desire of all moving ones became homewards. Everyone leaving one's work half-done has gone, after the office of divine Savitar.

*Notes*—समावर्वर्ति - सम्+आ+√*vṛt* to turn, pres. from the perf. base, 3rd sing. Verb having reduplicated base accents the reduplicated syllable (अभ्यस्तानामादिः—Pāṇ VI.1.189). But when it is compounded with two prepositions it shifts the accent to the immediately preceding preposition, the first remains unaccented. विष्ठितः—√*sthā* with वि to go out, past. part. For accent see निहिता (I.24.7.) जिगीषुः—Desid. noun from √*ji* to win. अमा—Home (Nigh. III. 4.11); here it is used as an adverb-'homewards'. विकृतम्—√*kṛ* with वि to change. past part.; 'half done' (Sāyaṇa), 'work which has assumed diverse forms' (Peterson), 'evil doing' (Griffith). हित्वी—√*hā* to leave, gerund in त्वी.

According to Griffith it is a description of morning. He renders the verse : 'He comes again, unfolded, fain for conquest : at home was he the love of all things moving. Each man hath come leaving his evil doings, after the Godlike Savitar's commandament.'

त्वया । हितम् । अप्यम् । अप्ऽसु । भागम् । धन्व । अनु । आ ।
मृगयसः । वि । तस्थुः ॥ वनानि । विऽभ्यः । नकिः । अस्य ।
तानि । व्रता । देवस्य । सवितुः । मिनन्ति ॥७॥

सा० भा०—हे सवितः त्वया अप्सु अन्तरिक्षे । 'आपः पृथिवी' (नि० १. ३. ८) इत्यन्तरिक्षनामसु पाठात् । जलाधारे वा हितं निहितम् अप्यम् अपां संबन्धिनं मार्गं धन्वानु निर्जलप्रदेशेष्वरण्येषु मृगयसः मृगयमाणा मृगाः

आ समन्तात् वि तस्थुः अधितिष्ठन्ति । किंच वनानि वृक्षाः विभ्यः पक्षिभ्यः आवासादिरूपेण त्वया भागो दत्तः । अस्य देवस्य सवितुः तानि तादृशानि व्रता व्रतानि कर्माणि नकिः मिनन्ति केऽपि न हिंसन्ति ॥

शब्दा०—त्वया=तुम्हारे द्वारा, हितम्=निर्धारित किया गया है, अप्यम्=जलचर, अप्सु=जल में, भागम्=हिस्से के, धन्व=मैदान में, अनु=अनुसार, आ=चारो तरफ, मृगयसः=जंगली जानवर, वि तस्थुः=फैले हैं, वनानि=जंगल, विभ्यः=पक्षियों के लिये, नकिः=कोई नहीं, अस्य=, उसके, तानि=उन, व्रता=कार्यों को, देवस्य=देव के, सवितुः=सवितृ के, मिनन्ति=उलंघन करते हैं ।

हि० अ०—अपने-अपने हिस्से के अनुसार जो तुम्हारे द्वारा निर्धारित किया गया है, जलचर जल में (फैले हैं), जंगली जानवर, मैदान में फैले हैं । पक्षियों के लिये वन (निर्धारित हैं) । इस सवितृ देव की उन आज्ञाओं का उलंघन कोई नहीं करता ।

*Trans.*—The equatic creatures spread in the waters and beasts in plain lands, according to their share which have been assigned by thee. Forests (have been assigned) to the birds. No one violates those commandaments of this god Savitar.

*Notes*—हितम्—√*dhā* to put, past part. अप्यम्–'Watery' (Sāyaṇa), 'equatic creature' (Peterson). Sāyaṇa, Griffith and Wilson construe अप्यम् with भागम्. Peterson takes it as an independant substantive. वि तस्थुः—√*sthā* with वि to spread. त्वया हितम्.. वि तस्थुः–Griffith following Sāyaṇa translates, 'The wild beasts spread through desert places seeking their watery share thou hast set in waters; Peterson treats the first Pāda as an elliptical clause and he supplies the verb वि तस्थुः from the second Pāda to त्वया अप्सु हितं भागं अप्यम् 'over the portion assigned by thee to it, in the waters, the equatic creation (has spread). The two clauses are connected by conjunctive आ. मिनन्ति—√*mī* to damage, pres. 3rd. plu.

याद्ऽराध्यम् । वरुणः । योनिम् । अप्यम् । अनिऽशितम् । निऽमिषि । जर्भुराणः ॥ विश्वः । मार्ताण्डः । व्रजम् । आ । पशुः । गात् । स्थऽशः । जन्मानि । सविता । वि । आ । अकरित्यकः ॥८॥

सा० भा०—वरुणः याद्राध्यं याता गच्छतां राध्य संराधनीयम् अप्यम् आप्सु योग्यम् अनिशितम् अतीक्ष्णम् । सुखकरमिति यावत् । योनिं स्थान निमिषि निमेषे सवितुरस्तमये सति विश्रमार्थं प्राणिभ्य प्रयच्छति । वरुणस्य रात्रेर्निर्वाहकत्वात् । जर्भुराण भृश गच्छन् विश्व सर्व मार्ताण्डः मृताद्ब्रह्मात् अण्डादुत्पद्यमान पक्षी आ गात् आगच्छति । विश्व पशु अपि व्रज गोष्ठमागात् । सविता प्रेरक स्थश स्थाने स्थाने जन्मानि जातानि भूतानि व्याकः पृथक्कार्षीत् ।

शब्दा०—याद्राध्यम्=अति शीघ्रता से, वरुण =वरुण देवता, योनिम् =स्थान, अप्यम्=जलवाले, अनिशितम्=बिना किसी रोक के, निमिषि —सवितृ देव के पलक मारने पर अर्थात् सन्ध्या के समय, जर्भुराण =उड़ते हुये, विश्वः=सभी, मार्ताण्ड =पक्षी, व्रजम् –बेड़े में, पशु =जानवर, आ=और, गात्=चले गये, स्थश =स्थान के अनुसार, जन्मानि=उत्पन्न जीवो को, सविता=सवितृ ने, वि आ अक=अलग-अलग स्थित किया है ।

हि० अ०—(सवितृ देव के) आखे बन्द करने पर, वरुण अपने जलवाले स्थान पर, बिना रोक के, जल्दी ही (चले गये), और जानवर (अपने) बाड़े में चले गये । सावितृ देव ने सभी उत्पन्न जीवो को अपने स्थान के अनुसार अलग-अलग स्थित किया है ।

*Trans*—At the closing of the eyes (of Savitar), Varuna (has gone) incessantly to his watery abode as quickly as possible, all the birds flying (have gone to the nest) and the cattle have gone to the stalls Savitar has lodged all the beings, created, separately in their respective places

*Notes*—*याद्राध्यम्*—Sāyana explains it as 'याता गच्छतां संराधनीयम्', Griffith as 'with utmost speed', and Peterson as 'this much having been vouchsafed' According

to Macdonell याद्राध्यम् is a syntactical compd which literally means 'in so for as attainable' i e as quickly as possible यात् is identical with later यावत् and राध्यम् is derived from $\sqrt{}$*rādh* to succeed, gerundive in य अत्यम्—Sāyana takes it to mean attainable (आप्तु योग्यम्) while in the preceding verse he has explained it as watery (अपां सबन्धिन) Wilson thinks it as 'cool' and Peterson as watery. अनिशितम्—Comfortable (Sāyana), 'agreeable' ( Wilson ), 'in restless haste' ( Griffith ), 'restlessly' (Peterson) जर्भुराणः—$\sqrt{}$*bhur* to quiver, inte part , Sāyana construes it with मार्ताण्ड and Wilson with वरुण याद्राध्यं जर्भुराण —'The ever-going Varuna grants a cool, accessible and agreeable place (of rest) to all moving ( creatures )' (Wilson), 'with utmost speed in restless haste at sunset Varuna seeks his watery habitation' ( Griffith ) , 'Varuna has gone to his watery residence this much having been vouchsafed to him by Savitar, restlessly agitating while his eyes are closed (for a nap)' (Peterson) आ—Sāyana connect it with गात् , but here it should mean 'and' because if it expresses a sense other than conjunctive the verb गात् to be supplied in the two clauses must have been accented in the absence of च (चाहलोप एवेत्यवधारणम्—Pān VIII 1 62) गात्—$\sqrt{}$*gā* to go, root-aorist subju 3rd sing अकः—$\sqrt{}$*kr* to make, root-aorist, 3rd sing Vide Appendix B under rules of rendering Samhitā-text in to Pada-text

न । यस्यं । इन्द्रंः । वरुंणः । न । मित्रः । व्रतम् । अर्यमा ।
न । मिनन्तिं । रुद्रः ॥ न । अरातयः । तम् । इदम् । स्वस्ति ।
हुवे । देवम् । सवितारंम् । नमःऽभिः ॥९॥

सा० भा०—यस्य सवितुर्देवस्य व्रतं प्रसवाख्यं कर्म इन्द्रः न मिनाति न हिनस्ति । वरुणः [illegible] [illegible] मिनाति । मित्रः च अर्यमा च न मिनाति । रुद्रः च न मिनाति । अरातयः असुराश्च न मिनन्ति । मिनातीति श्रुतमाख्यातं यथायोगं विपरिणामेन प्रत्येकमभिसंबध्यते । तं सवितारं सर्वस्य प्रेरकं देवं द्योतमानम् इदम् इदानीं नमोभिः अन्नरूपैर्हविर्भिः सह । 'नमः आयुः' (नि० २. ७. २२) इत्यन्ननामसु पाठात् । स्वस्ति क्षेमाय हुवे स्तौमि ॥

शब्दा० - न=नहीं, यस्य=जिसको, इन्द्रः=इन्द्र, वरुणः=वरुण, न=नहीं, मित्रः=मित्र, व्रतम्=कार्य का, आज्ञा का, अर्यमा=अर्यमन्, न=नहीं, मिनन्ति= उल्लंघन करते हैं, रुद्रः=रुद्र, न=नहीं, अरातयः=शत्रु तम्=उस को, इदम्=यहां, इस समय, स्वस्ति=कल्याण के लिये, हुवे=बुलाता हूं, देवम=देव को, सवितारम=सवितृ, नमोभिः=नमस्कारो द्वारा ।

हि० अ० – जिसकी आज्ञा का उल्लंघन न तो इन्द्र, वरुण, मित्र, अर्यमा, रुद्र करते हैं न तो शत्रु ही; उस सवितृ देव को मैं यहां नमस्कारो द्वारा कल्याण के लिये बुलाता हूं ।

*Trans.*—Whose office neither Indra, nor Varuna, nor Mitra, nor Aryaman nor Rudra nor the enemies violate, him, god Savitar, I invoke here with salutations for welfare

*Notes*—मिनन्ति—See II. 38 7. हुवे—$\sqrt{}$*hū* to call, pres mid 1rst. sing, not unaccented because it begins the Pāda.

भर्गम् । धियम् । वाजयन्तः । पुरम्ऽधिम् । नराशंसः । ग्नाःपतिः । नः । अव्याः ॥ आऽअये । वामस्य । सम्ऽगथे । रयीणाम् । प्रियाः । देवस्य । सवितुः । स्याम ॥१०॥

सा० भा०—भर्गं भजनीयं धियं ध्यातव्यं पुरंधिं पुरस्य धारयितारं बहुप्रज्ञं वा सवितारम् । 'पुरंधिर्बहुधीः' (निरु० ६. १३) इति यास्कः । वाजयन्त वाजिनं बलिनं कुर्वंत' । विभक्तिव्यत्ययः । नः स्तुवतोऽस्मान् नराशंसः नरैः शंसनीयः ग्नास्पतिः देवपत्नीनां पतिः छन्दसां पतिर्वा । तथा च श्रूयते-'छन्दांसि वै ग्ना' इति, 'उत ग्ना व्यन्तु देवपत्नीः' (ऋ० सं० ५. ४६. ८) इति च

सविता अव्याः अव्यात्। किञ्च वामस्य धनस्य रयीणां पशूनां च। तथा च श्रूयते—'पशवो वै रयिः' इति। आये आगमने संगथे सगमने च निमित्ते देवस्य द्योतमानस्य सवितुः प्रेरकस्य वय प्रियाः स्याम भवेम॥

शब्दा०—भगम्=भाग्य को, धियम्=बुद्धि को, वाजयन्तः=बढाते हुये, पुरंधिम्=ज्ञान को, नराशंसः=मनुष्यो द्वारा प्रशसनीय देव, ग्नास्पतिः=देवियो के पति, न=हमारी, अव्याः=रक्षा करें, आये=लाने में, वामस्य=धन के, सङ्गथे=एकत्रित करने में, रयीणाम्=पशुओ के, प्रियाः=प्रिय, देवस्य=देव के, सवितुः=सवितृ के, स्याम=होवें।

हि० अ०—नराशंस तथा देवियो के पति (सवितृ) (हमारे) भाग्य, विचार तथा ज्ञान को बढाते हुये हमारी रक्षा करें। हम सवितृ देव के प्रिय बनें (जिससे) धन लाने में तथा पशुओ को एकत्रित करने में (सफल हों)।

*Trans*—May Narāsamsa and the Lord of goddesses protect us strengthening (our) fortune, thought and wisdom May we be dear unto god Savitar (that we may be successful) in bringing of wealth and in gathering of cattle

*Notes*—भगम्, धियम्, पुरंधिम् are according to Sāyana, the adjectives of सवितारम् understood Peterson takes them as separate deities Here they are abstract nouns as Griffith interprets वाजयन्तः—Sāyana construes it with नराशंस and ग्नास्पति, Peterson follows Sāyana in taking it as participle of नराशंस and ग्नास्पति, Goldner thinks वाजयन्त as the adj of वयम् understood, Griffith supplies 'they' as the substantive of वाजयन्त नराशंसः and ग्नास्पतिः are the epithets of Savitar Agni is called नराशंस, but here according to Sāyana, Savitar is नराशंस, for he is praised by men Sāyana takes ग्नास्पति too, as the epithet of Savitar In the Rgveda he has been frequently called husband of maidens (I 152 4). Griffith understands ग्नास्पति as Tvaṣṭr who is also represented as attending or attended by ग्ना, goddesses

अव्याः—$\sqrt{av}$ to protect, root-aorist, prec. 3rd. sing., termination त् has been dropped. आ अये—Dative sing. of अयि from $\sqrt{i}$ to go.

अस्मभ्यंम् । तत् । दिवः । अत्ऽभ्यः । पृथिव्याः । त्वया । दत्तम् । काम्यंम् । राधः । आ । गात् ॥ शम् । यत् । स्तोतृऽभ्यः । आपये । भवाति । उरुऽशंसाय । सवितः । जरित्रे ॥११॥

सा० भा०—हे सवितः अस्मभ्यं त्वया दत्तं तत् प्रसिद्धं काम्यं कमनीयं राधः धनं दिवः द्युलोकात् अद्भ्यः अन्तरिक्षलोकात् पृथिव्याः भूमेश्च आ गात् आगच्छतु । किञ्च स्तोतृभ्यः स्तोतॄणाम् आपये बन्धवे तद्वंशजाय यत् धनं शं सुखकरं भवति भवेत् उरुशंसाय बहुस्तुतये जरित्रे स्तोत्रे मह्यम् । 'जरिता कारुः' (नि० ३. १६. २) इति स्तोतृनामसु पाठात् । हे सवितः तत्प्रयच्छ ॥

शब्दा० - अस्मभ्यम्=हम लोगों के लिये, तत्=वह, दिवः=आकाश से, अद्भ्यः=जल से, पृथिव्याः=पृथिवी से, त्वया=तुम्हारे द्वारा, दत्तम्=दिया हुआ, काम्यम्=वरणीय, राधः=धन, आ गात्=आवे, शम्=कल्याणकर, सुखकर, यत्=जो, स्तोतृभ्यः=स्तोताओं के लिये, आपये=वंश के लिये, भवाति=हो, उरुशंसाय=बहुत प्रशंसा करनेवाले, सवितः=ओ सवितृ देव, जरित्रे=स्तुति गानेवाले को ।

हि० अ०—तुम्हारे द्वारा प्रदत्त वह वरणीय धन हम लोगों के लिये आकाश से, जल से तथा पृथिवी से आवे; स्तोताओं के वंश के लिये जो धन है, सुखकर हो; ओ सवितृ, उसे बहुत प्रशंसा करनेवाले तथा स्तुति गानेवाले (मुझको प्रदान करो) ।

*Trans.*—May that desirable wealth given by thee come to us from heaven, from water and from earth; (the wealth) which is auspicious to the race of chanting priests, O Savitar, (bestow on us) the singer, of wide praise.

*Notes*—गात्—See II. 38.8. आपये—According to Sāyaṇa आपि means 'descendents'; Peterson takes it to mean 'patrons' and Griffith as 'friends'. भवाति—$\sqrt{bhū}$

to be, pres subju. 3rd. sing , not unaccented because preceded by यत् उरुशंसाय—Bahuvrihi compd accented on the second member शम्यत् जरित्रे—Wilson following Sāyana translates 'and may the happiness which belongs to the race of those who eulogise thee devolve upon me repeating diligently thy praise', Griffith renders, 'that it be well with friends and those who praise thee and Savitar, with loud lauding singer'. According to Peterson, 'as would bring back to the chanting priests to the patron and to the singer, eloquent in speech'

---

'प्र पर्वतानाम्' इति त्रयोदशर्चं चतुर्थं सूक्तम्। अत्रेयमनुक्रमणिका—'प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योत्तितीर्षोस्तत्र नदीवाक्यं चतुर्थी-षष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योस्त्विन्द्रस्तुतिरन्त्यानुष्टुप्' इति। अत्र चतुर्थी-षष्ठ्यष्टमीदशमीनां नदीवाक्यत्वात्ता एव ऋषयः शिष्टानां विश्वामित्रवाक्य-त्वात्स एव ऋषिः। अन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः। इन्द्रो देवता। यद्यपि षष्ठ्यां सप्तम्यां च विश्वामित्रो नद्यश्च स्तूयन्ते तथापीन्द्र एव देवता। सूक्त-विनियोगो लैङ्गिकः। पुरा किल विश्वामित्रः पैजवनस्य सुदासो राज्ञः पुरोहितो बभूव। स पौरोहित्येन लब्धधनः सर्वं धनमादाय विपाट्छुतुद्र्योः संभेदमाययौ अनुययुरितरे। अथोत्तितीर्षुर्विश्वामित्रः अगाधजले ते नद्यौ दृष्ट्वा उत्तरणार्थम् आद्याभिः तिसृभिस्तुष्टाव ॥

प्र। पर्वतानाम्। उशती इति। उपऽस्थात्। अश्वेइवेत्यश्वेऽइव। विसिते इति विऽसिते। हासमाने इति ॥ गावाऽइव। शुभ्रे इति। मातरा। रिहाणे इति। विऽपाट्। शुतुद्री। पयसा। जवेते इति ॥१॥

सा० भा० पर्वतानां गिरीणां शैलानाम् उपस्थात् उत्सङ्गान्निर्गत्य उशती समुद्रगमनं कामयमाने। गमने दृष्टान्तः। अश्वे इव। यथा विषिते मन्दुरातो विमुक्ते हासमाने अन्योन्यजवेन स्पर्धमाने। यद्वा हृष्यन्त्यावश्वे इव वडवे इव त्वरया गच्छन्त्यौ परस्परं हृष्यन्त्यौ। तथा गावेव शुभ्रे। यथा द्वौ गावौ शोभमानौ वर्तेते तद्वच्छुभ्रे शोभमाने। किंच मातरा। यथा मातरौ धेनू रिहाणे। अन्तर्णीतसन्नर्थो लिहिः। वत्सं जिह्वया लेढुमिच्छन्त्यौ शीघ्रं गच्छतस्तद्वत् समुद्रं गन्तुं जवात् गच्छन्त्यौ पयसा संयुक्ते विपाट्। कूलविपाट-नात् विपाशनाद्वा विमोचनाद्वा विपाट्। शुतुद्री। शु क्षिप्रं शु तुन्ना तुन्नेव द्रवति गच्छतीति शुतुद्री। एतन्नामके नद्यौ अवेते समुद्रं प्रति शीघ्रं गच्छतः। अत्र निरुक्तं 'पर्वतानामुपस्थादुपस्थानादुशत्यौ कामयमाने अश्वे इव विमुक्ते इति वा विषण्णे इति वा हासमाने हासतिः स्पर्धायां हर्षमाणे वा गावाविव शुभ्रे शोभने मातरौ संरिहाणे विपाट्छुतुद्र्यौ पयसा प्रजवेते' (निरु०

९३९) इति । उशती । वश कान्तौ । अस्य ग्रहुडित्त्वात् 'ग्रहिज्यावयि' इत्यादिना सम्प्रसारणम् । विषिते । 'षिञ् बन्धने' इत्यस्य कर्मणि निष्ठा । संहितायां 'परिनिविभ्यः सेवसितसयसिवुसह' इत्यादिना षत्वम् । गतिरनन्तर' इति गते प्रकृतिस्वर । हासमाने । हासति स्पर्धाकर्मा हसे हसने । शानच् । तस्य लसार्वधातुकस्वरे कृते धातुस्वर । रिहाणे । 'रिह आस्वादने' । स्वरितेत्त्वादुभयपदी । शानच् । अदादित्वाच्छपो लुक् । लकारस्य रेफश्छान्दस । रेफभवलक्षणं णत्वम् । चित्वादन्तोदात्त । विपाट् । 'पट गतौ' 'पट भाषनस्पन्दयो' इति वा ण्यन्तादेतो विपूर्वो अकारस्य प्रमादिना घत्वम् । शुतुद्री । छान्दसी रूपसिद्धि । जवेते । जुङ् गतौ' भौवादि । ङित्त्वादात्मनेपदम् । 'आत्तो ङित' इति इयादेश । निघात ॥

शब्दा०—पर्वतानाम्=पर्वतों की उशती=इच्छा करती हुई, उपस्थात्—गोद से, अश्वे इव=दो घोड़ियों की तरह, विषिते=खुले लगाम वाली, हासमाने=परस्पर स्पर्धा से दौड़ती हुई गावेव=दो गायों की तरह, शुभ्रे=सफेद रंग की, मातरा=मातायें, रिहाणे=चाटती हुई विपाट्=विपाट नामकी सिन्धु की सहायक एक नदी, शुतुद्री=शुतुद्री नामकी सिन्धु की एक सहायक नदी, पयसा=जल के प्रवाह से, प्र जवेते=तेजी से बह रही है ।

हि० अ०—पर्वतों की गोद से निकल कर, (समुद्र की ओर जाने की) इच्छा करती हुई, (परस्पर) स्पर्धा से दौड़ती हुई, खुले बाग वाली दो घोड़ियों की तरह, (बछड़े को) चाटती हुई दो सफेद माता गायों की तरह, विपाट् और शतुद्री (अपने) प्रवाह से तेजी से बह रही है ।

*Trans*—From the lap of mountains, longing (to reach ocean), like two mares let loose like two white mother cows, licking (the calf), Vipāt and Śutudri flow rapidly with their water

*Notes*—उशती—√vaś to desire, pres part fem उ is the Samprasāraṇa of व, final ई forming dual Pragṛhya, hence, इति in the Pada-text अश्वे इव—ए of the अश्वे is Pragṛhya, hence, इति should be added after it, but it is added after इव beause it is a

नित्य समास; and the repetition of अदवे इव after इति is with a veiw to analyse the compound. विसिते—Past part. from $\sqrt{}$*sū* or $\sqrt{}$*si* with वि *to let-loose*; final ए is Pragṛhya; hence, इति in the Pada-text; the repetition being with a view to analyse the compound. हासमाने—$\sqrt{}$*hās* to contend, to run a race, pres. part.; final ए is Pragṛhya. रिहाणे—$\sqrt{}$*rih* (class. lih) to lick, pres. part.; final ए is Pragṛhya. जवेते—$\sqrt{}$*jū* to speed, pres. mid. 3rd. dual; final ए is Pragṛhya.

इन्द्रेषिते इतीन्द्रऽइषिते । प्रऽसवम् । भिक्षमाणे इति । अच्छ । समुद्रम् । रथ्याऽइव । याथः ॥ समाराणे इति समऽआराणे । ऊर्मिऽभिः । पिन्वमाने इति । अन्या । वाम् । अन्याम् । अपि । एति । शुभ्रे इति ॥२॥

सा॰भा॰—हे नद्यौ इन्द्रेषिते इन्द्रेण प्रेषिते प्रसवं तस्येन्द्रस्यानुज्ञां भिक्षमाणे प्रार्थयमाने युवां समुद्रम् अच्छ आभिमुख्येन याथः गच्छथः । तत्र दृष्टान्तः । रथ्येव इति । यथा रथिनौ लक्ष्यं देशमभिगच्छतस्तद्वत् । किं कुर्वन्त्यौ । समाराणे परस्परं संगच्छन्त्यौ ऊर्मिभिः तरङ्गैः पिन्वमाने परिसरप्रदेशं संतर्पयन्त्यौ शुभ्रे शोभमाने । युवां समुद्रं गच्छथ इति पूर्वेणान्वयः । तथा वां युवयोर्मध्ये अन्या एका अन्याम् अपरां नदीम् अप्येति अपिगच्छति । परस्परसंगमनापन्नत इत्यर्थः । इन्द्रेषिते । 'इष गतौ' इत्यस्य कर्मणि निष्ठायां, 'तीषसह' इत्यादिना इडागमः । 'तृतीया कर्मणि' इति पूर्वपदस्वरः । प्रसवम् । 'षू प्रेरणे' इत्यस्य अप् । थाथादिस्वरः । भिक्षमाणे । 'भिक्ष याच्ञायाम्' । आत्मनेपदी । शानचो लसार्वधातुकस्वरेणानुदात्तत्वे धातुस्वरः । रथ्येव । रथस्येमौ । तस्येदम् इत्यर्थे 'रथाद्यत्' इति यत्प्रत्ययः । तित्स्वरितः । इवेन विभक्त्यलोपः इत्यादि । याथः । यातेर्लटि रूपम् । समाराणे । 'ऋ गतौ' इत्यस्य लिट् । संपूर्वस्यार्तेः 'समो गमि' इत्यादिना आत्मनेपदत्वात् तस्य कानजादेशः । 'ऋच्छत्यृताम्' इति गुणः । पिन्वमाने । 'पिवि सेचने' । भ्वादिः । लसार्वधातुकस्वरेण शानचोऽनुदात्तत्वे धातुस्वरः ॥

शब्दा० इन्द्रेषिते=इन्द्र के द्वारा भेजी गई, प्रसवम्=प्रवाहित होने के लिये, भिक्षमाणे=प्रार्थना करती हुई, अच्छ=ओर, समुद्रम्=समुद्र को, रथ्येव=दो रथियों की तरह, याथः=जा रही हो, समाराणे=एक साथ जाती हुई, ऊर्मिभि=लहरों से, पिन्वमाने=उमड़ती हुई, अन्या=एक, वाम्=तुम दोनों में से, अन्याम्=दूसरे के पास, अपि=भी, एति=जा रही है, शुभ्रे=ओ सफेद वर्ण वाली ।

हि० अ०—इन्द्र द्वारा भेजी गई, बहने के लिये प्रार्थना करती हुई, दो रथियों की तरह समुद्र को ओर जा रही हो। एक साथ जाती हुई, लहरों से उमड़ती हुई, तुममें से प्रत्येक एक दूसरे की ओर जा रही हो ।

*Trans* —Sped by Indra, seeking acceleration (you two) are approaching the ocean like two charioteers Going together, swelling with torrents, each of you flows, into the other, O beautiful ones,

*Notes*—इन्द्रेषिते—√is to send, past part Tatpurusa compd accents the second member, but when the first member is in instrumental form, and second member a participle in passive sense, it accents the first member (तृतीया कर्मणि Pān VI 2 48), final ए is Pragrhya प्रसवम्—'Commandment' (Sāyana), 'acceleration' (Peterson), from √sū to impel भिक्षमाणे—√bhiks to beg, pres part, , final ए is Pragrhya याथ —√yā to go, pres 2nd dual समाराणे—√r with सम् to go together, perf part , final ए is Pragrhya पिन्वमाने—√pinv to fatten, pres part , final ए is Pragrhya एति—√i to flow into, pres 3rd sing

अच्छ॑ । सिन्धु॑म् । मा॒तृऽत॑माम् । अ॒यास॒म् । विऽपा॑शम् । उ॒र्वीम् । सु॒ऽभगा॑म् । अ॒ग॒न्म॒ ॥ व॒त्सम्ऽइ॑व । मा॒तरा॑ । सं॒रि॒हा॒णे इति॑ स॒म्ऽरि॒हा॒णे । स॒मा॒नम् । योनि॑म् । अनु॑ । सं॒चर॑न्ती इति॑ स॒म्ऽच॒रन्ती ॥२॥

सा० भा०—हे नद्यौ मातृतमाम् अतिशयेन मातर सिन्धुं स्रवन्तीं शुतुद्रीं त्वाम् अच्छ आभिमुख्येन अयासं विश्वामित्रोऽहं प्राप्तोऽभूवम्। उर्वीं महतीं सुभगां सौभाग्यवतीं विपाशं त्वाम् अगन्म वय प्राप्ता स्म। किं कुर्वत्यौ। मातरा मातरौ द्वे धेनू वत्समिव संरिहाणे अन्तर्णीतसन्नर्थौ लिहि। जिह्वया लेढुमिच्छन्त्यौ यथा वत्समनुगच्छतस्तद्वत समानम् एक योनि स्थान समुद्रम् अनु अभिलक्ष्य संचरन्ती सम्यक् चरन्त्यौ। युवामयासिषमिति पूर्वेणान्वय। अयासम्। 'या प्रापणे' इत्यस्य रूपम्। इडभावश्छान्दस। अगन्म। गमेर्लङि/ 'बहुल छन्दसि' इति शपो लुक। 'म्वोश्च' इति मकारस्य नकार। निपात। संचरन्ती। चरतिर्गत्यर्थं। तृतीयायुवतस्याभावात् आत्मनेपदाभाव। शतुर्लसार्वधातुकस्वरेणानुदात्तत्वे कृते धातुस्वर॥

शब्दा०–अच्छ=ओर, सिन्धुम् नदी मातृतमाम्=श्रेष्ठ माता, अयासम्=आया हूँ, विपाशम्=विपाट् नदी, ऊर्वीम्=चौडी, सुभगाम्=सुन्दर, सौभाग्यवती, अगन्म=आया हूँ, वत्समिव=बछडे की तरह, मातरा मातायें, सरिहाणे=एक साथ चाटती हुई, समानम्=समान योनिम्=स्थान, अनु=लक्ष्य कर, संचरन्ती=एक साथ बहती हुई।

हि० अ० श्रेष्ठ नदी माता (शुतुद्री) के पास आया हूँ, चौडी तथा सुन्दर विपाट् के पास आया हूँ, बछडे को चाटती हुई दो माताओ की तरह, एक ही स्थान (समुद्र को लक्ष्य कर) बहती हुई (शुतुद्री और विपाट् के पास आया हूँ)।

*Trans*—I have approached the most motherly rivers (Śutudri). We have come to the broad and beautiful Vipat, like two mothers licking their calf, flowing along a common bed

*Notes*—अयासम—$\sqrt{ya}$ with अच्छ to approach, 's'-aorist, 3rd sing सुभगाम्—Bahuvrihi compd accented on the second member संरिहाणे—See III 33 1. अगन्म—$\sqrt{gam}$ to go, root—aorist 1rst plu संचरन्ती—$\sqrt{car}$ to move, pres part fem, final ई is Pragrhya

एना। वयम्। पयसा। पिन्वमानाः। अनु। योनिम्। देवऽकृतम्। चरन्तीः॥ न। वर्तवे। प्रऽसवः। सर्गऽतक्तः। किम्ऽयुः। विप्रः। नद्यः। जोहवीति॥४॥

सा० भा०—एवं स्तुते नद्यौ विश्वामित्रं प्रत्यूचतुः। एना एनेन पयसा पिन्वमानाः संतर्पयन्त्यः देवकृतं देवेनेन्द्रेण कृतं संदिष्टं योनिं स्थानं समुद्रम् अनु लक्षीकृत्य चरन्तीः गच्छन्त्यः वयम आस्महे। द्वयोर्बहुवचनं पूजार्थम्। तासामस्माकं सर्गतक्तः सर्गे गमने प्रवृत्तः प्रसवः उद्योगः न वर्तवे निवर्तनाय न भवति। किंयुः किमिच्छन् असौ विप्रः ब्राह्मणः नद्यः नदीः अस्मान् जोहवीति भृशमाह्वयति। एना। एतच्छब्दस्य तृतीयाया एनादेशः। 'सुपां सुलुक्' इति तृतीयाया आजादेशः। 'उडिदम्' इति विभक्तेरुदात्तत्वम्। पिन्वमानाः। 'पिवि सेचने'। देवकृतम्। 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरः। वर्तवे। 'वृतु वर्तने'। तुमर्थे तवेन्प्रत्ययः। नित्स्वरः। सर्गतक्तः। 'क्ते च' इति पूर्वपदप्रकृतिस्वरः। किंयुः। किमिच्छन्। 'क्यचि मान्ताव्ययप्रतिषेधः' (पा० सू० ३. १. ८. १) इति छान्दसत्वादत्र प्रतिषेधो न भवतीति क्यच्। 'क्याच्छन्दसि' इत्युप्रत्ययः। प्रत्ययस्वरः। नद्यः। छान्दसो यणादेशः। जोहवीति। ह्वेञः यङ्लुकि 'अभ्यस्तस्य च' इति संप्रसारणे कृते 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः। 'यङो वा' इति ईडागमः। गुणः। निघातः।

शब्दा० - एना=ऐसी, वयम=हम लोग, पयसा=धारा से, पिन्वमानाः =उमड़ती हुई, अनु=लक्ष्य कर, योनिम्=स्थान को, देवकृतम्=देवताओं द्वारा निर्मित, चरन्तीः=विचरण करती हुई, न=नहीं, वर्तवे=रुकने के लिये, प्रसवः=गति, सर्गतक्तः=स्वाभाविक रूप से प्रवाहित, किंयुः=किस इच्छा से, विप्रः=ब्राह्मण, नद्यः=नदियों को, जोहवीति=बार-बार स्तुति कर रहा है।

हि० अ०—ऐसी हम लोग, अपनी धारा से उमड़ रही हैं तथा देवताओं द्वारा निर्मित स्थान पर चल रही हैं। स्वाभाविक रूप से प्रवाहित हमलोगों की गति रुकने के लिये नहीं है। किस इच्छा से ऋषि (विश्वामित्र) नदियों की बार-बार स्तुति कर रहा है।

*Trans.*—We (as such are) swelling with this torrent flowing in a common bed fashioned by god (Indra). Our torrent rushing with its natural urge, is not be to stopped. With what desire the inspired one does invoke frequently.

*Notes*—देवकृतम्—Sāyana understands it as fashioned by Indra; for accent see इन्द्रेषिते (III. 33.2).

चरन्ती—See सचरन्ती (III. 33.3.) वर्तवे—Dative infinitive in तवे from $\sqrt{}$*vṛt* to turn. सर्गतक्तः—Sāyaṇa explains it as सर्गे गमने प्रवृत्तः'; Wilson takes it to mean 'appointed for our going', Griffith as 'urged to motion' and Peterson as 'rushing with its original urge ; Tatpuruṣa compd. having first member dative in sense and second, past part., accent the first member (क्ते च—Pāṇ. VI. 2.45) क्रियुः—यु is a desiderative suffix which being added to the stem gives the sense of desiring (cf. अवस्यु, श्रवस्यु, देवयु etc.). जोहवीति—$\sqrt{}$*hū* to call inte. pres. 3rd. sing.

रमध्वम् । मे । वचसे । सोम्याय । ऋतऽवरीः । उप । मुहूर्तम् । एवैः ॥ प्र । सिन्धुम् । अच्छ । बृहती । मनीषा । अवस्युः । अह्वे । कुशिकस्य । सूनुः ॥५॥

सा० भा०—विश्वामित्रो नदीः प्रति ब्रूते । ऋतावरीः । ऋतमुदकम् तद्वत्यो हे नद्यो यूयं मे विश्वामित्रस्य मम सोम्याय । उत्तीर्याहं सोमं संपादया-मीत्येवं सोमसंपादिने वचसे तदर्थम् एवैः । पञ्चम्यर्थे तृतीया । शीघ्रगमनेभ्यः मुहूर्तं मुहूर्तमात्रम् उप रमध्वम् । उपपूर्वो रमिरुपसंहारे वर्तते । क्षणमात्रं शीघ्रगमनादुपरता भवत । सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्व-तीषु पुरोवर्तिनीं शुतुद्रीं प्रति ब्रूते । कुशिकस्य राजर्षेः सूनुः विश्वामित्रोऽहं बृहती महत्या मनीषा मनीषया स्तुत्या अवस्युः आत्मनो रक्षणमिच्छन् सन् सिन्धुं शुतुद्रीं त्वाम् अच्छ आभिमुख्येन प्र अह्वे प्रकर्षेणाह्वयामि । अत्र निरुक्तम्—'उपरमध्वं मे वचसे सोम्याय सोमसंपादिन ऋतावरीर्ऋतवत्य ऋतमित्युदकनाम प्रत्यृतं भवति मुहूर्तमेवैरयनैरवनैर्वा । प्राभिह्वयामि सिन्धुं बृहत्या महत्या मनीषया मनस ईषया स्तुत्या प्रज्ञया वा्यनाय कुशिकस्य सूनुः । कुशिको राजा बभूव (निरु० २. २५) इति । रमध्वम् । 'रमु उपरमे' । उपपूर्वाद्रमतेः 'विभाषाकर्मकात्' (पा० सू० १. ३. ८५) इत्यात्मनेपदम् । ऋतावरीः ऋतशब्दान्मत्वर्थे 'छन्दसीवनिपौ' इति वनिप् । 'वनो र च' इति ङीप् रेफश्चान्तादेशः । 'वा छन्दसि' इति सवर्णदीर्घः । आमन्त्रितस्य पादादि-त्वात् षाष्ठिकमाद्युदात्तत्वम् । एवैः । 'इण् गतौ' । 'इण्शीङ्भ्यां वन्' । आर्ध-

धातुकलक्षणो गुणः । निस्वरः । बृहती मनीषा । उभयत्र तृतीयायाः पूर्वसवर्णदीर्घः । अवस्युः । अवो रक्षणमिच्छन् । सुप आत्मनः क्यच् । 'नः क्ये' इति नकारान्तस्य पदसंज्ञाया नियमितत्वादत्र सकारस्य रुत्वं भवति । 'क्याच्छन्दसि' इत्युप्रत्ययः । अह्वे । ह्वयतेर्लुङि सिचः 'आत्मनेपदेष्वन्यतरस्याम्' इत्यङादेशः । गुणः । निघातः ॥५॥

शब्दा॰ रमध्वम्=रुक जावो, मे=मेरे, वचसे=वचन के लिये, सोम्याय=सोम भरे, ऋतावरीः=ओ पवित्र जलवाली, मुहूर्तम्=थोड़े देर के लिये, एवैः=जाने से, सिन्धुम्=नदी को, अच्छ=लक्ष्य कर, बृहती=ऊंची, मनीषा=स्तुति से, अवस्युः=सहायता चाहनेवाला, प्र अह्वे=आह्वान किया हूं, कुशिकस्य=कुशिक का, सूनुः=पुत्र ।

हि॰ अ॰ ओ पवित्र जलवालो, सोम-भरे मेरे वचनो (के आदर) में अपनी यात्रा से क्षण भर के लिये रुक जावो । (अपनी) सहायता का इच्छुक, कुशिक का पुत्र (मैंने) ऊंची स्तुति से नदी (शुतुद्री) का आह्वान किया हूं ।

*Trans.*—O of holy waters, in deference to my speech, accompanied with soma, stop for a moment from your courses. With a sublime hymn, desirous of (our) protection (I) the son of Kuśika have invoked the river (Śutudrī).

*Notes*—रमध्वम् – $\sqrt{ram}$ to stop, impv. 2nd plu. एवैः—From $\sqrt{i}$ to go. अवस्युः—See किंयुः (III. 33.4.). अह्वे—$\sqrt{h\bar{u}}$ to call, 'a'-aorist, mid, 1rst. sing.

इन्द्रः । अस्मान् । अरदत् । वज्रऽबाहुः । अप । अहन् । वृत्रम् । परिऽधिम् । नदीनाम् ॥ देवः । अनयत् । सविता । सुऽपाणिः । तस्य । वयम् । प्रऽसवे । यामः । उर्वीः ॥६॥

मा॰ भा॰—नद्यः प्रत्यूचुः । हे विश्वामित्र वज्रबाहुः वज्रयुक्तौ बाहू यस्यासौ वज्रबाहुः । तादृशो बलवान् इन्द्रः नदीः अस्मान् अरदत् । रदतिः खनतिकर्मा । अखनत् । व्यभजत् । उच्यते । नदीनां शब्दकारिणीनामपां परिधिं परितो

निहितमुदकमन्तः कृत्वा परितो वर्तमानमित्यर्थः । तादृशं वृत्रम् । वृणोत्याकाशमिति वृत्रो मेघः । तं मेघम् अपाहन् जघान । तस्मिन् हते आपः पतिताः । ताभिर्गच्छन्तीभिर्वयं खाताः । एवं मेघहननद्वारेणाखनत् । न केवलमखनत् किं तर्हि सविता सर्वस्य जगतः प्रेरकः सुपाणिः शोभनहस्तः उत्पत्तिस्थितिकर्तृत्वात्तादृशः देवः द्योतमानः इन्द्रः अस्मान् अनयत् । मेघभेदनं कृत्वोदकप्रेरणेन समुद्रमपूरयत् । तस्य तादृशसामर्थ्योपेतस्य इन्द्रस्य प्रसवे अभ्यनुज्ञायां वर्तमानाः ऊर्वीः उदकैः प्रभूताः वयं यामः गच्छामः । न तव वचनादुपरमामहे । उक्तार्थं यास्को ब्रवीति – 'इन्द्रो अस्मानरदद्वज्रबाहू रदतिः खनतिकर्मापाहन्वृत्रं परिधिं नदीनामिति व्याख्यातम् । देवोऽनयत्सविता सुपाणिः कल्याणपाणिः । पाणिः पणायतेः पूजाकर्मणः प्रगृह्य पाणी देवान् पूजयन्ति । तस्य वयं प्रसवे याम उर्वीरुर्व्यः (निरु० २. २६) इति । अरदत् । रदतेर्लङि रूपम् । वज्रबाहुः बहुव्रीहौ पूर्वपदस्वरः । अहन् । हन्तेर्लङि रूपम् । निघातः । परिधिम् । 'डुधाञ् धारणपोषणयोः' इत्यस्मात् कर्मण्युपसर्गे 'घोः किः' इति किप्रत्ययः । आतो लोपः । कृदुत्तरपदस्वरः । अनयत् । नयतेर्लङिरूपम् सुपाणिः । 'पण व्यवहारे स्तुतौ च' । 'अशिपणाय्यो रुडायलुकौ च' (उ० सू० ४. ५७२) इतीण् । आयलुक् । बहुव्रीहौ 'नञ्सुभ्याम्' इति स्वरः । प्रसवे 'षू प्रेरणे' । 'ऋदोरप्' इति भावेऽप्प्रत्ययः । 'थाथघञ्क्त' इत्युत्तरपदान्तोदात्तत्वम् । यामः । 'या प्रापणे' इत्यस्य लटि रूपम् । निघातः । उर्वीः । उरुशब्दात् 'वोतो गुणवचनात्' इति ङीप् । 'वा छन्दसि' इति सवर्णदीर्घः । प्रत्ययस्वरः ।

शब्दा०—इन्द्रः=इन्द्र ने, अस्मान्=हम लोगों को, अरदत्=खोदकर बाहर किया, वज्रबाहुः=हाथ में वज्र धारण करनेवाले ने, अप अहन्=मारा, वृत्रम=वृत्र नामक असुर को, परिधिम्=घेरनेवाला, नदीनाम्=नदियों का, देवः=देव ने, अनयत्=लाया, सविता=सवितृ ने, सुपाणिः=सुन्दर हाथवाले, तस्य=उनकी, वयम्=हमलोग, प्रसवे=आज्ञा में, यामः=जा रही हैं, उर्वीः=चौड़ी ।

हि० अ०—हाथ में वज्र धारण करनेवाले इन्द्र ने हमको खोद कर बाहर किया । उसने नदियों को घेरनेवाले वृत्र को मारा । सुन्दर हाथवाले सवितृ देव ने हम लोगों को लाया । हम जितनी चौड़ी हैं, उसी की आज्ञा में (निरन्तर) बहती हैं ।

*Trans*—The thunder-armed Indra drag us out. He slew the Vṛtra the encompasser of the rivers.

Beautiful-handed god Savitar led us  We flow, broad as we are, in his command

*Notes*—अस्माँ अरदत्—For sandhi see Appendix A under आन्पद पद-वृत्ति  अरदत्—√*rad* to dig, impf  3rd sing  अहन्—See I 32 1 परिधिम्—From √*dhā* with परि to surround  अनयत्—√*nī* to lead, impf  3rd sing  याम—√*ya* to go, pres 1rst plu

प्र॒ऽवाच्यं॑म् । शश्व॒धा । वी॒र्यं॑म् । तत् । इन्द्र॑स्य । कर्म॑ । यत् ।
अहि॑म् । वि॒ऽवृ॒श्चत् ॥ वि । वज्रे॑ण । प॒रि॒ऽसदः॑ । ज॒घा॒न॒ ।
आय॑न् । आपः॑ । अय॑नम् । इ॒च्छमा॑नाः ॥७॥

सा० भा०—योऽयमिन्द्र अहिं मेघं विवृश्चत् उदकप्रेरणार्थं जघानेति यत् कर्म छेदनरूपं तत् इदम् तस्य इन्द्रस्य वीर्यं सामर्थ्यं शश्वधा सर्वदा प्रवाच्यं प्रकर्षेण वचनीयम् । तथा स इन्द्र परिषद परितः सीदत आसीनान् प्रतिबन्धकारिणोऽसुरान् वज्रेण वि जघान । अथ अयनं स्थानम् इच्छमाना इच्छन्त्य आप आयन् यान्ति । प्रवाच्यम् । 'वच परिभाषणे' इत्यस्मात् 'ऋहलोर्ण्यत्' इति ण्यत् । णित्त्वादुपधावृद्धि । 'वचोऽशब्दसंज्ञायाम्' (पा० सू० ७ ३ ६७) इति कुत्वाभाव । व्यत्ययेनाद्युदात्तत्वम् । यद्वा वाचयते 'अचो यत्' । 'यतोऽनाव' इति स्वर । शश्वधा । शश्वच्छब्दात् स्वार्थे धाप्रत्ययस्तकारलोपश्च द्रष्टव्य । विवृश्चत् । 'ओव्रश्चू छेदने' । तुदादि । लङि 'ग्रहिज्यावयि' इत्यादिना सम्प्रसारणम् । 'सह सुपा' इत्यत्र सहेति योगविभागात् समास । समासस्वर । परिषद । क्विप् । संहितायां 'सदिरप्रतेः' इति षत्वम् । जघान हन्तेर्लिटि णलि रूपम् । निघात । आयन् । 'अय गतौ' इत्यस्य लङि रूपम् । पादादित्वादनिघात । इच्छमाना । इषु इच्छायाम् इत्यस्मात् व्यत्ययेन शानच् । तस्य लसार्वधातुकस्वरे कृते प्रत्ययस्वर ॥

शब्दा० प्रवाच्यम्—कहने योग्य, शश्वधा=सर्वदा, वीर्यम्=पराक्रमयुक्त, तत्=यह, इन्द्रस्य=इन्द्र का, कर्म=कार्य, यत्=जो, अहिम्=अहि नामक असुर को जिसने जल को रोक रखा था, विवृश्चत्=काट डाला, वज्रेण=वज्र से, परिसदः=प्रतिबन्धकों को, वि जघान=मारा, आयन्=प्रवाहित हुआ, आपः=जल, अयनम्=मार्ग, इच्छमानाः=ढूँढ़ता हुआ ।

हि० अ०—इन्द्र का यह पराक्रम युक्त कार्य, जो उसने अहि को मारा, अवश्य कहने योग्य है। उसने वज्र से (जल के) प्रतिबन्धको को काट डाला। जल अपना मार्ग खोजता हुआ प्रवाहित हुआ।

*Trans*—That heroic deed of Indra that he rent into pieces the dragon, must be proclaimed for ever He smote away the obstructors (of waters) with his thunderbolt Waters flowed seeking their way

*Notes*—प्रवाच्यम्—Gerundive in य from √*vac* to speak वीर्यम्—See वीर्याणि (I 32 1), also see note on उपघ्यम् (I 48 12) विवृश्चत्—√*vraśc* to cut up, impf 3rd sing, not unaccented because preceded by यत् जघान—See I 32 7 आयन्—√*i* to go, impf 3rd plu; not unaccented because it begins the Pāda अयनम्—Way, course, from √*i* to go इच्छमाना—√*icch* to desire, pass part

एतत् । वचः । जरितः । मा । अपि । मृष्ठाः । आ । यत् । ते । घोषान् । उत्ऽतरा । युगानि ॥ उक्थेषु । कारो इति । प्रति । नः । जुषस्व । मा । नः । नि । करिति कः । पुरुषऽत्रा । नमः । ते ॥८॥

सा० भा०—नद्य प्रसङ्गादिन्द्रस्तोत्रं कृत्वा विश्वामित्रं प्रत्यूचु । जरित स्तोत हे विश्वामित्र ते त्वदीय यत् संवादात्मक वच त्वं न अभीत्या घोषान् उद्घोषयन् वर्तसे तद्वच मापि मृष्ठा मा विस्मार्षी । किं कारणम् । उत्तरा युगानि उत्तरेषु याज्ञिकेषु युगेषु अहःसु उक्थेषु कारो शस्त्राणा कर्तस्त्व न अस्मान् प्रति जुषस्व संवादात्मकेन तेन वाक्येन प्रतिसेवस्व । इदानीं न अस्मान् पुरुषत्रा पुरुषेषु मा नि क । उचितप्रत्युक्तिरूपसंवादवाक्याध्यापनेन नितरा पुवत् प्रागल्भ्यं मा कार्षी । [illegible] तुभ्य नम । मृष्ठा । 'मृजूष् शुद्धौ' इत्यस्य लुङि व्यत्ययेन आत्मनेपदम् । अदादित्वाच्छपो लुक् । व्रश्चादिना षत्वम् । निघात । घोषान् । घुषिर् सशब्दने' इत्यस्य शतरि सर्वविधीनां छन्दसि विकल्पितत्वात् 'अतो गुणे' इति पररूपत्वाभाव । सवर्णदीर्घ ।

धातुर्लसार्वधातुकस्वरे कृते धातुस्वर । युगानि । 'युजिर् योगे' । उञ्छादिषु घञन्तत्वेन निपातनादगुणत्वम् । विशिष्टविषय च निपातनमिष्यते । 'कालविशेषे रथाद्युपकरणे च' इति तत्र पाठादेवान्तोदात्तत्वम् । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । कारो । करोते 'कृवापाजिमि' इत्यादिना उण्प्रत्यय । आमन्त्रितत्वान्निघात । क करोतेर्लुङि च्ले 'मन्त्रे घस' इत्यादिना लुक् । हल्ङ्यादिना सिचो लोप । 'न माङ्योगे' इत्यडभाव । पुरुषत्रा । 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सप्तम्यर्थे त्राप्रत्यय । प्रत्ययस्वर ॥

शब्दा०—एतत=इस, वच =वचन को, जरित =ओ स्तुतिगायक, मा=मत, अपि=कभी भी, मृष्ठा =भूलो, यत्=जिससे, ते=तुम्हारे वचन को, आ घोषान्=सुन सकें, उत्तरा=भावी, युगानि=युगो के व्यक्ति, उक्थेषु=स्तुतियों में, कारो=ओ कवि, प्रति=लिये न =हमारे, जुपस्व=आदर करो, मा=मत, न =हमलोगों को, नि क =नीचे करो, पुरुषत्रा=पुरुषो में, नम =नमस्कार है, ते=तुमको ।

हि० अ०—ओ स्तुति गायक, इस वचन को मत भूलो ताकि भावी युगो के लोग इसे सुन सकें । ओ कवि, अपनी स्तुतियो में हमारा आदर रखो । हमलोगो को (उचित प्रस्तुति द्वारा) मनुष्यो (की कोटि) में मत लावो, (हम लोगो का) तुम्हें नमस्कार है ।

*Trans* —O singer, never forget this word of thine (so) that (men of) future ages may hear it O poet, in prayers be favourable to us ; Do not make us down amongst men , we bow unto thee

*Notes*—जरित—Voc sing of जरितृ from √jr to sing मृष्ठा —√mrs to forget, root aorist, 2nd sing injun घोषान्—√ghus with आ to listen, pres subju 3rd plu , not unaccented because preceded by यत् Sayana takes घोषान् as a participle and renders as 'उद्घोषयन्'; Grassmann takes घोषान् to mean 'proclaim loudly', Geldner as 'listen', Wilson as 'words' Griffith as 'reecho' and Peterson as 'listen'. कारो—

Final ओ is *Pragṛhya only before* इति in the Pada-text (सम्बुद्धौ शाकल्यस्येतावनार्षे—Pāṇ I. 1.16). प्रति जुषस्व—√*juṣ* with प्रति to show affection to, to be favourable, impv. mid. 2nd. sing. कः—√*kṛ* to make, root-aorist injun. 2nd. sing. Vide Appendix 'B' under the rules of rendering Saṁhitā-text into Pada-text. पुरुपत्रा —*See note on* पुरुत्रा (*I. 32.7*).

ओ इति। सु। स्वसारः। कारवे। शृणोत। ययौ। वः। दूरात्। अनसा। रथेन। नि। सु। नमध्वम्। भवत। सुऽपाराः। अधःऽअक्षाः। सिन्धवः। स्रोत्याभिः ॥९॥

सा० भा०—विश्वामित्रो नदीः प्रत्युवाच। स्वसारः भगिन्यः सिन्धवः हे नद्यः कारवे स्तोत्रं कुर्वाणस्य मम वचनं सु सुष्ठु ओ शृणोत शृणुतेव। अनसा शकटेन रथेन च सह दूरात् विप्रकृष्टाद्देशात् वः युष्मान् ययौ प्राप्तोऽस्मि। यूयं सु सुष्ठु नि नमध्वम् आत्मना स्वयं प्रह्वाः भवत। तथा सुपाराः रथादीनां तीरात् सुखेनावरोहणावरोहणे यथा स्यातां तथा शोभनरोधसश्च भवत। किंच यूयं स्रोत्याभिः स्रवणशीलाभिरद्भिः अधोअक्षाः रथाङ्गस्याक्षस्याधस्ताद्भवत। यदापोऽक्षस्याधस्ताद्भवन्ति तदा रथादीनि नेतुं शक्यन्ते। तस्मात् तत्परिमाणोदकाः भवतेति अर्थाभिप्रायः। ओ इति प्रगृह्यसंज्ञा। शृणोत। 'श्रु श्रवणे' इत्यस्य लोटि तप्रत्ययस्य 'तप्तनप्तनथनाश्च' इति तबादेशः। पित्त्वाद्गुणः। निघातः। ययौ। 'या प्रापणे' इत्यस्य भूतमात्रे लिट्युत्तमे णलि 'आत औ णलः' इत्यौकारः एकादेशस्वरः। वः। युष्मच्छब्दस्य द्वितीयायाः 'बहुवचनस्य वस्नसौ' इति वसादेशः। सू। 'निपातस्य' इति संहितायां दीर्घः। नमध्वम्। 'णमु प्रह्वत्वे शब्दे च' इत्यस्य कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' इति प्रतिषेधात् यगभावः। अधोअक्षाः अधरशब्दस्य 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसिप्रत्ययेऽधादेशश्च। अक्षशब्दः 'अशूङ् व्याप्तौ' इत्यस्मात् 'अशेर्देवने' (उ० सू० ३. ३४५) इति सप्रत्ययान्तः। कृदुत्तरपदप्रकृतिस्वरः। सिन्धवः। आमन्त्रितत्वान्निघातः। स्रोत्याभिः। स्रोतःशब्दात् 'स्रोतसो विभाषा ड्यड्ड्यौ' (पा० सू० ४. ४ ११३) इति ड्यप्रत्ययः। डित्त्वात् टिलोपः। प्रत्ययस्वरः॥

शब्दा०—ओ=सम्बोधन का वाचक, स्वसारः=ओ बहनों, कारवे=

कवि की बात, शृणोत=सुनो, ययौ=आया हूं, व =तुम लोगो के पास, दूरात् =बहुत दूर से, अनसा=गाडी से, रथेन=रथ से सु=अच्छी प्रकार, नि नमध्वम् =नीचे झुक जावो, भवत=हो जावो, सुपारा =आसानी से पार करने योग्य, अधोअक्षाः=चक्के के धूरे से नीचे होकर, सिन्धव =ओ नदियों, स्रोत्याभि =अपनी जलधारा से ।

हि० अ०—ओ सुन्दर बहनो, (मुझ) कवि की (बात) सुनो, (क्योकि मैं) तुम्हारे पास बहुत दूर से गाडी तथा रथ के साथ आया हूं । अच्छी प्रकार से झुक जावो । ओ नदियो, अपनी जलधारा से अक्ष के नीचे होकर (बहती हुई) आसानी से पार करने योग्य हो जावो ।

*Trans* —O fair sisters, listen to (me) the poet; (I) have come to you from afar with cart and chariot Please bend down well and be easily crossable, O rivers, with streams (reaching) below the axle

*Notes*—ओ—(=आ+उ) as an independent word ओ is Pragrhya (मद चाप्य—Rg Prāt I 69), hence, इति is added after it in the Pada text शृणोत—$\sqrt{}$*śru* to hear, impv 2nd plu ययौ—$\sqrt{}$*yā* to go, perf 1rst sing, not unaccented because it begins the Pāda नमध्वम्–$\sqrt{}$nam to bend, mid impv 2nd plu भवत—$\sqrt{}$*bhū* to be, impv 2nd plu , not unaccented because it is regarded as beginning of a new sentence

आ । ते । कारो इति । शृणवाम । वचांसि । ययाथ । दूरात् ।
अनसा । रथेन ॥ नि । ते । नंसै । पीप्यानाऽइंव । योषां ।
मर्यायऽइव । कन्यां । शश्वचै । तु इतिं ते ॥१०॥

सा० भा०—नद्य पूर्वं विश्वामित्र प्रत्याख्यायानयर्चा तस्य वाक्यमाशुश्रुवु । कारो स्तोत्र कुर्वाण हे विश्वामित्र ते तव वचासि इमानि वाक्यानि आ शृणवाम शृणुम । तव समीहित प्रयोजन कुर्म इत्यर्थ । अनसा शकटेन रथेन च सह ययाथ । यतो दूरात् आगतोऽसि । वय च ते त्वदर्थं नि नसै नीचैर्नमाम । प्रत्येकविवक्षया अर्थंवचनम् । रथेन गन्तु यावोदका भवामेत्यर्थ । तत्र

दृष्टान्त । पीप्यानेव योषा । पीप्याना पुत्रं स्तनं पाययन्ती योषा माता यथा प्रह्वीभवति । दृष्टान्तान्तरम् । यथा कन्या युवति मर्यायेव मनुष्याय पित्रे भ्रात्रे वा शश्वचै परिष्वजनाय नम्रीभवति तद्वत् ते त्वदर्थं प्रह्वीभवाम । ते इति पुनरुक्तिरादरार्थम् । एतामृच यास्क एव व्याचष्टे—'आशृणवाम ते कारो वचनानि याहि दूरादनसा च रथेन च निनमाम ते पाययमानेव योषा पुत्र मर्यायेव कन्या परिष्वजनाय निनमा इति वा' (निरु० २ २७) इति । कारो । 'सम्बुद्धौ शाकल्यस्येतौ' (पा० सू० १. १ १६) इति प्रगृह्यसंज्ञा । शृणवाम । 'श्रु श्रवणे' इत्यस्य लोटि 'आडुत्तमस्य पिच्च' इत्याडागम । पित्वात् गुण । निघात । ययाथ । या प्रापणे' इत्यस्य भूतमात्रे लिटि थलि 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेध । लित्स्वर । अनसा । सहार्थे तृतीया । नसै । 'णमु प्रह्वत्वे' इत्यस्य लेटयुत्तमे लेटि सिब्बहुलमिति सिप् । 'वैतोऽन्यत्र' इत्यैकारादेश । निघात । पीप्यानेव । 'पीङ् पाने' इत्यस्यान्तर्भावितण्यर्थस्य लिटि कानचि रूपम् । चित्स्वर । योषा । 'यु मिश्रणे' । 'वृतुवदिहनि' (उ० सू० ३ ३४२) इत्यादिना सप्रत्यय । यौतीति योषा । वृषादित्वादाद्युदात्त । शश्वचै । 'ष्वञ्ज परिष्वङ्गे' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । पृषोदरादित्वादिष्टरूपसिद्धिरन्तोदात्तश्च ॥१०॥

शब्दा०—ते=तुम्हारी, कारो=ओ कवि, आ शृणवाम=सुनती हैं, वचांसि=बातों को ययाथ=आये हो, दूरात्=दूर से, अनसा=गाडी से, रथेन=रथ से, ते=तुम्हारे लिये, नि नंसैः=नीचे झुकती हूँ, पीप्यानेव=दूध भरे स्तनवाली की तरह, योषा=औरत,मर्यायेव=जैसे प्रेमी के लिये, कन्या=युवती, शश्वचै=आलिंगन करने के लिये, ते=तुम्हारे लिये ।

हि० अ० ओ कवि, हम तुम्हारी बातें सुनती हैं, (क्योंकि तुम) बहुत दूर से गाड़ी तथा रथ के साथ आये हो । तुम्हारे लिये मैं नीचे झुकती हूँ जैसे दूध भरे स्तनवाली औरत (अपने पुत्र के लिये) तथा जैसे युवती अपने प्रेमी का आलिंगन करने के लिये (झुकती है) ।

*Trans* —O poet, we listen your words, (for) you have come from afar with cart and chariot I bend down for thee as a woman with swelling bossom (for her son), as a maiden to embrace her lover

*Notes*—शृणवाम—$\sqrt{sru}$ to hear, pres subju Irst. plu ययाथ—$\sqrt{ya}$ *to go*, perf 2nd plu , not unaccented

because it begins the Pāda नंसै—√*nam* to bend, 'a'-aorist, mid 1rst. sing subju पीप्याना—√*pyā* to swell, perf part. fem मर्याय—Man (Nigh II 3 11, Sāyana), 'lover' (Griffith, Peterson). शश्वचै—Sāyana takes it as dative infinitive from √*śvac* to embrace, according to Macdonell, Peterson etc it is verbal form (perf mid 1rst sing subju) not unaccented because it begins a new sentence ते—Vide Appendix 'B' II 6. (d)

यत् । अङ्ग । त्वा । भरताः । सम्ऽतरेयुः । गव्यन् । ग्रामः ।
इषितः । इन्द्रऽजूतः ॥ अर्षात् । अह । प्रऽसवः । सर्गऽतक्तः ।
आ । वः । वृणे । सुऽमतिम् । यज्ञियानाम् ॥११॥

सा० भा०—विश्वामित्रो नदी प्रत्युवाच । अङ्ग इत्यामन्त्रणे । हे नद्यौ यत् यस्मात् युष्माभिरुत्तितीर्षोर्ममोत्तरणमभ्यनुज्ञातं तस्मात् भरताः भरतकुलजा मदीया सर्वे त्वा परस्परमेकतामापन्ना नदीं त्वा संतरेयुः सम्यगुत्तीर्णा भवेयुः । तदेव विशिनष्टि । गव्यन् गा उदकानि तरीतुमिच्छन् इषितः त्वयाभ्यनुज्ञात इन्द्रजूतः युष्माकं प्रवर्तकेनेन्द्रेण च प्रेरित ग्रामः भरतानां संघ अर्षात् संतरेत् । यत सर्गतक्तः गमनाय प्रवृत्त प्रसवः तेषामुद्योग अह पूर्वं युष्माभिरनुज्ञात । अह तु यज्ञियानां यज्ञार्हाणां वः युष्माकं सुमतिं शोभनां स्तुतिम् आ वृणे सर्वतः सभजे । भरता । भरतशब्दात्तुत्सादित्वादञ् । तस्य 'यञञोश्च' इति लुक् । अतएव प्रत्ययस्वरः । संतरेयु । तरतेर्लिङि झुसि रूपम् । शेषेऽसार्वधातुकस्वरे धातुस्वर । 'तिङि चोदात्तवति' इति गतेर्निघात । गव्यन् । गा आत्मन इच्छन् । सुप क्यच् । एकादेशस्वर । ग्राम । 'ग्रसितेरा च' (उ० सू० १ १४०) इति मन्प्रत्यय आकारादेशश्च । नित्स्वर । इन्द्रजूत । जू इति सौत्रो धातुर्गत्यर्थ । 'श्र्युक किति' इति निष्ठायामिट्प्रतिषेध । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वर । अर्षात् । 'ऋ गतौ' इत्यस्य लेटि तिपि 'सिब्बहुलम्' इति सिप् । लेट आडागम । 'एकाच' इतीट्प्रतिषेध । गुण । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वर । वृणे । 'वृङ् संभक्तौ' इत्यस्य लटि रूपम् । यज्ञियानाम् । 'यज्ञर्त्विग्भ्यां घखञौ' इति घप्रत्यय । प्रत्ययस्वर ।

शब्दा०—यत्=चकि तुम्हारी अनुमति मिल गई है इसलिये, अङ्ग=सम्बोधन का वाचक शब्द, त्वा=तुमको, भरताः=भरतवंशी विश्वामित्र तथा

उनके अनुयायी, संतरेयुः=एक साथ पार करें, गव्यन्=पार जाने की इच्छा- वाला, ग्रामः=झुण्ड, इषित=तुम्हारे द्वारा अनुज्ञात, इन्द्रजूतः=इन्द्र द्वारा भेजा गया, अर्षात्=बहे, अह=एक निपात, प्रसवः=प्रवाह, सर्गतक्तः= स्वाभाविक रूप से प्रवाहित, व=तुम्हारी, आवृणे=चाहता हूँ, सुमतिम्= समयन करनेवाली सुन्दर मति, यज्ञियानाम्=पवित्र नदियों की।

हिं० अ०—ओ (नदियो), चूंकि (तुम्हारी अनुमति मिल गई है इस- लिये) भरतवंशी (हमलोग) तुमको पार करें, पार जाने की इच्छावाला (तुम्हारे द्वारा) अनुज्ञात एवं इन्द्र द्वारा भेजा गया, (भरत वंशियों का) झुण्ड (पार करे)। (तुम्हारा) प्रवाह अपनी स्वाभाविक गति से प्रवाहित होता हुआ, बहे। मैं पवित्र नदियों का समयन चाहता हूँ।

*Trans*—O (rivers), since (you have allowed me, so) may Bharatas cross (the rivers), may the band (of Bharatas), seeking to cross (pass over) allowed (by thee) and sped by Indra May the torrent flow rushing in its natural urge I seek the favour of holy ones

*Notes*—अह—A particle of address Macdonell takes it as an emphatic particle and renders it as 'just when', 'just because' संतरेयु—√तॄ to cross, opt 3rd plu, not unaccented because preceded by यत् गव्यन्—'Seeking to cross the water' (Sayana), 'cow seeking' (Peterson) इन्द्रजूतः—जूत is past part from √ju to speed For accent see इन्द्रेषित (III 33 2) अर्षात्— √rs to rush, pres subju 3rd sing वृणे—√vr to choose, pres mid 1rst sing

अतारिषुः। भरताः। गव्यवः। सम्। अभक्त। विप्रः। सुऽमतिम्। नदीनाम्॥ प्र। पिन्वध्वम्। इषयन्तीः। सुऽराधाः। आ। वक्षणाः। पृणध्वम्। यात। शीभम्॥१२॥

सा० भा०—गव्यव गा आत्मन इच्छन्त भरता भरतकुलजा सर्वे अतारिषु ता नदीं समतरन् विप्रः मेधावी विश्वामित्र नदीनां सुमति शोभना स्तुति समभक्त समभजत । यूय यथापूर्वम् इषयन्ती कुल्यादिद्वारा अन्न कुर्वाणा अत एव सुराधाः शोभनधनोपेता यूय वक्षणाः कृत्रिमसरित कुल्या पिन्वध्वं प्रकर्षेण तर्पयत । आ पृणध्वं ता सर्वत पूरयत च । शीभं शीघ्र यात गच्छत च । अतारिषु । 'तृप्लवनतरणयो' इत्यस्य लुङि 'सिचि वृद्धि परस्मैपदेषु' इति वृद्धि । अडागमस्वर । गव्यव । सुप क्यच् । 'क्याच्छन्दसि' इत्युप्रत्यय । तस्य स्वर । अभक्त । 'भज सेवायाम्' इत्यस्य लुङि सिच 'झलो झलि' इति लोप । पादादित्वादनिघात । पिन्वध्वम् । 'पिवि सेचने' इत्यस्य लोटि रूपम् । निघात । इषयन्ती । इष कुर्वत्य । 'तत्करोति' इति णिच् । 'णाविष्ठवत्प्रातिपदिकस्य' इति इष्ठवद्भावात 'टे' इति टिलोप । 'वा छन्दसि' इति सवर्णदीर्घ । प्रत्ययस्वर । पृणध्वम् । 'पृण प्रीणने' । लोटि रूपम् । व्यत्ययेनात्मनेपदम् । वाक्यभेदादनिघात । यात । 'या प्रापणे' इत्यस्य लोटि रूपम । अत्रापि न निघात । शीभम् । 'शीभृ कत्थने' । श्लाघ्यतेऽनेन तद्वानिति करणे घञ् । ञित्स्वर ॥१२॥

शब्दा०—अतारिषुः=पार कर लिया, भरताः=भरतवंशियों ने, गव्यवः =पार जाने की इच्छावाले, समभक्त=प्राप्त कर लिया, विप्रः=ब्राह्मण ने, सुमतिम्=समर्थन, नदीनाम्=नदियो का, प्र पिन्वध्वम्=प्रवाहित होवो, इषयन्तीः=धन लाती हुई, सुराधाः=सुन्दर धनवाली तुमलोग, वक्षणाः= अपनी जगह पर, आ पृणध्वम्=भर जावो, यात=बहो, शीभम्=शीघ्रता से।

हि० अ०—पार जाने की इच्छावाले भरतवंशियों ने पार कर लिया, ब्राह्मण ने नदियों का समर्थन प्राप्त कर लिया । सुन्दर धनवाली (तुमलोग) धन लाती हुई अपनी जगह पर प्रवाहित होवो, भर जावो, शीघ्रता से बहो ।

*Trans*—The Bharatas, seeking to cross the waters, have crossed, the poet has found the favour of the rivers (You) possessing of excellent riches, bringing food, swell forth in your bed, overflow, go swiftly

*Notes*—अतारिषु — √*tṛ* to cross, 'iṣ' aorist 3rd plu अभक्त — √*bhaj* to divide, mid 's' aorist, 3rd sing पिन्वध्वम् — √*pinv* to swell, mid, impv 2nd plu इषयन्ती —Sāyana takes it as denom and renders 'अन्न

कुर्वाणा': Macdonell and Peterson take it as caus. part. from $\sqrt{}$*is*. Wilson takes it to mean 'dispersing food', Griffith as 'hastening' and Peterson as 'enlivening'. सुराधाः—Possessing excellent wealth; Bahuvrihi compd. वक्षणा—River-bed. (see I. 32.1). पृणध्वम्—$\sqrt{}$*prṇ* to fill, mid. impv. 2nd. plu.; not unaccented because it is regarded as a new sentence. यात—$\sqrt{}$*yā* to go impv. 2nd. plu.; not unaccented because it begins a new sentence.

उत्। वः। ऊर्मिः। शम्याः। हन्तु। आपः। योक्त्राणि। मुञ्चत॥ मा। अदुःऽकृतौ। विऽएनसा। अघ्न्यौ। शूनम्। आ। अरताम् ॥१३॥

सा० भा०—पूर्वमुत्तितीर्षुर्विश्वामित्रो नदीःस्तुत्वा अधुना उत्तितीर्षुः पुनराह। हे नद्यः वः युष्माकम् ऊर्मिः तरङ्गः शम्याः युगयकाष्ठपार्श्वविलेलग्ना रज्जवः उत् ऊर्ध्वं यथा भवन्ति तथा हन्तु गच्छतु। स तरङ्गो रज्जूनामधो गच्छत्विसर्थभिप्रायः। तथा हे आपः यूयं योक्त्राणि ता रज्जूः मुञ्चत। यथा न स्पृशन्ति तथा यान्त्वित्यभिप्रायः। व्येनसा विगतपापे अत एव अदुष्कृतौ कल्याणकर्मकारिण्यौ अघ्न्यौ अघ्न्ये न केनापि तिरस्करणीये विपाट्छुतुद्र्यौ शूनं समृद्धिं मा आरताम् आगच्छताम्। एवं विश्वामित्रो नदीः स्तुत्वा ताभिरनुज्ञातोऽस्तरदिति। ऊर्मिः। 'ऋ गतौ'। 'अर्तेरूच्च' इति मिप्रत्ययः। 'ऊः' इत्ययमादेशो धातोः। ऋच्छतीत्यूर्मिः। प्रत्ययस्वरः। शम्याः। 'शमु उपशमे'। 'पोरदुपधात्' इति यत्प्रत्ययः। 'यतोऽनावः' इत्याद्युदात्तत्वम्। हन्तु। 'हन हिंसागत्योः' इत्यस्य लोटि रूपम्। निघातः। योक्त्राणि। 'युजिर् योगे'। करणे 'दाम्नीशसयुयुज' इत्यादिना ष्ट्रन्प्रत्ययः। नित्स्वरः। मुञ्चत। 'मुच्लृ मोक्षणे'। निघातः। अदुष्कृतौ। 'इदुदुपधस्य चाप्रत्ययस्य'। 'इसुसोः सामर्थ्ये' इति विसर्जनीयस्य षत्वम्। व्येनसा। बहुव्रीहौ पूर्वपदस्वरः। सुपो डादेशः। अघ्न्यौ। 'हन हिंसागत्योः' इत्यस्य नञ्पूर्वस्य 'अघ्न्यादयश्च' इति निपातनात् यक्। कित्त्वादुपधालोपः। 'हो हन्तेः' इति घत्वम्। सर्वविधीनां छन्दसि विकल्पितत्वादत्र औङः शीभावाभावः। एकादेशस्वरः। शूनम्। श्वयतेः 'नपुंसके भावे क्तः' इति क्तः। यजादित्वात्

संप्रसारणम् । 'हलः' इति दीर्घत्वम् । 'ओदितश्च' इति निष्ठानत्वम् । 'निष्ठा च द्व्यजनात्' इत्याद्युदात्तः । अरताम् । 'ऋ गतौ' इत्यस्य लुङि च्लेः 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङादेशः । 'ऋदृशोऽङि गुणः' । 'न माङ्योगे' इत्यडभावः । निघातः ॥

शब्दा०—वः=तुम्हारी, ऊर्मिः=धारा, शम्याः=जुवा की कील को, उत् हन्तु=ऊपर से आघात करे, अर्थात् जुवा की कील के नीचे से बहे, आपः=जल, योक्त्राणि=रस्सियों को, मुञ्चत=छोड़ दे, मा=मत, अदुष्कृतौ=कुकृत्यों से रहित, व्येनसा=पापरहित, अघ्न्यौ=तिरस्कार न करने योग्य, शूनम्=वृद्धि, आ अरताम्=प्राप्त करें ।

हि० अ०—तुम्हारी धारा जुवा की कील के नीचे से बहे; जल रस्सी को छोड़ दे, दुष्कृतों से रहित, पाप रहित, तथा तिरस्कार न करने योग्य (ये नदियाँ) वृद्धि न प्राप्त करें ।

*Trans.*—Let your torrent strike up the yoke-pins (from below). Let the waters leave the yokes. Let not (the rivers), free from evil deeds, sinless, and not to be censured, show increase.

*Notes*—मुञ्चत्—√*muc* to release, injun. 3rd. plu. शूनम्—'Increase', 'prosperity' (Sāyaṇa) 'waste' (Griffith) 'privation' (Peterson). अरताम्—√ṛ to go, 'a'-aorist impv. 3rd. dual.

'अयमिह' इत्येकादशर्चं सप्तमं सूक्तं वामदेवस्यार्षमाग्नेयम् । आद्या जगती द्वितीयाद्याः पञ्चानुष्टुभः शिष्टास्त्रिष्टुभः । तथा चानुक्रान्तम्—'अयमिहादौ जगती पञ्चानुष्टुभः' इति । सूक्तविनियोगो लैङ्गिकः । अग्निप्रणयने 'अयमिह' इति वैश्यस्य प्रतिपत् । तथा च सूत्रितम्—'अयमिह प्रथमो धायि धातृभिरिति तु राजन्यवैश्ययोराद्ये' (आश्व० श्रौ० २. १७) इति ।

अ॒यम् । इ॒ह । प्र॒थ॒मः । धा॒यि॒ । धा॒तृऽभिः॑ । होता॑ । यजि॑ष्ठः । अ॒ध्व॒रेषु॑ । ईड्यः॑ ॥ यम् । अप्न॑वानः । भृग॑वः । वि॒ऽरु॒रु॒चुः । वने॑षु । चि॒त्रम् । वि॒ऽभ्व॑म् । वि॒शेऽवि॑शे ॥१॥

सा० भा०—धातृभिः यज्ञार्थं कर्म कुर्वद्भिरध्वर्युभिः इह अस्मिन् यज्ञे होता देवानामाह्वाता यजिष्ठः अतिशयेन यष्टा अध्वरेषु यागेषु ईड्य ऋत्विग्भिः स्तूयमानः प्रथमः सर्वेषां देवानां मुख्यः अयम् आहवनीयादिस्थानेषु प्रत्यक्षेणोपलभ्यमानोऽग्निः धायि अधायि निहितः । दधातेः कर्मणि लुङ् । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । 'तिङ्ङतिङः' इति निघातः । अयमग्निरित्युक्तम् । कोऽसावग्निरित्यत आह । अप्नवानः भृगुसंबन्धी कश्चिदृषिः । स चान्ये भृगवः च वनेषु अरण्येषु चित्रं दावाग्निरूपेण बहुधा दर्शनीयं विशेविशे । वीप्सया सर्वजनव्याप्तिर्गृह्यते । सर्वस्या विशः प्रजायाः विभ्वं विभुमीश्वरं यं देवानां हविर्वाहकत्वेन प्रसिद्धमग्निं विरुरुचुः दीप्तियुक्तं कुर्वन्ति स्म । यमिति यच्छब्दस्यायमिति इदंशब्देन संबन्धः ॥

शब्दा०—अयम्=यह, इह=यहां यज्ञवेदी पर, प्रथमः=सभी देवताओं से पहिले, धायि=रखा गया है, धातृभिः=यज्ञ संपादन करनेवालों के द्वारा, होता=होता नामक ऋत्विज, यजिष्ठः=श्रेष्ठ यज्ञकर्ता, अध्वरेषु=यज्ञों में, ईड्यः=पूजने योग्य, यम्=जिसको, अप्नवानः=अप्नवान नामक ऋषि, भृगवः=भृगुवंशी ऋषियों ने, विरुरुचुः=प्रज्वलित किया है, वनेषु=वनों में, चित्रम्=चमकनेवाला, विभ्वम्=व्याप्त रहनेवाला, विशेविशे=प्रत्येक घर में ।

हि० अ०—होता, श्रेष्ठ यज्ञकर्ता, यज्ञ में पूजने योग्य, यह (अग्नि), यज्ञ संपादन करनेवालों के द्वारा (सभी देवताओं से) पहिले, यहां (यज्ञवेदी

पर) रखा गया है। जिसको अप्नवान तथा भृगु परिवार के ऋषियों ने प्रज्वलित किया है, (जो) वन में (दावाग्नि के रूप में) चमकनेवाला तथा प्रत्येक घर में व्याप्त रहनेवाला (है)।

*Trans*—This (Agni), the invoker, the best sacrificer, to be praised at sacrifices, has been placed first, here (at the sacrificial altar) by the supporters of the sacrifices Whom, Apnavāna and the seers of the family of Bhrgu have lighted, the bright coloured in the forests, omnipresent in every dwelling

*Notes*—धायि—√*dhā* to put pass aorist, 3rd sing The augment (अ) has been dropped even without prohibitive particle मा ईड्य—Gerundive in य from √*id* to praise विरुरुचु—√*ruc* to shine, perf 3rd plu, not unaccented because preceded by यम् विशे-विशे—Iterative compd accented on the first member.

अग्ने । कृदा । ते । आनुपक् । भुवंत् । देवस्य । चेतंनम् ॥ अधं । हि । त्वा । जगृभ्रिरे । मर्तासः । विक्षु । ईड्यंम् ॥२॥

सा० भा०—हे अग्ने अध अत कारणात् देवस्य द्योतमानस्य ते तव सर्वान्य चेतन तेज कदा आनुपक अनुषक्त भुवत् भवेत्। लेट्यडागम। 'बहुल छन्दसि' इति विकरणस्य लुक्। 'भूसुवोस्तिङि' इति गुणप्रतिषेध। अत कारणादित्युक्तम्। कस्माद्धेतोरित्युच्यते। हि यस्मात् कारणात् मर्तास· मनुष्या विक्षु विडभि प्रजाभि ईड्यं स्तुत्य त्वा त्वां जगृभ्रिरे जगृहिरे गृह्णन्ति। ग्रहेर्यातोर्लिटि 'हृग्रहोर्भ' इति भत्वम्। 'बहुल छन्दसि' इति रुडागम॥

शब्दा०—अग्ने=ओ अग्नि, कदा=कब, ते=तुम्हारा, आनुपक्=निर्बाध रूप से, भुवत्=प्रकट होगा, देवस्य=देव का, चेतनम्=तेज, अध=इसी कारण से, हि=क्योंकि, त्वा=तुमको, जगृभ्रिरे=स्वीकार किया है, मर्तास=मनुष्यों ने, विक्षु=घरों में, ईड्यम=पूज्य को।

here पुपुष्वान् means augmenting the Rks which is the duty of the invoking priest The repetition of the Rks is their augmentation गायत्रि— √gā to sing, pres 3rd sing शक्वरीषु—In the Śakvarī metre that consists of six lines ब्रह्मा—An omniscient priest He is the master of all lores Durgā takes ब्रह्मन् to mean the three Vedas Rājavāde in Nirukta follows the interpretation of Durgā Sāyana takes ब्रह्मा to mean the omniscient priest वदति— √vad to speak, not unaccented because the conjunctive च has been dropped (चादि लोपे विभाषा—Pān VIII 1 63) जातविद्याम्—'Solution on every perplexing occasion' (Yāska), Sāyana and Durgā take it to mean 'the speech prescribing expiations for all errors of omission and commission that happen in sacrifices' According to Griffith, जातविद्याम means 'the knowledge of beings' मात्राम्—'Body' (Sāyana), 'rules' (Griffith), 'acts' (Rājavāde) विमिमीते — √mā to measure, mid pres 3rd sing Rājavāde takes it to mean 'perform'

---

तत्र 'देवानाम्' इति नवर्चमनुवाकापेक्षया चतुर्थं सूक्तमानुष्टुभं देवदेवत्यम् । लोकनाम्नः पुत्रो बृहस्पतिराङ्गिरस एव वा बृहस्पतिर्ऋषिः । अथवा दक्षस्य दुहितादितिर्ऋषिः । तथा चानुक्रान्तं—'देवानां नव लौक्यो वा बृहस्पतिर्दाक्षायण्यदितिर्वा दैवमानुष्टुभम्' इति । गतः सूक्तविनियोगः ।

दे॒वानां॒ । नु । व॒यम् । जाना॑ । प्र । वो॒चा॒म॒ । वि॒प॒न्यया॑ । उ॒क्थेषु॑ । श॒स्यमा॑नेषु । यः । पश्या॑त् । उत्ऽत॑रे । यु॒गे ॥१॥

सा० भा० – अदितिर्दाक्षायण्यनेन सूक्तेन स्वयं यथादित्यानजनयत्तद्ब्रवीति । बृहस्पत्यृषिपक्षे स ऋषिरदितेः सकाशादादित्योत्पत्तिप्रकारमाह । वयं देवानाम् आदित्यानां जाना जन्मानि प्र वोचाम प्रकथयाम । विपन्यया विस्पष्टया वाचा । वयमिति वोचामेति चोभयत्र पूजार्थं बहुवचनम् । अथैकवदाह । यः देवानां गणः पूर्वे युगे उत्पन्नोऽपि उक्थेषु शस्यमानेषु यागे शस्त्रेष्वनुष्ठीयमानेषु उत्तरे युगे वर्तमानं स्तुवन्तं स्तोतारं पश्यात् पश्यति । अनेकेष्वपि युगेषु गतेषु कर्मसु स्तूयमानो वर्तत इत्यर्थः ॥

शब्दा०—देवानाम्=देवताओं के, नु=अब, वयम्=हमलोग, जाना =जन्मों को, प्र वोचाम्=कहें, विपन्यया=स्पष्ट वाणी में, उक्थेषु= उक्थ्य नामक साम के, शस्यमानेषु=गाने पर, यः=जो, पश्यात्=देखे, उत्तरे युगे=आगे आनेवाले समय में ।

हि० अ०—अब हम लोग स्पष्टवाणी में देवताओं के जन्मों को कहें, जो ( देवताओं का समूह ) भविष्य में उक्थ्य साम के गाने पर यजमान को देख सके ।

*Trans.*—Now let us proclaim the births of the gods with clear speech ; that (the host of gods) may see (the worshipper) when hymns are being chanted (to them) in future age.

*Notes*—वोचाम —√*vac* to speak, red.-aorist, subju. 1rst. plu. विपन्यया—With clear voice' (Sāyaṇa), 'with

tuneful skill' (Griffith), 'in picturesque style' (Peterson); instr. sing of विपन्य. पश्यात्—$\sqrt{pa\acute{s}}$ to see, pres. sujbu. 3rd. sing.

ब्रह्मणः। पतिः। एता। सम्। कर्मारःऽइव। अधमत्॥ देवानाम्। पूर्व्ये। युगे। असतः। सत्। अजायत॥२॥

सा० भा०—ब्रह्मणः अन्नस्य पतिः अदितिः एता एतानि देवानां जन्मानि कर्मारइव स यथा भस्त्रयाग्निमुपधमति प्रज्वलनार्थमेवं सम् अधमत् उदपादयदित्यर्थः। देवानां पूर्व्येंयुगे। आदिसृष्टावित्यर्थः। तेषामुपादानकारणात् असतः नामरूपवर्जितत्वेनासत्समानाद् ब्रह्मणः सकाशात् सत् नामरूपविशिष्टं देवादिकम् अजायत प्रादुरभूत्। 'असद्वा इदमग्र आसीत्ततो वै सदजायत' (तै० उ० २. ७) इति हि श्रुतिः। न सदात्मकस्य प्रपञ्चस्यासत्कारणत्वं युक्तमिति वाच्यं, छन्दोगैः 'कथमसतः सज्जायेत' इति असत्कारणत्वमाक्षिप्य 'सदेव सोम्येदमग्र आसीत्' (छा० उ० ६. २. २) इत्यवधारितत्वात्। तर्ह्यसत्कारणप्रतिपादकवाक्यानां का गतिरिति चेत् तेषामव्याकृततराभिप्रायत्वात् 'तद्धेदं तर्ह्यव्याकृतमासीत्' (श० ब्रा० १४. ४. २. १५) इति श्रुतेः। यद्येवं तर्ह्यदितेः सकाशात्कथं देवाद्युत्पत्तिः। 'वायोरग्निः' (तै० आ० ८.१) इत्यादिवत्। अधिष्ठानसकाशादुत्पत्तेः। यद्वा देवानां कारणभूतं सत् असतो ब्रह्मणः सकाशादुत्पन्नमिति योजनादुक्तन्यायोऽस्मिन्पक्षेऽपि समान एव॥

शब्दा०—ब्रह्मणस्पतिः=प्रार्थनाओं के स्वामी ने, एता=देवताओं के जन्मों को, कर्मारइव=लोहार की तरह, समधमत्=बढाया, देवानाम्=देवताओं की, पूर्व्ये युगे=आदि सृष्टि के समय, असतः=असत् अर्थात् नाम रूप वर्जित तत्त्व से, सत्=नामरूपात्मक जगत्, अजायत=उत्पन्न हुआ।

हि० अ०—ब्रह्मणस्पति ने इन (देवों के जन्म) को लोहार की तरह बढाया। देवताओं की आदि सृष्टि में असत् (नाम रूप वर्जित तत्त्व) से सत् (नाम रूपात्मक जगत्) की उत्पत्ति हुई।

*Trans.*—Brahmanaspati like a blacksmith has produced all these (births of gods). In the primordial age of the gods existence sprang out of non-existence.

*Notes*—ब्रह्मणस्पतिः—Sāyana takes it to mean Aditi. ब्रह्मन् is food and Aditi is master of food. Griffith and Peterson take Brahmanaspati no other than the well-known Brahmanaspati, the lord of prayers. एताः—Sāyana followed by Peterson takes it to mean 'birth or generations of gods; Ludwig and Griffith take it to refer भुवनानि understood. सम् अधमत्—$\sqrt{dhm\bar{a}}$ with सम् to produce, impf 3rd sing अजायत—$\sqrt{j\bar{a}}$ to be born, mid. impf 3rd sing.

देवानाम् । युगे । प्रथमे । असतः । सत् । अजायत ॥ तत् । आशाः । अनु । अजायन्त । तत् । उत्तानऽपदः । परि ॥३॥

सा० भा०—पूर्वार्धमुक्तम् । तत् अनु आशाः दिशः अजायन्त तत् परि तदन्वित्यर्थः । उत्तानपदः । उत्तानमूर्ध्वंतानं पद्यन्त इत्युत्तानपदो वृक्षाः । ते अजायन्त प्रादुरभवन् ॥

शब्दा०—देवानाम्=देवताओं की, युगे=सृष्टि के समय में, प्रथमे=आदि, असतः=नामरूपवर्जित तत्त्व से, सत्=नामरूपात्मक जगत्, अजायत=उत्पन्न हुआ, तत्=इसके, आशाः=दिशायें, अनु=पश्चात्, अजायन्त=उत्पन्न हुईं, तत्=इसके उत्तानपदः=वृक्ष, परि=पश्चात् ।

हि० अ०—देवताओं की आदि सृष्टि में असत् से सत् उत्पन्न हुआ; इसके बाद दिशायें उत्पन्न हुईं, इसके बाद वृक्ष (उत्पन्न हुये) ।

*Trans*—In the primordial age of the gods existence sprang out of non-existence, thereafter sprang out the quarters, thereafter the trees.

*Notes*—तत्—According to Oldenberg तत् in the 3rd and 4th Pāda refers to सत्. Peterson following Oldenberg renders 3rd Pāda as 'it (existence) was born after the quarters', while Griffith supported by Sāyana renders as 'thereafter were the regions born'.

Peterson takes तत् in the 4th Pāda as a mere rhetorical repetition. According to Griffith सत् in the 4th Pāda means 'earth', though in translation he renders तत् by 'this', उत्तानपदः—'Trees' (Sāyaṇa), 'productive power' (Griffith); Grassmann takes it as an epithet of Aditi 'whose legs have opened (in child-birth). Peterson takes उत्तानपद् the same as असत्. Oldenberg, Girffith and Peterson take उत्तानपद as abl. of उत्तानपद् though in meaning they differ from each other. परि—Sāyaṇa takes परि in the sense of अनु and construes it with तत् meaning 'thereafter'. Peterson takes परि to mean 'from' and construes with उत्तानपदः

भूः । जज्ञे । उत्तानऽपदः । भुवः । आशाः । अजायन्त ॥ अदितेः । दक्षः । अजायत । दक्षात् । ऊँ इति । अदितिः । परि ॥४॥

सा० भा०—भूः उत्तानपदः वृक्षात् जज्ञे । तथा भुवः सकाशात् आशाः अजायन्त । तथा अदितेः दक्षः अजायत उत्पन्नः । दक्षात् उ दक्षादपि अदितिः परि अजायत । न स्वोत्पन्नं कार्यं स्वस्यैव कारणमपि भवतीति विप्रतिषिद्धमिति वाच्यम् । यास्काचार्य इदमेव वाक्यमुदाहृत्य विरोधमाशङ्क्य पर्यहरत् । तथा हि—'अदितेर्दक्षो अजायत दक्षाद्वदितिः परीति च । तत्कथमुपपद्येत समानजन्मानौ स्यातामित्यपि वा देवधर्मेणेतरेतरजन्मानौ स्यातामितरेतरप्रकृती' (निरु० ११. २३) इति ॥

शब्दा०- भूः=पृथिवी, जज्ञे=उत्पन्न हुई, उत्तानपदः=वृक्ष से, भुवः=पृथिवी से, आशाः=दिशायें, अजायन्त=उत्पन्न हुईं, अदितेः=अदिति से, दक्षः=दक्ष प्रजापति, अजायत=उत्पन्न हुये, दक्षात्=दक्ष से, उ=निश्चित अर्थ का वाचक एक निपात, अदितिः=देवमाता अदिति, परि=बाद।

हि० अ०—वृक्ष से पृथिवी उत्पन्न हुई; पृथिवी से दिशायें उत्पन्न हुईं। अदिति से दक्ष उत्पन्न हुये तथा दक्ष से अदिति (उत्पन्न हुई)।

*Trans.*—The earth sprang out of the tree, the quarters were born from the earth. Dakṣa was born of Aditi and Aditi from Dakṣa.

*Notes*—जज्ञे—√*jan* to generate, perf. mid. 3rd. sing. दक्षः—One of the seven sons of Aditi. Bergaigne takes him as a deification of 'intelligence' and Maxmuller as the deification of 'potentiality'. अदितिः—Deification of 'infinite space' (Bergaigne), deification of 'infinity' (Maxmüller), vide notes on अदितये (I. 24 1). अदिते······परि—Yāska's reply to this contradictory statement is that '*they may have had the same origin*; or according to the nature of the gods they may have been born from each other, they may have derived their substance from one another (Nir. XI 23).'

अदितिः । हि । अजनिष्ट । दक्ष । या । दुहिता । तव ॥ ताम् ।
देवाः । अनु । अजायन्त । भद्राः । अमृतऽबन्धवः ॥५॥

सा० भा०—हे दक्ष तव या परि दुहिता अभूत् सा अदितिः अजनिष्ट हि पुमानादित्यान् । तदेवाह । तां देवा अन्वजायन्त भद्राः स्तुत्या भजनीयाः अमृतबन्धवः अमरणबन्धनाः ॥

शब्दा० —अदितिः=अदिति ने, हि=निश्चित अर्थ का वाचक निपात, अजनिष्ट=उत्पन्न किया, दक्ष=ओ दक्ष, या=जो, दुहिता=पुत्री, तव=तुम्हारी, ताम्=उसके, देवाः=देवता, अनु=पश्चात् अजायन्त=उत्पन्न हुये, भद्राः=कल्याणकारी, अमृतबन्धवः=अमृत है बन्धु जिनका ऐसे देवता ।

हि० अ०—ओ दक्ष, वास्तव में अदिति ने, जो तुम्हारी पुत्री थी, (आदित्यों को) उत्पन्न किया; उस (अदिति) के बाद ही अमृत है बन्धु जिनका ऐसे कल्याकारी देवता उत्पन्न हुये ।

*Trans.*—O Dakṣa, Aditi, indeed, who is your daughter, produced (the Ādityas). After her the auspicious gods, the brother of immortality, were born.

*Notes*—अजनिष्ट—√*jan* to generate, 'iṣ'-aorist, mid. 3rd. sing.; not unaccented because preceded by हि.

यत् । देवाः । अदः । सलिले । सुऽसंरब्धाः । अतिष्ठत ॥ अत्र । वः । नृत्यताम्ऽइव । तीव्रः । रेणुः । अप । आयत ॥६॥

सा० भा०—अनयोत्तरेण चादित्या स्तूयन्ते । यत् यदा हे देवा अदः अमुष्मिन् सलिले एव सुसंरब्धा सुष्ठु लब्धात्मान अतिष्ठत स्थितवन्त । 'आपो वा इद सर्वम्' (तै० आ० १० २२) 'अप एव ससर्जादौ' (मनु० १ ८) इति श्रुतिस्मृतौ । अत्र अस्मिन् सलिले नृत्यतामिव व युष्माक सबन्धी तीव्र दु सह रेणु अशभूत एक अपायत अपागच्छत् । दिव प्रति गत इति सूर्याभिप्रायम् । 'परामार्ताण्डमास्यत्' इति वक्ष्यति ॥

शब्दा० – यत्=जब, देवाः=ओ देवताओ, अदः=इस, सलिले=जल में, सुसंरब्धाः=एक साथ मिलकर, अतिष्ठत=खडे थे, अत्र=यहाँ, वः=तुममें से, नृत्यतामिव=मानो नाचते हुये से, तीव्र =गर्म, रेणु =कण, अप आयत=ऊपर उठा ।

हि० अ०—ओ देवताओ, जब (तुम लोग) एक साथ मिलकर यहाँ जल में खडे थे मानो नाचते हुये तुम में से एक धूल का गर्म कण ऊपर उठा ।

*Trans*—O Gods, when you stood close clasping in the water, from you, as it were dancing, a hot particle of dust arose up

*Notes*—अदः—'In this' (Sāyana, 'here' (Peterson) सलिले—'In the water' (Sāyana), 'an unsteady (mass)' (Peterson) सुसरब्धा —Sayana renders it as सुष्ठु लब्धात्मान', Griffith as 'close clasping' and Peterson as 'well supported' अतिष्ठत—√*stha* to stand, impf 2nd sing, not unaccented because preceded by यत

यत् । देवाः । यतयः । यथा । भुवनानि । अपिन्वत ॥ अत्र । समुद्रे । आ । गूळ्हम् । आ । सूर्यम् । अजभर्तन ॥७॥

सा० भा०—यत् यदा हे देवाः यतयो यथा । वृष्ट्या नियमयन्तीति वा यत्नेन पालयन्तीति वा यतयो मेघा । ते यथोदकं भुवनानि लोक पूरयन्ति

तद्वस्त्वतेजोभिः अपिन्वत पूरितवन्तः । अत्र समुद्रे अप्सु आ गूळ्हं निगूळ्हं सूर्यं प्रातरुदयाय आ अजभर्तन आहृतवन्तः ॥

शब्दा०—यत्=जब, देवाः=ओ देवताओं, यतयः=मेघ, यथा=तरह, भुवनानि=लोकों को, अपिन्वत=भर दिया, अत्र=यहां, समुद्रे=समुद्र में, गूळ्हम्=छिपे हुये, सूर्यम्=सूर्य को, आ अजभर्तन=बाहर लाये ।

हि० अ०—ओ देवताओं, मेघों की तरह जब (तुम लोगों ने) लोकों को भर दिया, उस समय समुद्र में छिपे हुये सूर्य को (तुम लोग) लाये ।

*Trans.*—O gods, like clouds, when you fattened all the beings, then you brought out the sun (who was) hidden in the ocean.

*Notes*—यतयः—*Clouds* (Sāyaṇa), cowhards (Peterson), devotees (Griffith). अपिन्वत—√*pinv* to fatten, impf. 2nd. plu.; not unaccented because preceded by यत्. गूळ्हम्—See I. 116 11. अजभर्तन—√*bhr* to bear, plu. perf. 2nd. plu.

अ॒ष्टौ । पु॒त्रासः॑ । अदि॑तेः । ये । जा॒ताः । त॒न्वः॑ । परि॑ ॥ दे॒वान् । उप॑ । प्र । ऐ॒त् । स॒प्तऽभिः॑ । परा॑ । मा॒र्ता॒ण्डम् । आ॒स्य॒त् ॥८॥

सा० भा०—अष्टौ पुत्रासः पुत्रा मित्रादयः अदितेः भवन्ति ये अदितेः तन्वस्परि शरीरात् जाताः उत्पन्नाः । अदितेरष्टौ पुत्रा अध्वर्युब्राह्मणे परिगणिताः । तथा हि—'ताननुक्रमिष्यामो मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्च विवस्वानादित्यश्च' (तै० आ० १. १३. ३) इति । तथा तत्रैव प्रदेशान्तरेऽदिति प्रस्तुत्याम्नातं 'तस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त सा द्वितीयमपचत्' इत्यादिनाष्टानामादित्यानामुत्पत्तिर्वर्णिता (तै० स० ६. ५ ६. १) । सादितिः सप्तभिः पुत्रैः देवानुप प्रैत् उपागच्छत् । अष्टमं पुत्रं मार्ताण्डं सूर्यं परा आस्यत् उपरि प्राक्षिपदित्यर्थः ॥

शब्दा०—अष्टौ=आठ, पुत्रासः=पुत्र, अदितेः=अदिति के, ये=जो, जाताः=उत्पन्न हुये, तन्वस्परि=शरीर से, देवान्=देवों के, उप=पास, प्र ऐत्=चली गई, सप्तभिः=सात पुत्रों के साथ, परा=ऊपर, मार्ताण्डम्=सूर्य को, आस्यत्=छोड़ दिया ।

हि॰ अ॰—अदिति के आठ पुत्र हैं जो उसके शरीर से उत्पन्न हुये; सात के साथ वह देवताओं के यहाँ चली गई; (आठवें पुत्र) सूर्य को अलग छोड़ दिया।

*Trans*—Eight are the sons of Aditi who were born from her body. With seven (she) went to meet the gods, and (the eighth) the sun (she) threw away.

*Notes*—अष्टौ पुत्रासः—Eight sons of Aditi, viz, Mitra, Varuṇa, Dhātar, Aryaman, Aṁśa, Bhaga, Vivasvān and Āditya. जाताः—√*jā* to be born, past part. तन्वः—from the body, abl. sing. of तनु. ऐत्—√*i* to go, impf. 3rd. sing. आस्यत्—√*as* to throw, impf. 3rd. sing.

सप्तऽभिः। पुत्रैः। अदितिः। उप। प्र। ऐत्। पूर्व्यम्। युगम्॥
प्रऽजायै। मृत्यवे। त्वत्। पुनः। मार्तण्डम्। आ। अभरत्॥९॥

सा॰ भा॰—पूर्वमन्त्रोक्त एवार्थः पुनरत्रोच्यते। सप्तभिः मार्ताण्डव्यतिरिक्तैर्मित्रादिभिः अदितिः पूर्व्यं पुराणं युगम् उप प्रैत् उपगता। अथ प्रजायै प्राणिनामुत्पत्तये मृत्यवे तेषां मरणाय मार्ताण्डं मृतात् अण्डादण्डाज्जात मार्ताण्डनामानं सूर्यं पुनः आभरत् आहरत्। द्युलोकेऽधारयत्। प्राणिमरणजननादीनां सूर्योदयास्तमयायत्तता स्फुटा। 'तस्यै व्युद्रमाण्डमजायत' (तै॰ सं॰ ६.५ ६.१) इत्यादि ब्राह्मणम्॥

शब्दा॰—सप्तभिः=सात, पुत्रैः=पुत्रो, के साथ, अदितिः=अदिति, उप=पास, प्र ऐत्=चली गई, पूर्व्यम् युगम्=आदि युग को, प्रजायै=उत्पत्ति के लिये, मृत्यवे=मृत्यु के लिये, त्वत्=पुनः=फिर, मार्ताण्डम्=सूर्य को, आ अभरत्=लाई।

हि॰ अ॰—अपने सात पुत्रों के साथ अदिति प्रारम्भिक युग को चली गई। (प्राणियों की) उत्पत्ति के लिये तथा (उनके) विनाश के लिये पुनः सूर्य को लाई।

*Trans* —With her seven sons, Aditi went to meet the primordial age (She) brought thitherward the sun to generate (the beings) and to destroy (them) again

*Notes*—प्रजायै—For creation of the beings; dat sing of प्रजा अभरत्—√*bhṛ* to bear, impf 3rd sing

---

'त्वया मन्यो' इति सप्तर्चं षोडशं सूक्तम् आदितस्तिस्रस्त्रिष्टुभस्ततश्चतस्रो जगत्यः। पूर्ववदृषिदेवते। तथा चानुक्रान्तं—'त्वया मन्यो चतुर्जगत्यन्तम्' इति। अजिरनाम्न्येकाह इदं सूक्तं मरुत्वतीयशस्त्रे निविद्धानम्। सूत्रं पूर्वसूक्त एवोदाहृतम्। विनुत्यभिभूतिषु सर्वेष्वेकाहेष्वेते सूक्ते मरुत्वतीयनिष्केवल्ययोः शस्ये। सूत्रितं च 'विनुत्यभिभूत्योरिषुवज्रयोश्च मन्युसूक्ते' (आश्व० श्रौ० ९.८) इति।

त्वया। मन्यो इति। सऽरथम्। आऽरुजन्तः। हर्षमाणासः।
धृषिताः। मरुत्वः॥ तिग्मऽइषवः। आयुधा। सम्ऽशिशानाः।
अभि। प्र। यन्तु। नरः। अग्निऽरूपाः॥१॥

सा० भा०—हे मन्यो हे मरुत्वः त्वया सरथं समानमेकमेव रथमारुह्येति शेषः। आरुजन्तः गच्छन्तः हर्षमाणासः हृष्टाः धृषिता धृष्टाः तिग्मेषवः तीक्ष्णबाणाः आयुधा आयुधानि संशिशानाः सम्यग्निश्यन्तः नरः युद्धस्य नेतार इन्द्रादयो देवास्त्वदनुचरा वा अग्निरूपाः अग्निवत्तीक्ष्णदाहादिकर्माणो यद्वा संनद्धा कवचिनः अभि प्र यन्तु युद्धे सहायार्थम्। अत्र 'त्वया मन्यो सरथमारुह्य रुजन्तः' (निरु० १०.३०) इत्यादि निरुक्तमनुसंधेयम्॥

शब्दा०—त्वया=तुम्हारे साथ, मन्यो=ओ मन्यु, सरथम्=एक रथ पर, आरुजन्तः=तेजी से जाते हुये, हर्षमाणासः=उत्साही, धृषिताः=बहादुर, मरुत्वः=ओ मरुतों से युक्त, तिग्मेषवः=तीक्ष्ण बाणवाले, आयुधा=शस्त्रों को, संशिशानाः=तीक्ष्ण करते हुये, अभि प्र यन्तु=प्रयाण करें, नरः=मनुष्य, अग्निरूपाः=अग्नि के समान भयानक।

हि० अ०—ओ मरुतों से युक्त मन्यु, तुम्हारे साथ एक ही रथ पर तेजी से जाते हुये उत्साही, बहादुर, मनुष्य जिनके बाण तीक्ष्ण हैं, जो अग्नि के समान (भयानक) हैं, अपने अस्त्रों को तीक्ष्ण करते हुये (युद्ध में) प्रयाण करें।

*Trans.*—O wrath, accompanied by Maruts, bursting forth with thee on the same chariot, the exulting, impetuous men, terrible like flames of fire, having

जीतो; ओ विजेता, बुलाने पर हमारे सेनापति बनो। शत्रुओं को मारकर उनके धन को (हमलोगों में) बाँटो। (हमारे) पराक्रम को तोलते हुये शत्रुओं को भगाओ।

*Trans.*—O wrath, flashing like fire conquer the enemies; o conqueror, (when) invoked, be our commander. Having slain the enemies distribute the booty (among us); measuring (our) strength push away the hinderer.

*Notes*—त्विषितः—√*tviṣ* to be stirred, past part. सहस्व—√*sah* to conquer, mid. impv. 2nd. sing. सहुरे—Voc. of सहुरि (conqueror) from √*sah* to conquer, with the suffix उरिण्. हूतः—√*hū* to call, past part. एधि—√*as* to be, impv. 2nd. sing. हत्वाय—√*han* to kill, gerund in त्वाय विभजस्व—√*bhaj* with वि to distribute, impv. mid, 2nd sing. मिमानः—√*mā* to measure, (III. conju.), pres part. नुदस्व—√*nud* to push, impv. mid. 2nd. sing.

सहस्व। मन्यो इति। अभिऽमातिम्॥ अस्मे इति। रुजन्। मृणन्॥ प्रऽमृणन्। प्र। इहि। शत्रून्॥ उग्रम्। ते। पाजः। ननु। आ। रुरुध्रे। वशी। वशम्। नयसे। एकऽज। त्वम्॥२॥

सा० भा०—हे मन्यो अस्मे अस्माकम् अभिमातिम् अभिगन्तारं शत्रुं सहस्व अभिभव। रुजन् हिंसन् मृणन् प्रमृणन् प्रकर्षेण हिंसन् यथा पुनर्न जीवेत्तथा कुर्वंस्त्वं शत्रून् प्रति प्रेहि। ते तव पाजः बलम् उग्रम् उद्गूर्णं के ननु आ रुरुध्रे आरुन्धन्ति। न तथा संभवति हे एकज त्वम् असहायः वशी त्वं वशं नयसे प्रापयसि शत्रुम्॥

शब्दा०—सहस्व=जीतो, मन्यो=ओ मन्यु, अभिमातिम्=शत्रु को, अस्मे=हमारे, रुजन्=तोड़ते हुये, मृणन्=कुचलते हुये, प्रमृणन्=प्रकृष्ट रूप से नष्ट करते हुये, प्र इहि=बढो, शत्रून्=शत्रुओं की ओर, उग्रम्=भयानक, ते=तुम्हारे, पाजः=शक्ति को, ननु=संभव नहीं, आ रुरुध्रे=

रोकेंगे, वशी=वश में करनेवाले, वशम्=वश में, नयसे=लाते हो, एकज=ओ अकेले उत्पन्न, त्वम्=तुम।

हि॰ अ॰—ओ मन्यु, मेरे शत्रु को जीतो; तोड़ते हुए, कुचलते हुये, तथा अत्यन्त रूप से नष्ट करते हुये शत्रुओं की ओर बढ़ो। (वे) तुम्हारी भयानक शक्ति को रोकेंगे (यह) संभव नहीं। ओ अकेले, वश में करनेवाले तुम (शत्रुओं को) अपने वश में लाते हो।

*Trans.*—O wrath, overcome our assailant ; go to the enemies breaking, slaying and crushing them down, They can hinder thy terrible might, is not possible. O sole-born, thou, the controller, bring the enemies under thy control.

*Notes*—अस्मे—Final ए in अस्मे is Pragṛhya ; hence, इति is added after it in the Pada-text. रुजन्—√*ruj* to break, pres. part. मृणन्—√*mṛṇ* to crush, pres. part. प्रमृणन्—The repetition of मृणन् with the prefix प्र is for emphasis. इहि—√*i* to go, impv. 2nd. sing. रुरुध्रे—√*rudh* to hinder, perf. 3rd. plu. नयसे—√*ni* to lead. pres. 2nd. sing.

एकः । बहूनाम् । असि । मन्यो इति । ईळितः । विशंऽविशम् । युधये । सम् । शिशाधि ॥ अकृत्तऽरुक् । त्वया । युजा । वयम् । द्युऽमन्तम् । घोषम् । विऽजयाय । कृण्महे ॥४॥

सा॰ भा॰—हे मन्यो ईळितः स्तुतस्त्वम् एकः एव असहाय एव बहूनां शत्रूणाम् असि भवसि पर्याप्तो हन्तुम्। अतः विशंविशं तां तामस्मद्विरोधिनीं प्रजां युधये युद्धाय सं शिशाधि सम्यक् तीक्ष्णीकुरु। किंच हे अकृत्तरुक् अच्छिन्नदीप्ते त्वया युजा सहायेन वयं द्युमन्तं दीप्तिमन्तं घोषं सिंहनादवन्तं विजयाय विशिष्टजयार्थं कृण्महे कुर्मः ॥४॥

शब्दा॰—एकः=अकेले, बहूनाम्=अनेक शत्रुओं के, असि=हो, मन्यो=ओ मन्यु, ईळितः=पूजने पर, विशंविशम्=प्रत्येक निवास स्थान को,

युधये=युद्ध के लिये, संशिशाधि=तेज करो, अकृत्तरुक्=ओ अच्छिन्न प्रकाशवाले, त्वया=तुम्हारी, युजा=सहायता से, वयम्=हमलोग, द्युमन्तम्=शानदार, घोषम्=सिंहनाद, विजयाय=विजय के लिये, कृण्महे=करते हैं।

हि० अ०—ओ मन्यु, पूजने पर (तुम) अकेले ही अनेक (शत्रुओं) के (मारने में पर्याप्त) हो; हमारी प्रत्येक बस्ती को युद्ध के लिये तेज करो। ओ अच्छिन्न प्रकाशवाले, तुम्हारी सहायता से विजय के लिये हम शानदार सिंहनाद करते हैं।

*Trans.*—O wrath, being worshipped thou art alone (sufficient overwhelmer) of many; sharpen our each clan to fight O of perfect splendour, with thy aid, we make glorious trumpet for victory.

*Notes*—ईळितः—√*īd* to praise, past part. विशंविशम्—Each clan; Iterative compd. accented on the first member. युधये—Dative infinitive in ए from √*yudh* to fight. संशिशाधि—√*śā* to sharpen, (III conju.) impv. 2nd. sing. अकृत्तरुक्—अकृत्त from √*krt* to cut, past part. 'that which is not broken'. रुक् is derived from √*ruc* to shine; thus अकृत्तरुक् means 'one not of broken splendour i.e. of perfect splendour; voc. sing. Bahuvrihi compd. accented on the first member. कृण्महे—√*kr* to make, pres. 1rst plu.

विजेषऽकृत् । इन्द्रःऽइव । अनवऽब्रवः । अस्माकम् । मन्यो इति । अधिऽपाः । भव । इह ॥ प्रियम् । ते । नाम । सहुरे । गृणीमसि । विद्म । तम् । उत्सम् । यतः । आऽबभूथ ॥५॥

सा० भा०—हे मन्यो इन्द्रइव विजेषकृत् विजयकर्ता। तथा अनवब्रवः अनिन्दितवचनः। 'अनवब्रवोऽनवक्षिप्तवचनः' (निरु० ६. २९) इति यास्कः। ईदृशस्त्वम् अस्माकम् अधिपाः अधिकं पाता रक्षिता भव इह अस्मिन्यज्ञे।

हे सहुरे शत्रूणां सहनशील ते प्रियं नाम स्तोत्र गृणीमसि गृणीमः स्तुमः। यत नाम्न स्तोत्रात् त्वम आवभूय आभवसि प्रवृद्धो भवसि तमुत्सं बलस्योदगम-पितार विद्म जानीम ॥

शब्दा०—विजेषकृत्=विजय देनेवाले, इन्द्र इव=इन्द्र की तरह, अनवब्रव=अनिंदित वचन बोलनेवाले, अस्माकम्=हमलोगों के, मन्यो=ओ मन्यु, अधिपाः=रक्षक भव=बनो, इह=यहाँ प्रियम्=प्रिय, ते=तुम्हारे, नाम=नाम, सहुरे=ओ विजेता, गृणीमसि=स्तुति करते हैं, विद्म=जानते हैं, तम्=उस, उत्सम्=स्रोत को, यत=जहाँ से, आवभूय=आये हो।

हि० सु० – ओ मन्यु, इन्द्र की तरह विजय देनेवाले, अनिन्दित वचन बोलने वाले (तुम) यहाँ हम लोगों के रक्षक बनो। ओ विजेता, तुम्हारे प्रिय नाम की हम स्तुति करते हैं, (हम) उस स्रोत को जानते हैं जहाँ से (तुम) उत्पन्न हुए हो।

*Trans*—O wrath, thou the giver of victory like Indra, of unreviled speech, be our protector O conqueror, we sing thy dear name and we know the spring whence thou hast come

*Notes*--अनवब्रव—Sayana supported by Yaska renders it as 'speaker of unreviled speech, Griffith takes it to mean 'unyielding', Bahuvrihi compd accented on the second member सहुरे—See X 84 2 गृणीमसि—$\sqrt{gr}$ to sing, pres 1rst plu आवभूय—$\sqrt{bhu}$ to be perf 2nd sing, not unaccented because preceded by यत् विद्म—$\sqrt{vid}$ to know, pres 1rst plu, not unaccented because it begins the Pada

आऽभूत्या। सहऽजाः। वज्र। सायक। सहः। बिभर्षि। अभिऽभूते। उत्ऽतरम्॥ क्रत्वा। नः। मन्यो इति। सह। मेदी। एधि। महाऽधनस्य। पुरुऽहूत। सम्ऽसृजि॥६॥

– सा० भा०—हे वज्र वज्रवत्सारभूत हे सायक शत्रूणामन्तकर अभिभूते

शत्रूणामभिभावुक मन्यो आभूत्या । आभूतिरभिभवः । तेन सहजाः सहैवोत्पन्नस्त्वं उत्तरम् उत्कृष्टतरं सहः बलं बिभर्षि धारयसि । हे मन्यो क्रत्वा कर्मणा सह नः अस्माकं मेदेधि स्निग्धो भव । कुत्रेति तदुच्यते । महाधनस्य संग्रामनामैतत् । संग्रामस्य संसृजि सर्गे । हे पुरुहूत बहुभिराहूतेति मन्युसंबोधनम् ॥

शब्दा०—आभूत्या=शत्रु को पराजित करनेवाली शक्ति के, सहजा=साथ उत्पन्न, वज्र=ओ वज्र, सायक=ओ बाण, सहः=शक्ति को, बिभर्षि=धारण करते हो, अभिभूते=ओ शत्रु को पराजित करनेवाले, उत्तरम्=श्रेष्ठ, क्रत्वा=कार्य से, नः=हम लोगों के लिये, मन्यो=ओ मन्यु, सह=साथ, मेदी=उदार, एधि=बनो, महाधनस्य=युद्ध के, पुरुहूत=ओ बहुतों के द्वारा बुलाये जानेवाले, संसृजि=प्रारम्भ होने पर ।

हि० अ०—(शत्रु को) पराजित करनेवाली शक्ति के साथ उत्पन्न, ओ वज्र, ओ बाण, ओ अभिभूत करनेवाले, तुम श्रेष्ठ शक्ति को धारण करते हो; ओ मन्यु, ओ बहुतों के द्वारा बुलाये जानेवाले, युद्ध के प्रारम्भ होने पर अपने कार्य से (हमलोगों के लिये) उदार बनो ।

*Trans.*—Twin-born with conquering power, O thunderbolt, O arrow, O subduer, thou bearest higher power. O wrath, be graceful unto us with thy action at the start of battle, O invoked by many.

*Notes*—बिभर्षि—$\sqrt{bhr}$ to bear, pres. 2nd. sing. एधि—See X. 84 2. महाधनस्य—Of the mighty battle; Karmadhāraya compd. accented on the second member. पुरुहूत—Invoked by many ; $\sqrt{h\bar{u}}$ to call, past part. voc. sing. संसृजि—$\sqrt{srj}$ to emit ; loc. absolute.

सम्ऽसृष्टम् । धनम् । उभयम् । सम्ऽआकृतम् । अस्मभ्यम् । दत्ताम् । वरुणः । च । मन्युः ॥ भियम् । दधानाः । हृदयेषु । शत्रवः । पराऽजितासः । अप । नि । लयन्ताम् ॥७॥

सा० भा०—संसृष्टम् अविभागमापन्नम् उभयम् उभयविधं धनं समाकृतं सम्प्रगानीतम् अस्मभ्यं दत्ताम् । कः । वरुणश्च देवः मन्युः च । भियं भयं

हृदयेषु दधानाः शत्रवः अस्मद्विरोधिनः पराजितासः पराजिताः अप नि लयन्तां अपनिलीना भवन्तु ॥

शब्दा० —संसृष्टम्=अच्छी प्रकार से प्राप्त, धनम्=धन, उभयम्=दोनों प्रकार से, समाकृतम्=अच्छी प्रकार से संचित किया हुआ, अस्मभ्यम्=हमलोगों के लिये, दत्ताम्=देवें, वरुणः=वरुण देवता, च=और, मन्युः मन्यु देवता, भियम्=भय, दधानाः=धारण करते हुये, हृदयेषु=हृदय में, शत्रवः=शत्रु, पराजितासः=हारे हुये, नि लयन्ताम्=दूर हट जाँय।

हि० अ०— वरुण तथा मन्यु अच्छी प्रकार से उत्पन्न तथा अच्छी प्रकार से संचित किया हुआ दोनो प्रकार का धन हमें देवें। हृदय में भय धारण करते हुये शत्रु पराजित होकर दूर हट जाँय।

*Trans.*—Let varuṇa and wrath give us two-fold wealth, well-gathered and well-accumulated. Let (our) enemies, with fear in their hearts, slink away, vanquished.

*Notes*—संसृष्टम्—√*sṛj* with सम् to gather, past part. acc. sing. समाकृतम्—√*kṛ* with सम्+आ to accumulate, past part. acc. sing.; for accent see निहिताः (I. 24.7). दत्ताम्—√*dā* to give, impv. 3rd. dual. दधानाः—√*dhā* to put, pres. part. nom. plu. पराजितासः—जितासः is past part. from √*ji* to conquer, nom. plu. terminating in आसस्. नि लयन्ताम्—√*lī* with नि to slink away, impv. mid. 3rd. plu.

'सहस्रशीर्षा' इति षोडशर्चं षष्ठं सूक्तम्। नारायणो नामर्षिरन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः। अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किंचित्' (क० उ० ३. ११) इत्यादिश्रुतिषु प्रसिद्धः स देवता तथा चानुक्रान्तं— 'सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु' इति। गतो विनियोगः॥

सहस्रऽशीर्षा। पुरुषः। सहस्रऽअक्षः। सहस्रऽपात्॥ सः। भूमिम्। विश्वतः। वृत्वा। अति। अतिष्ठत्। दशऽअङ्गुलम्॥१॥

सा० भा०—सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा। सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षत्वं सहस्रपात्त्वं च। सः पुरुषः भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतः वृत्वा परिवेष्ट्य दशाङ्गुलं दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः॥

शब्दा०—सहस्रशीर्षा=हजारों सिरवाला, पुरुषः=परम पुरुष, सहस्राक्ष=हजारों नेत्रवाला, सहस्रपात्=हजारों पैरवाला, सः=वह, भूमिम्=पृथिवी को, विश्वतः=चारों तरफ से, वृत्वा=व्याप्त करके, अति=अधिक, अतिष्ठत्=स्थित है, दशाङ्गुलम्=दश अङ्गुल परिमाण में।

हि० अ० पूर्णपुरुष हजारों सिरवाला, हजारों नेत्रवाला तथा हजारों पैरवाला है। वह पृथिवी को चारों तरफ से व्याप्त करके दश अङ्गुल (परिमाण में) बचा रहता है।

*Trans*—The Perfect Being has thousands of heads, thousands of eyes and thousands of feet Having pervaded the whole earth he remains ten fingers in surplus (i e he is endless)

*Notes*—२ सहस्रशीर्षा—The word thousand indicates the innumerability of the limbs of the Puruṣa; Bahuvrīhi compd. accented on the first member. सहस्राक्षः—Bahuvrīhi compd. irregularly accented on the second member. वृत्वा—√vṛ to cover, gerund in त्वा. अतिष्ठत्—√sthā to stand, impf. 3rd. sing.

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भव्यम् ॥
उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥२॥

सा० भा०—यत् इदं वर्तमानं जगत् तत् सर्वं पुरुष एव । यत् च भूतम् अतीतं जगत् यच्च भव्यं भविष्यज्जगत् तदपि पुरुष एव । यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः । उत अपि च अमृतत्वस्य देवत्वस्य अयम् ईशानः स्वामी । यत् यस्मात्कारणात् अन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेन, अतिरोहति स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात्प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ॥

शब्दा०—पुरुषः=परम पुरुष, एव=ही, इदम्=यह, सर्वम्=सम्पूर्ण, यत=जो, भूतम्=हो गया है, यत=जो, च=और, भव्यम्=होनेवाला है, उत=और, अमृतत्वस्य=अमरत्व का, ईशानः=स्वामी, यत्=जो, अन्नेन=अन्न से, अतिरोहति=समृद्ध होता है ।

हि० अ०—यह सब, जो हो गया है तथा जो होगा, पुरुष ही है । और वह अमरत्व का स्वामी है तथा जो अन्न से समृद्ध होता है (उसका भी) ।

*Trans.*—All present, past and future (objects of this universe) are the Perfect Being. And (He) is the Lord of immortality and all that grows and develops with food.

*Notes*—भूतम्—√bhū to be, past part. भव्यम्—√bhū to be, gerundive in य. ईशानः—√īś to be master, pres. part. mid अतिरोहति—√ruh to ascend, pres. 3rd. sing.; not unaccented because preceded by यत्. उत…अतिरोहति—

This hemistich has variously been interpreted by the scholars : 'he is the lord or distributer of immortality because he becomes the visible world in order that living beings may obtain the fruits of their actions and gain mokṣa or final liberation from their bonds' (Sāyaṇa); 'he is also the lord of immortality; for he mounts beyond (his own condition) for the food (of living beings)—(Wilson); 'he is that which grows by nourishment, and he is the distributer of immortality' (Colebrooke); 'he is also the lord of immortality since by food he expands (Muir); 'since he stretches for above what exists by food (Ludwig); 'ruling over immortality, he was all that grows by food' (Peterson).

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पुरुषः ॥
पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् ।
दिवि ॥३॥

सा० भा०—अतीतानागतवर्तमानरूपं जगद्यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः। न तु तस्य वास्तवस्वरूपम्। वास्तवस्तु पुरुषः अतः महिम्नोऽपि ज्यायान् अतिशयेनाधिकः। एतच्चोभयं स्पष्टीक्रियते। अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादः चतुर्थोऽशः। अस्य पुरुषस्य अवशिष्टं त्रिपात् स्वरूपम् अमृतं विनाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे व्यवतिष्ठत इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० आ० ८.१; तै० उ० २.१) इत्याम्नातस्य परब्रह्मण इयत्ताभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः॥

शब्दा०—एतावान्=इतनी, अस्य=उसकी, महिमा=ऐश्वर्य, अतः=उससे भी, ज्यायान्=बढ़कर, च=और, पुरुषः=परम पुरुष, पादः=एक चौथाई अंश, अस्य=उसका, विश्वा=सम्पूर्ण, भूतानि=प्राणी, त्रिपात्=तीन चतुर्थांश, अस्य=उसका, अमृतम्=अमर लोक, दिवि=आकाश में।

इह=यहां, अभवत्=रह गया, पुनः=फिर, ततः=इससे, विष्वङ्=चारों तरफ, वि अक्रामत्=फैलाया, साशनानशने=खानेवाले तथा न खानेवाले अर्थात् जीव तथा निर्जीव, अभि=तरफ।

हि० अ०—तीन-चतुर्थांश के साथ पुरुष ऊपर चला गया; फिर भी एक-चतुर्थांश यहीं पर रह गया। इससे वह अपने को जीव तथा निर्जीव सभी रूपों में चारों तरफ फैलाया।

*Trans.*—With three fourth the Perfect Being rose upwards ; one-fourth of Him again remaired here ; thence he spread on all sides, over what eats and what eats not.

*Notes*—उदैत्—√*i* with उत् to rise, impf. 3rd. sing. अभवत्—√*bhū* to be, impf. 3rd. sing. पुनः—Final visarjaniya is rhotacized one ; hence, इति in the Pada-text. ततः—'After coming into sphere of illusion' (Sāyaṇa), 'thence' (Griffith, Macdonell). विष्वङ्—'Assuming various forms of gods, men, birds etc.' (Sāyaṇa) 'all sides' (Peterson, Griffith) 'in all directions' (Macdonell). व्यक्रामत्—√*kram* to stride, impf. 3rd. sing. साशनानशने—What eats and what eats not i.e. animate and inanimate. This compd. represents the latest stage of Dvandvas in the R̥.V. the first member losing its accent and the last syllable of the final member rceiving the उदात्त irrespective of its original accent. Dvandva compds. are not analysed in the Pada-text. Final ए is Pragṛhya ; hence, इति in the Pada-text.

तस्मा॑त्। वि॒ऽराट्। अ॒जा॒य॒त॒। वि॒ऽराजः॑। अधि॑। पुरु॑षः॥ सः। जा॒तः। अति॑। अ॒रि॒च्य॒त॒। प॒श्चात्। भूमि॑म्। अथो॒ इति॑। पु॒रः॥५॥

सा० भा०—विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते। तस्मात् आदिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्न। विविधानि राजन्ते

वस्तून्यभेति विराट् । विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत । सोऽयं सर्ववेदान्तवेद्य परमात्मा स्वयमेव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाथर्वणिका उत्तरताप-नीये विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवता कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' (नृ० ता २ १. ९) इति । स जात विराट् पुरुष अत्यरिच्यत अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेष । अथो भूमिसृष्टेरनन्तर तेषां जीवानां पुरः ससर्ज । पूर्यन्ते सप्तभि-र्धातुभिरिति पुर शरीराणि ॥

श० दा०—तस्मात्=उस चतुर्यांश से, विराट्=परम पुरुष से उत्पन्न प्रथम तत्व, अजायत=उत्पन्न हुआ, विराजः=विराट् नामक प्रथम तत्व से, अधि=बाद में, पुरुष=जीवात्मा के रूप में पुरुष, सः=वह, जातः=उत्पन्न होते ही, अति अरिच्यत=(देव मनुष्य आदि रूप में विराट से) अलग कर लिया, पश्चात्=इसके बाद, भूमिम्=पृथिवी, अथो=इसके बाद, पुर=जीवात्मा के लिए शरीर ।

हि० अ०—उस (चतुर्यांश) से विराट् उत्पन्न हुआ; विराट् से (जीवात्मा के रूप में) पुरुष (उत्पन्न हुआ) उत्पन्न होते ही उसने (अपने को देव मनुष्य आदि रूप में विराट् से) अलग कर दिया । इसके बाद पृथिवी को (उत्पन्न किया), इसके बाद (जीवात्मा के लिए) शरीर (का निर्माण किया) ।

*Trans*—From him *Virāt* was born, from *Virāt* the Purusa (in the form of *Jīvātma*) As soon as he was born, (he) separated himself (from *Virat* in the forms of gods, men, lower animals etc ), then (he created) the earth and then the body

✓*Notes*—विराट्—The first creation of the Perfect Being He was the intermediate between the primordial Purusa and the created Purusa According to Muir विराट् may refer to the female counterpart of the Perfect Being as Aditi of Daksa अजायत—$\sqrt{j\bar{a}}$ to be

born, impf. mid. 3rd. sing. अरिच्यत—√ric to leave, pass. impf. 3rd. sing. अथो—(=अथ+उ); final ओ is Pragrhya. पुरः—'Body' '(Sāyaṇa)' 'before' (Peterson, ✓Macdonell), 'eastward' (Griffith). स...पुरः—This line has variously been interpreted : 'as soon as he was born he separated himself in the forms of gods, men, lower aminal etc. from *Virāṭ* , then he (created) earth, and then the body' (Sāyaṇa), 'when born he stretched beyond the earth'. behind and before' (Peterson Macdonell), 'as soon as he was born he spread eastward and westoward over the earth' (Griffith).

यत् । पुरुषेण । हविषा । देवाः । यज्ञम् । अतन्वत ॥ वसन्तः । अस्य । आसीत् । आज्यम् । ग्रीष्मः । इध्मः । शरत् । हविः ॥६॥

सा० भा०—यत् यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवाः उत्तरसृष्टिसिद्धयर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन हविरन्तरासंभवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञं अतन्वत अन्वतिष्ठन् तदानीम् अस्य यज्ञस्य वसन्तः वसन्तर्तुरेव आज्यम् आसीत् अभूत् । तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः । एवं ग्रीष्म इध्मः आसीत् । तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः । तथा शरद्धविः आसीत् । तामेवपुरोडाशादिहविष्ट्वेन संकल्पितवन्त इत्यर्थः । पूर्वं पुरुषस्य हविः सामान्यरूपत्वेन संकल्पः । अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम् ॥

शब्दा०—यत्=जब, पुरुषेण=पुरुष रूप, हविषा=हवि से, देवाः=देवताओं ने, यज्ञम्=यज्ञ को, अतन्वत=सम्पन्न किया, वसन्तः=वसन्त ऋतु, अस्य=उसका, आसीत्=था, आज्यम्=घी, ग्रीष्मः=ग्रीष्म ऋतु, इध्मः=इन्धन, शरत्=शरद् ऋतु, हविः=हवि ।

हि० अ०—देवताओं ने जब पुरुष रूपी हवि से यज्ञ किया, (उस समय) वसन्त इस (यज्ञ) का घी था, ग्रीष्म इसका इन्धन था शरत् इसका हवि था ।

*Trans.*—When gods performed a sacrifice with the Perfect Being as its *oblation*, the *spring* was its *ghee*, the summer its *fuel* and the autumn its oblation.

*Notes*—यज्ञम्—According to Sāyaṇa the sacrifice performed by gods with the Perfect Being as its oblation, spring as its ghee, summer as its fuel, *autumn as its oblation, was a mental one.* अतन्वत—√*tan* to stretch, impf. mid. 3rd. plu.; unaccented because preceded by यत् आसीत्—√*as* to be impf. 3rd. sing.

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः ॥
तेन । देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥७॥

सा० भा०—यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः । कीदृशमित्यत्राह । अग्रतः सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम् । एतच्च प्रागेवोक्तम् 'तस्माद्विराळजायत विराजो अधि पूरुषः' इति । तेन पुरुषरूपेण पशुना देवा अयजन्त । मानसयागं निष्पादितवन्त इत्यर्थः । के ते देवा इत्यत्राह । साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूलाः ऋषयः मन्त्रद्रष्टारः च ये सन्ति । सर्वेऽप्ययजन्तेत्यर्थः ॥

शब्दा०—तम्=उस, यज्ञम्=बलि दिये जानेवाले को, बर्हिषि=दूर्वा पर, प्र औक्षन्=जल से अभिषेक कराया, पुरुषम्=पुरुष को, जातम्=उत्पन्न, अग्रतः=सर्व प्रथम, तेन=उससे, देवाः=देवताओं ने, अयजन्त=यज्ञ किया, साध्याः=प्रजापति आदि सृष्टि कर्ताओं ने, ऋषयः=ऋषियों ने च=और, ये=जो ।

हि० अ०—उस सबसे पहले उत्पन्न बलि दिये जानेवाले पुरुष (पशु) को देवताओं ने पवित्र दूर्वा पर (रखकर) प्रोक्षण किया । उस (पुरुष पशु) से देवताओं ने, प्रजापति आदि सृष्टिकर्ताओं ने, तथा जो ऋषि थे उन्होंने यज्ञ किया ।

*Trans*—They besprinkled the first-born Purusa, as to be sacrified, on the sacred grass. Therewith the gods, the Ssādhyas and the seers that are, all sacrificed.

*Notes*—यज्ञम्—√*yaj* to sarifice, gerundive in य. अयजन्त—√*yaj* to sacrifice, impf. 3rd. mid. plu. साध्याः—'A class of sacrificial beings probably ancient divine sacrificers' (Griffith) ; 'divine beings including Prajāpati etc. who are capable of creation' (Sāyaṇa). Macdonell thinks it to be in apposition to देवाः.

तस्मात् । यज्ञात् । सर्वऽहुतः । सम्ऽभृतम् । पृषत्ऽआज्यम् ॥
पशून् । तान् । चक्रे । वायव्यान् । आरण्यान् । ग्राम्याः । च ।
ये ॥८॥

सा० भा०—सर्वहुतः । सर्वात्मकः पुरुषः यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत् । तादृशात् तस्मात् पूर्वोक्तात् मानसात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं संभृतं संपादितम् । दधि चाज्यम् चेत्येवमादिभोग्यजातं सर्वं संपादितमित्यर्थः । तथा वायव्यान् वायुदेवताकाँल्लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान् । आरण्या हरिणादयः । तथा ये च ग्राम्याः गवाश्वादयः तानपि चक्रे । पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते—'वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः । अन्तरिक्ष देवत्याः खलु वै पशवः । वायव एवैनान्परिददाति' (तै० ब्रा० ३. २. १-३) इति ॥

शब्दा०—तस्मात्=उस, यज्ञात्=यज्ञ से, सर्वहुतः=उस यज्ञ से जिसमें सर्वरूपात्मक पुरुष का हवन हुआ था, संभृतम्=इकट्ठा किया गया, पृषदाज्यम्=दधिमिश्रित घृत, पशून्=पशुओं को, तान्=उन, चक्रे=उत्पन्न किया, वायव्यान्=आकाश में रहनेवाले, आरण्यान्=जंगल में रहनेवाले, ग्राम्याः=ग्रामों में रहनेवाले, च=और, ये=जो थे ।

हि० अ०—उस यज्ञ से जिसमें सर्वरूपात्मक पुरुष का हवन हुआ था, दधिमिश्रित घृत इकट्ठा किया गया । (उससे एकत्रित दधिमिश्रित घृत से उस पुरुष ने) आकाश में रहने वाले, जंगल में रहने वाले तथा गावों में रहने वाले जो पशु थे उनको उत्पन्न किया ।

*Trans.*—From that *Sarvahut* sacrifice the butter mixed with curd was gathered up. He (or It) created

these creatures of the air, of the forest, and those of the village.

*Notes*—सर्वहुतः—'From the sacrifice in which omniformed Puruṣa was sacrificed '(Sāyana), 'fully made' (Peterson), 'great' (Griffith), 'completely offered' (Macdonell). संभृतम्—√bhr with सम् to gather, past part ; here it is used as a finite verb ; for accent see निहितः (I. 24 7). पृषदाज्यम्—'Ghee mixed with curd' (Sāyana), 'the mixture of cruds and butter' (Wilson), 'the dripping fat' (Griffith) 'clotted butter' (Macdonell); Karmadhāraya compd. accented on the final syllable of the second member. चक्रे—√kr to make, perf. mid. 3rd. sing. वायव्यान्—Final न् is not dropped because it is at the end of the Pāda.

तस्मात् । यज्ञात् । सर्वऽहुतः । ऋचः । सामानि । जज्ञिरे ॥
छन्दांसि । जज्ञिरे । तस्मात् । यजुः । तस्मात् । अजायत ॥९॥

सा० भा०—सर्वहुत तस्मात् पूर्वोक्तात् यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नाः । तस्मात् यज्ञात् छन्दांसि गायत्र्यादीनि जज्ञिरे । तस्मात् यज्ञात् यजुः अपि अजायत ॥

शब्दा०—तस्मात्=उस, यज्ञात्=यज्ञ से, सर्वहुतः=उस यज्ञ से जिसमें सर्वरूपात्मक पुरुष का हवन हुआ था, ऋचः=ऋचायें, सामानि=सामन्, जज्ञिरे=उत्पन्न हुये, तस्मात्=उससे, यजुः=यजुष्, तस्मात्=उससे, अजायत=उत्पन्न हुये ।

हि० अ०—उस सर्वहुत् यज्ञ से ऋचायें तथा साम उत्पन्न हुये; उससे (गायत्र्यादि) छन्द उत्पन्न हुये; उससे यजुष् उत्पन्न हुआ ।

*Trans*—From that *Sarvahut* sacrifice were born the *Rks* and the *Sāmans ;* from that were born the metres , from that were born the ritualistic formula.

*Notes*—जज्ञिरे—$\sqrt{jan}$ to generate, mid. perf. 3rd. plu. छन्दांसि—'Metres, Gāyatrī etc.(Sāyaṇa); Muir understands छन्दांसि to refer the Atharvaveda. Peterson adheres to this view. अजायत—$\sqrt{j\bar{a}}$ to be born, impf. mid. 3rd. sing.

तस्मा॑त् । अश्वाः॑ । अ॒जा॒य॒न्त॒ । ये । के । च॒ । उ॒भ॒याद॑तः ॥
गावः॑ । ह॒ । ज॒ज्ञि॒रे॒ । तस्मा॑त् । तस्मा॑त् । जा॒ताः । अ॒जा॒वयः॑ ॥१०॥

सा॰ भा॰—तस्मात् पूर्वोक्तायज्ञात् अश्वा अजायन्त उत्पन्नाः । तथा ये के च अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च उभयादतः ऊर्ध्वाधोभागयोरुभयोः दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा तस्मात् यज्ञात् गावः च जज्ञिरे । किंच तस्मात् यज्ञात् अजावयः च जाताः ॥

शब्दा॰—तस्मात्=उस सर्वहुत् यज्ञ से, अश्वाः=घोड़े, अजायन्त=उत्पन्न हुये, ये=जो, के=कोई, च=और, उभयादतः=दोनों तरफ दांत वाले, गावः=गायें, ह=निश्चित अर्थ का वाचक निपात, जज्ञिरे=उत्पन्न हुईं, तस्मात्=उससे, जाताः=उत्पन्न हुईं, अजावयः=बकरियाँ तथा भेड़ें।

हि॰ अ॰—उस (सर्वहुत् यज्ञ) से अश्व उत्पन्न हुये तथा वे सभी जो दोनों तरफ दांतवाले हैं। उससे गायें उत्पन्न हुईं; उससे बकरियां तथा भेड़ें (पैदा हुईं)।

*Trans.*—From that, horses were born, and all those that have two rows of teeth; from that, cows were born; form that, goats and sheep were born

*Notes*—उभयादतः—Those who have two rows of teeth; Bahuvrihi compd. accented on the first member. अजावयः—Goats and sheep; plural Dvandva compd. not analysed in the Pada-test.

यत् । पुरु॑षम् । वि । अद॑धुः । क॒ति॒धा । वि । अ॒क॒ल्प॒य॒न् ॥
मुख॑म् । किम् । अ॒स्य॒ । कौ । बा॒हू इति॑ । कौ । ऊ॒रू इति॑ ।
पादौ॑ । उ॒च्ये॒ते॒ इति॑ ॥११॥

सा० भा०—प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः । अस्य पुरुषस्य मुखं किम् आसीत् । कौ बाहू अभूताम् का ऊरू । कौ च पादावुच्येते । प्रथमं सामान्यरूपः प्रश्नः पश्चात् मुखं किमित्यादिना विशेषविषयाः प्रश्नाः ।

शब्दा०—यत्=जब, पुरुषम्=परम पुरुष को, वि अदधुः=विभक्त किया, कतिधा=कितने भागों में, वि अकल्पयन्=विभाजन किया, मुखम्=मुख, किम्=क्या था, अस्य=उसका, कौ=कौन, बाहू=दो भुजायें थी, कौ=कौन, ऊरू=दोनों जंघायें, पादौ=दोनों पैर, उच्येते=कहे जाते हैं ।

हि० अ०—जब (देवताओं ने) पुरुष को विभक्त किया (उस समय उसके) कितने भाग किये ? उसका मुख क्या था ? (उसकी) दोनों भुजायें क्या थी ? (उसकी) दोनों जंघायें क्या थी ? (उसके) दोनों पैर क्या कहे जाते हैं ?

*Trans.*—When they divided the Perfect Being, into how many parts did they make ? What was his mouth ? What the two arms ? What the two thighs and what are said his two feet ?

*Notes*—व्यदधुः—√*dhā* to put. impf. 3rd. plu.; not unaccented because preceded by यत् अकल्पयन्—√*klp* to make, impf. 3rd. plu. उच्येते—√*vac* to speak, pres. 3rd. dual ; final ए as dual is Pragrhya ; hence, इति in the Pada-text,

ब्राह्मणः । अस्य । मुखंम् । आसीत् । बाहू इति । राजन्यः । कृतः ॥ ऊरू इति । तत् । अस्य । यत् । वैश्यः । पत्ऽभ्याम् । शूद्रः । अजायत ॥१२॥

सा० भा०—इदानीं पूर्वोक्तानां प्रश्नानामुत्तराणि दर्शयति । अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखमासीत् मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः सः बाहू कृतः बाहुत्वेन निष्पादितः ।

बाहुभ्यामुत्पादित इत्यर्थः । तत् तदानीम् अस्य प्रजापतेः यत् यौ ऊरू तद्रूपः वैश्यः संपन्नः । ऊरुभ्यामुत्पन्न इत्यर्थः । तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्व-जातिमान् पुरुषः अजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तै० सं० ७.१.१.४) इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतयैव योजनीये ॥

शब्दा०—ब्राह्मण=ब्राह्मण, अस्य=उसका, मुखम्=मुख, आसीत् =था, बाहू=दोनों भुजाओं से, राजन्यः=क्षत्रिय, कृतः=बना, ऊरू=दोनों जंघायें, तत्=उनसे, उसकी यत्=जो थीं, वैश्यः=वैश्य, पद्भ्याम्=दोनों पैरों से, शूद्रः=शूद्र अजायत=उत्पन्न हुआ ।

हि० अ०—ब्राह्मण उसका मुख था, दोनों भुजाओं से क्षत्रिय हुआ; उसकी जो जंघायें थीं उनसे वैश्य हुआ, (उसके) दोनों पैरों से शूद्र उत्पन्न हुआ ।

*Trans.*—Brāhmaṇa was his mouth ; Kṣatriya was made of his two arms ; then his two thighs became Vaiśya, from feet Śudra was born.

*Notes*—कृतः—√kr to make, past part used as a finite verb. "The Brāhmṇa is called the mouth of Puruṣa as having the special privilege, as a priest, of addressing the gods in prayer. The arms of Puruṣa became the Rājanya, the prince and soldier who wields the sword and spear. His thighs, the strongest parts of his body, became the agriculturist and tradesman, the chief support of society ; and his feet, the emblems of vigour and activity, became the Sūdra or labouring man on whose toil and industry all ultimately rests. This is the only Passage in the Ṛgveda, which enumerates the four castes. (Griffith on X. 90.12. f.n.).

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत ॥ मुखात् ।
इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥१३॥

सा० भा०—यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। प्रजापतेः मनसः सकाशात् चन्द्रमाः जातः। चक्षोः च चक्षुषः सूर्यः अपि अजायत। अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ। अस्य प्राणाद्वायुरजायत ॥

शब्दा०—चन्द्रमाः=चन्द्रमा, मनसः=मन से, जातः=उत्पन्न हुआ, चक्षोः=आँख से, सूर्यः=सूर्य, अजायत=उत्पन्न हुआ, मुखात्=मुख से, इन्द्रः=इन्द्र, च=और, अग्निः=अग्नि, च=और, प्राणात्=प्राण से, वायुः=हवा, अजायत=उत्पन्न हुआ।

हि० अ०—(उस पुरुष के) मन से चन्द्रमा उत्पन्न हुआ; (उसकी) आँख से सूर्य उत्पन्न हुआ। (उसके) मुख से इन्द्र और अग्नि (उत्पन्न हुये); (उसकी) श्वास से वायु उत्पन्न हुआ।

*Trans.*—The moon was born from (his) mind; from (his) eye the sun was born. From (his) mouth Indra and Agni (where born); from (his ) breath wind was born.

नाभ्याः। आसीत्। अन्तरिक्षम्। शीर्ष्णः। द्यौः। सम्। अवर्तत ॥
पद्भ्याम्। भूमिः। दिशः। श्रोत्रात्। तथा। लोकान्।
अकल्पयन् ॥१४॥

सा० भा०—यथा चन्द्रादीन् प्रजापतेर्मनःप्रभृतिभ्योऽकल्पयन् तथा अन्तरिक्षादीन् लोकान् प्रजापतेः नाभ्यादिभ्यो देवाः अकल्पयन् उत्पादितवन्तः। एतदेव दर्शयति। नाभ्याः प्रजापतेर्नाभेः अन्तरिक्षमासीत्। शीर्ष्णः शिरसः द्यौ समवर्तत उत्पन्ना। अस्य पद्भ्यां पादाभ्यां भूमिः उत्पन्ना। अस्य श्रोत्रात् दिशः उत्पन्नाः ॥

शब्दा०—नाभ्याः=नाभी से, आसीत्=उत्पन्न हुआ था, अन्तरिक्षम्=अन्तरिक्षलोक, शीर्ष्णः=शिर से, द्यौः=द्युलोक, समवर्तत=उत्पन्न हुआ, पद्भ्याम्=दोनों पैरों से, भूमिः=पृथिवी, दिशः=दिशायें, श्रोत्रात्=कान से, तथा=इसी प्रकार, लोकान्=लोकों को, अकल्पयन्=सृष्टि की।

हि० अ० —(उसकी) नाभी से अन्तरिक्ष (उत्पन्न हुआ) था; शिर से आकाश उत्पन्न हुआ; दोनों पैरों से पृथिवी, कान से दिशायें। इसी प्रकार सभी लोकों की सृष्टि (देवताओं ने) की।

*Trans.*—From (his) navel was (produced) the middle region ; from (his) head was evolved the sky. from (his) two feet the earth ; the quarters from (his) ear. Thus they made the worlds.

*Notes*—समवर्तत—√*vrt* with सम् to produce, impf. mid. 3rd. sng. अकल्पयन्—√*klp* to make, impf. 3rd. plu.

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः ॥ देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥१५॥

सा० भा० – अस्य सांकल्पिकयज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधय उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः। अत एवाम्नायते – 'न पुरस्तात्परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहन्ति' (तै० स० २. ६ ६. ३) इति। तत एव आदित्यसहिताः सप्त परिधयोऽत्र सप्त छन्दोरूपाः। तथा समिधः त्रिः सप्त त्रिगुणीकृतसप्तसंख्याकाः एकविंशतिः कृताः। 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' (तै० स० ५. १. १०. ३) इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः। यत् यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं तन्वानाः कुर्वाणाः पशुम् अबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र 'यत्पुरुषेण हविषा' इत्युक्तम् ॥

शब्दा०—सप्त=सात, अस्य=उसकी, आसन्=थी, परिधयः=परिधियाँ, त्रिः सप्त=इक्कीस, समिधः=समिधायें, कृताः=बनाई गईं थीं, देवाः=देवताओं ने, यत्=जिस समय, यज्ञम्=यज्ञ, तन्वानाः=सम्पन्न करते हुये, अबध्नन्=बाधा था, पुरुषम्=परम पुरुष को, पशुम्=पशु के रूप में।

हि० अ०—उसकी सात परिधियां थीं; इक्कीस समिधायें बनाई गई थीं, जिस समय यज्ञ करते हुये देवताओं ने पुरुष पशु को बाँधा था।

*Trans.*—Seven were his enclosing (sticks); twenty one were made (his) fuel; when the gods, performing the sacrifice, bound the Perfect Being as a victim.

*Notes*—सप्तपरिधयः—According to Sâyaṇa seven fencing sticks here refer to seven metres, Gāyatrī etc, Mahidhara understands the seven fencing sticks as seven oceans. Macdonell takes the seven number as a sacred one. *According to him there are only three green sticks put around the sacrificial fire to fence it in.* कृताः—$\sqrt{kr}$ to make, past part. used as finite verb. तन्वानाः—$\sqrt{tan}$ to stetch, pres. part. nom. plu. अबध्नन्—$\sqrt{badh}$ to bind, impf. 3rd. plu.; not unaccented became it beigns the Pāda.

यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ॥ ते । ह । नाकम् । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ॥१६॥

सा० भा० – पूर्वं प्रपञ्चेनोक्तमर्थं संक्षिप्यात्र दर्शयति देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन संकल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् अयजन्त पूजितवन्तः। तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि आसन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः। अथोपासनतत्फलानुवादक भागार्थः संगृह्यते। यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधकाः देवाः सन्ति तिष्ठन्ति तत् नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति ॥

शब्दा—यज्ञेन=यज्ञ से, यज्ञम्=यज्ञ पुरुष का। अयजन्त=पूजन किया, देवाः=देवताओं ने, तानि=वे ही, धर्माणि=धर्म, प्रथमानि=मुख्य

प्रथम, आसन्=थे, ह=उनलोगों ने, ह=निश्चित अर्थ का वाचक एक निपात, नाकम्=स्वर्ग, महिमानः=पूजनेवाले, सचन्त=प्राप्त किये, यत्र=जहां पर पूर्वे=पुराने, साध्याः=प्रजापति आदि सृष्टि कर्ताओं का वर्ग, सन्ति=वास करते है, देवाः=देवता।

हि० अ०—यज्ञ से देवताओं ने यज्ञ पुरुष का पूजन किया; वे ही सर्व प्रथम धर्म थे। वे पूजनेवाले स्वर्ग को प्राप्त किये जहाँ पर सृष्टि करने में समर्थ प्रजापति आदि पुराने देवताओं का वर्ग तथा देवगण वास करते हैं।

*Trans.*—With the sacrifice gods sacrificed the victim. These were the first ordinances. Those mighty ones attained the heaven where the ancient Sādhyas and gods are dwelling.

*Notes*—यज्ञम्—See X. 90.7. अयजन्त—See X. 90 7. आसन्—$\sqrt{as}$ to be impf. 3rd. plu. सचन्त—$\sqrt{sac}$ to accompany, impf. 3rd. plu not augmented.

'किमिच्छन्ती' इत्येकादशर्चं नवमं सूक्तं त्रैष्टुभम् ऐन्द्रपुरोहितस्य बृहस्पतेर्गोषु वलनाम्नोऽसुरस्य भटैः पणिनामकैरसुरैरपहृत्य गुहायां निहितासु सतीषु बृहस्पतिप्रेरितेनेन्द्रेण गवामन्वेषणाय सरमा नाम देवशुनी प्रेषिता । सा च महतीं नदीमुत्तीर्य वलपुरं प्राप्य गुप्तस्थाने नीतास्ता गा ददर्श । अथ तस्मिन्नन्तरे पणय इदं वृत्तान्तमवगच्छन्त एनां मित्रीकर्तुं संवादमकुर्वन् । तत्र प्रथमातृतीयाद्या अयुजोऽन्त्यावर्जिताः पणीनां वाक्यानि । अत्र त ऋषयः सरमा देवता । द्वितीयाचतुर्थ्याद्या युज एकादशी च षट् सरमाया वाक्यानि । अतस्तासु सर्वैः पणयो देवता । तथा चानुक्रान्तं —'किमिच्छन्ती पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनिमिन्द्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः सा तान्युग्मान्त्याभिरनिच्छन्ती प्रत्याचष्टे इति । गतो विनियोगः ॥

किम् । इच्छन्ती । सरमा । प्र । इदम् । आनट् । दूरे । हि ।
अध्वा । जगुरिः । पराचैः ॥ का । अस्मेऽहितिः । का । परिऽतक्म्या । आसीत् । कथम् । रसायाः । अतरः । पयांसि ॥१॥

सा० भा० – अनयागच्छन्तीं सरमां दृष्ट्वा पणयो ब्रुवन्ति । सरमा शरणशीलैतन्नामिका देवशुनी किमिच्छन्ती किं प्रार्थयमाना सती इदं अस्मदीयं स्थानं प्र आनट् प्राप्नोत् । आङ्पूर्वो नशिर्व्याप्तिकर्मा । तस्य लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । छन्दस्यपि दृश्यत इत्याडागमः । पराचैः पराञ्चि पराङ्मुखान्यावृत्ति वर्जितानि यानि गमनानि तैः जगुरिः उद्गूर्णः । महता प्रयत्नेनापि गन्तुं न शक्यत इत्यर्थः । 'गॄ निगरणे' । 'आदृगमहन' इत्यादिना किन्प्रत्ययः । 'बहुलं छन्दसि' (पा० सू० ७. १. १०३) इत्युत्वम् । सादृशोऽयम् अध्वा दूरे हि विप्रकृष्टः खलु । यद्वा । पराचैः पराञ्चनैर्जगुरिरित्ययं गन्त्री पार्ष्णिभागमनालोकमाना सतीदं स्थानं प्राप्नोति । दूरेऽयमध्वा यदृच्छया गन्तुं न शक्यते । अतो वयमेतां पृच्छामः । हे सरमे का कीदृशी अस्मेहितिः । कोऽस्मास्वर्थहितिः । कोऽस्मासु त्वदपेक्षितार्थो निहितः । यद्वा । अस्मासु कोऽर्थो गतः दधातेर्हिनोतेर्वा क्तिनो रूपम् । आगच्छन्त्यास्तव का कीदृशी परितक्म्या रात्रिः आसीत् । यद्वा । तकतिर्गत्यर्थः । परितक्मनं परितो गमनं भ्रमणं वा कीदृशमासीत् । कथं च रसायाः शब्दायमानाया अन्तरिक्षनद्या योजनशतविस्तीर्णायाः

र्णाया पयांसि उदकानि अतरः तीर्णवत्यसि । एतद्वद । 'अत्र किमिच्छन्ती सरमेद प्रानट्' (निरु० ११ २५) इत्यादिक निरुक्त द्रष्टव्यम् ॥

शब्दा० किम्=क्या, इच्छन्ती=इच्छा करती हुई, सरमा=सरमा नाम की देवशुनी जिसे इन्द्र ने दूती बनाकर पणियों के पास भेजा था, इदम्=यहाँ, प्र आनट्=आई है, दूरे=दूर, हि=क्योंकि, अध्वा=मार्ग, जगुरि=उभरा हुआ, पराचै=गमनागमन से रहित, का=कौन सा, अस्मेहिति=हममें तुम्हारा अभिप्रेत अर्थ निहित है, का=कैसी, परितक्म्या=यात्रा, आसीत्=थी, कथम्=किस प्रकार, रसायाः=रसा नामक नदी के, अतरः=पार किया, पयांसि=जल को ।

हि० अ० क्या इच्छा करती हुई सरमा इस स्थान पर पहुची है, क्योंकि मार्ग बहुत दूर, उभरा हुआ तथा गमनागमन से रहित था। हममें तुम्हारा कौन सा अभिप्रेत अर्थ निहित है ? तुम्हारी यात्रा कैसी थी ? रसा के जल को तुमने कैसे पार किया ?

*Trans* —Desiring what Saramā has attained this place, for the path is far away, protuberant, devoid of going, what (your desired) is placed in us ? How was the journey ? How did you cross the waters of the Rasā river

*Notes* —इच्छन्ती —$\sqrt{}$*icch* to desire, pres part fem nom sing आनट् —$\sqrt{}$*naś* to attain, root-aorist, 3rd sing जगुरिः—Sāyana derives it from $\sqrt{}$*gr* to swallow with the Suffix किन् while Yāska followed by Grassmann from $\sqrt{}$*gu* or $\sqrt{}$*gam* to go Oldenberg derives it from $\sqrt{}$*jr* or *jur* to waste away, protuberant i e 'not fit to travel on' (Sāyana), 'losing itself or causing one to be lost or ingulfed' (Geldner), 'wearying', 'exhausting' (Oldenberg), 'engulfing' (Peterson) पराचै —Instr plu of पराच Sāyana derives it from अञ्च with परा का अस्मेहिति —हिति is derived from $\sqrt{}$*dhā* to put or $\sqrt{}$*hi* to impel, with the suffix क्तिन्, 'what (your desired) is placed in us' (Sāyana), 'what charges hast thou for

us' (Griffith) 'what is the message (placed) for us' (Peterson) परितक्म्या—See परितक्म्यायाम् (I 116 15) रसायाः—According to Sayana it is a river of middle region, hundred yojana wide Griffith takes it to refer here a mythical stream that flows around the atmosphere and the earth Some suggest it to be a river of Panjab, probably an affluent of Indus

इन्द्रस्य । दूतीः । इषिता । चरामि । महः । इच्छन्ती । पणयः । निऽधीन् । वः ॥ अतिऽस्कदः । भियसा । तत् । नः । आवत् । तथा । रसायाः । अतरम् । पयांसि ॥२॥

सा० भा०—अनया तान् सरमा प्रत्युवाच । हे पणय एतन्नामका असुरा इन्द्रस्य दूती । 'सुपां सुलुक्' इति प्रथमैकवचनस्य सुश्छान्दस । अहम् इषिता तेनैव प्रेषिता सती चरामि । युष्मदीय स्थानमागच्छामि । किमर्थम् । वः युष्मदीयान् युष्मदीये पर्वतेऽधिष्ठापितान् महः महत निधीम् बृहस्पतेर्गोनिधीन इच्छन्ती कामयमाना सती चरामि । किंच अतिष्कदः । 'स्कन्दिर्गतिशोषणयो' । भावे क्विप् । अतिष्कन्दनादतिक्रमणाज्जातेन भियसा भयेन तत् नदीजल नः । पूजायां बहुवचनम् । माम् आवत् अरक्षत् । तथा तेन प्रकारेण रसायाः नद्या पयांसि उदकानि अतरं तीर्णवत्यस्मि ॥

शब्दा० इन्द्रस्य=इन्द्र की, दूती=संदेशवाहिका के रूप में, इषिता =भेजी गई, चरामि=विचरण कर रही हूं, महः=महान् इच्छन्ती=इच्छा करती हुई, पणयः=ओ पणि, निधीन्=खजाने को, वः=तुम्हारे, अतिष्कदः =कूदकर पार कर जाने के, भियसा=डर से, तत्=उस रसा के, जल ने, नः =हमारी, आवत्=रक्षा की, तथा=इस प्रकार, रसायाः=रसा के अतरम् =पार किया, पयांसि=जल को ।

हि० अ० इन्द्र की दूती उसके द्वारा भेजी गई मैं, ओ पणि, तुम लोगों के महान् धन की इच्छा करती हुई घूम रही हूं । (मेरे) कूदने के भय से उस (रसा के जल) ने मेरी सहायता की, इस प्रकार रसा के जल को मैंने पार किया ।

*Trans.*—As a messenger of Indra send by him, I wander, O Panis, seeking your great treasure. Through the fear of (my) overleaping, that (the water of Rasā) helped me; thus, I crossed the waters of the Rasā.

*Notes.*—इषिता—√*iṣ* to send, past part. fem. चरामि—√*car* to move, pres. 1rst. sing. अतिष्कदः—Abl. infinitive in अस् from √*skand* to leap, governed by the preposition अति; it should be construed with भियसा. Sāyaṇa renders it by 'अतिष्कन्दनादतिक्रमणाज्जातेन भियसा भयेन' (through the fear of overleaping); Peterson and Geldner adopt this interpretation. Grassmann followed by Oldenberg renders it by 'as I stood afraid of the leap'; Griffith translates as 'from the fear of crossing'. तत्—Sāyaṇa takes it for नदीजलं while Geldner as an adverb of time supplying रसा understood as the subject. Peterson takes तत् 'that' to be the subject and according to him, it is a parenthetical conjunction. Griffith takes it to mean 'this'. आवत्—√*av* to protect, impf. 3rd. sing. अतरम्—√*tṝ* to cross, impf. 1rst sing.

कीदृङ् । इन्द्रः । सरमे । का । दृशीका । यस्य । इदम् । दूतीः । असरः । पराकात् ॥ आ । च । गच्छात् । मित्रम् । एन । दधाम । अथ । गवाम् । गोऽपतिः । नः । भवाति ॥३॥

सा० भा० — तेषां वाक्यम् । हे सरमे तव स्वामी इन्द्रः कीदृक् । कियत्पराक्रमवान् । का दृशीका । तस्य कीदृशी दृष्टिः । दृष्टिरूपा सेना कियती । यस्य दूतीः दूती त्वम् इदम् अस्मदीयं स्थानं पराकात् अतिदूरात् असरः आगमः । इति तामुक्त्वा इदानीं ते परस्परमाहुः । एषा सरमा आ गच्छात् च आगच्छतु च । गमेर्लेट्याडागमः । स्वामी भवाति भवतु । न ह्येकस्या गोः किंतु बहूनां गवां स्वामी भवतु । वृत्त्यवृत्तिभ्यां स्वामित्वं बाहुल्यं च विवक्ष्यते ॥

शब्दा०—कीदृङ्=कैसा, इन्द्रः=इन्द्र, सरमे=ओ सरमा, का=कैसी, दशीका=दृष्टि, यस्य=जिसकी, इदम्=यहां, दूतीः=दूती, असरः=आई हो, पराकात्=बहुत दूर से, च=अगर, आगच्छात्=आवे, मित्रम्=मित्र, एन=उसको, दधाम=बनावेंगे, अथ=तब, गवाम्=गायों का, गोपतिः=गायों का स्वामी, नः=हमारी, भवाति=होगा।

हि० अ० – ओ सरमा इन्द्र कैसा है ? उसकी दृष्टि कैसी है, जिसकी दूती (तुम) दूर से यहाँ आई हो ? अगर वह आवे, हम उसे मित्र बनावेंगे; तब वह हमारी गायों का संरक्षक होगा।

*Trans.*—O Saramā what like is Indra, what-like his look, whose envoy (you) have come here from afar ? If he comes, we shall make him friend ; then he will be the lord of our kine.

*Notes.*—दृशीका—Look ; Sāyaṇa takes it to secondarily mean 'army'. Thus according to him, का दृशीका means 'how-much-armied'. Griffith takes it to mean 'what is his aspect'. असरः—√sṛ to flow, 'a'-aorist, 2nd. sing. च—Peterson takes it in the sense of चेत्. गच्छात्—√gam t go, subju. 3rd. sing.; not unaccented because preceded by च in the sense of चेत्. (निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् —Pāṇ VIII.1.30). एन—Geldner takes it in the sense of अनेन; *according* to oldenberg एन means 'through him'; Griffith takes it to mean 'him' as the secondary object of दधाम, the pimary object being मित्रम्. Grassmann followed by Peterson renders it here by 'then' the correlative of च. दधाम—√*dhā to put*, Subju. 1rst. plu. गोपतिः—Tapuruṣa compd. generally accents the second member, but when the second member is the word पति, it accents the first member (पत्यावैश्वर्ये—Pāṇ. VI. 2.18) भवाति—√*bhū* to be, subju. 3rd. sing.

न । अहम् । तम् । वेद । दभ्यम् । दभत् । सः । यस्य । इदम् । दूतीः । असरम् । पराकात् ॥ न । तम् । गूहन्ति । स्रवतः । गभीराः । हताः । इन्द्रेण । पणयः । शयध्वे ॥४॥

सा० भा०—सरमा वदति। हे पणयः तम् इन्द्रं दभ्यं हन्तव्यमिति न वेद न जानामि। दभेः अचो यत्। कथम्। सः इन्द्रः दभत् सर्वान् जनान् दभति हिनस्त्येव। दभतेर्लेटिरूपम् वाक्यभेदादनिघातः। यस्य दूतीः दूती अहम् इदं युष्मदीयं स्थानं पराकात् अतिदूराद्देशात् असरं प्राप्ताभूवम्। इन्द्रो हिंसितव्यो न भवतीत्यत्र युक्तिमाह। स्रवतः। स्रवणं स्रवः। तमाचरन्ति। आचारार्थे क्विप्। तुगागमः। अतिरूपम्। स्रवणशीलाः गभीराः गम्भीराः नद्यः तम् इन्द्रं न गूहन्ति न संवृण्वन्ति। नाच्छादयन्ति। किंत्वाविष्कुर्वन्ति। वयं यस्य महिम्ना समुद्रं प्रतिसरामः। तस्मात्तर्हि इन्द्रस्य इन्द्रमेव प्रकटीकुर्वन्ति। 'गुहू संवरणे'। भौवादिकः। तस्मात् हे पणयः यूयम् इन्द्रेण तादृशपराक्रमेण हताः सन्तः शयध्वे। 'शीङ् स्वप्ने'। 'बहुलं छन्दसि' इति शपो लुगभावः॥

शब्दा०—न=नहीं, अहम्=मैं, तम्=उसको, वेद=जानती हूँ, दभ्यम्=कष्ट पहुँचाया जानेवाला, दभत्=कष्ट पहुँचाता है, सः=वह, यस्य=जिसकी, इदम्=यहाँ, दूतीः=दूती, असरम्=आई हूँ, पराकात्=बहुत दूर से, न=नहीं, तम्=उसको, गूहन्ति=छिपा सकती हैं, स्रवतः=बहती हुई, गभीराः=गहरी जलवाली नदियाँ, हताः=मारा जाकर, इन्द्रेण=इन्द्र के द्वारा, पणयः=ओ पणि, शयध्वे=पड़ जावोगे।

हि० अ०—मैं उसको कष्ट पहुँचाया जानेवाला नहीं समझती, वह कष्ट देता है, जिसकी दूती मैं बहुत दूर से यहाँ आई हूँ। बहती हुई गहरी जलवाली नदियाँ उसको छिपा नहीं सकतीं; इन्द्र द्वारा मारा जाकर तुम लोग, ओ पणि, (पृथिवी पर) पड़ जावोगे।

Trans.—I know him not to be harmed, (but) he harms (others), whose envoy I have come here from afar. The deep rivers flowing cannot conceal him; killed by Indra (you will) lie (on the ground), O Paṇis.

*Notes*—वेद— $\sqrt{vid}$ to know, perf. 1rst. sing. दभ्यम्— $\sqrt{dabha}$ to harm, with the suffix यत्. दभत्— $\sqrt{dabh}$ to harm, injun. 3rd. sing.; not unaccented because it begins a new sentence. गूहन्ति— $\sqrt{gūh}$ to hide, pres. 3rd. plu. स्रवतः—From $\sqrt{sṛ}$ to flow, with the suffix क्विप्. हताः— $\sqrt{han}$ to kill, past part. plu. शयध्वे— $\sqrt{śī}$ to lie, (I. conju.), pres. mid. 2nd. plu.

इमाः । गावः । सरमे । याः । ऐच्छः । परि । दिवः । अन्तान् । सुऽभगे । पतन्ती ॥ कः । ते । एनाः । अव । सृजात् । अयुध्वी । उत । अस्माकम् । आयुधा । सन्ति । तिग्मा ॥५॥

सा० भा०—क्रुद्धाः पणयः प्रत्यूचुः । हे सुभगे शोभनसौभाग्यवति हे सरमे दिवः द्युलोकस्य अन्तान् पर्यन्तान् परि पतन्ती कुत्र गावस्तिष्ठन्तीति परितो गच्छन्ती त्वम् इमाः परिदृश्यमानाः याः गावः । सुब्व्यत्ययः । गाः ऐच्छः कामयसे ताः एनाः गाः ते त्वदीयः कः अयुध्वी अयुद्ध्वा अव सृजात् । अस्मात् पर्वतादवसृजेत् । विनिर्गमयेत् । सृजेर्लेटि रूपम् । अयुध्वी । युधेः क्त्वाप्रत्यये 'स्नात्व्यादयश्च' इति निपातितः । नञ्समासत्वाल्ल्यबादेशाभावः । नञः प्रकृतिस्वरत्वम् । उत अपि च अस्माकं तिग्मा तीक्ष्णानि आयुधा आयुधानि सन्ति । तस्मादस्माभिर्युद्धमकृत्वा को वा गा आहरति ॥

शब्दा०—इमाः=इन, गावः=गायों को, सरमे=ओ सरमा, याः=जिनको, ऐच्छः=इच्छा की है, दिवः=आकाश के, अन्तान्=छोर तक, सुभगे=ओ कल्याणकारी, परिपतन्ती=चारों तरफ घूमती हुई, कः=कौन, ते=तुममें, एनाः=इनको, अवसृजात्=मुक्त कर सकता है, अयुध्वी=विना युद्ध किये, उत=और, अस्माकम्=हमारे, आयुधा=शस्त्र, सन्ति=हैं, तिग्मा=तीक्ष्ण ।

हि० अ० ओ सरमा, आकाश की छोर तक चारों तरफ घूमती हुई इन गायों को, जिनकी तुमने इच्छा की है, ओ कल्याणकारी, विना युद्ध किये तुममें कौन मुक्त कर सकता है ? और हमारे शस्त्र भी तीक्ष्ण हैं ।

*Trans*.—O Saramā, these kine, wandering about

to the extremities of heaven, which you have desired, O auspicious one, who will make them free without fighting? And our weapons are sharpened.

*Notes*—ऐच्छः— √*icch* to desire, impf. 2nd. sing.; not unaccented because preceded by या. अवसृजात्—√*srj* with अव to set free, subju. 3rd. sing. अयुध्वी— √*yudh* to fight gerund in त्वी, old form of त्वा; नञ् compd. accented on the first member.

असेन्या । वः । पणयः । वचांसि । अनिषव्याः । तन्वः । सन्तु । पापीः ॥ अधृष्टः । वः । एतवै । अस्तु । पन्थाः । बृहस्पतिः । वः । उभया । न । मृळात् ॥६॥

सा० भा०—सा तानभिराह । हे पणयः वः युष्माकं वचांसि पूर्वोक्तानि वचनानि असेन्या असेन्यानि । सेनार्हाणि न भवन्ति । सेनाशब्दात् तदर्हतीत्यर्थे 'छन्दसि च' इति यत्प्रत्ययः । नञा समासः । 'ययतोश्चातदर्थे' (पा० सू० ६. २. १५६) इत्युत्तरपदान्तोदात्तत्वम् । तथा तन्वः युष्मदीयानि शरीराणि अनिषव्याः इष्वर्हाणि न सन्तु पराक्रमराहित्येन । पूर्ववत् प्रत्ययः । 'ओर्गुणः' (पा० सू० ६. ४. १४६) इति गुणः । स्वरश्च तादृक् । यतः पापीः पापयुक्तानि खलु । 'छन्दसीवनिपौ' इतीप्रत्ययः । जसः सु । किंच वः युष्मदीयः पन्थाः मार्गः एतवै गन्तुम् अधृष्टः असमर्थः अस्तु । 'इण् गतौ' इत्यस्य तुमर्थे तवैप्रत्ययः । 'तवै चान्तश्च युगपत्' (पा० सू० ६. २. ५१) इति धातोः प्रत्ययस्य च युगपदुदात्तत्वम् । तत्र हेतुमाह । वः युष्मदीयात् उभया उभयविधान् पूर्वोक्तांस्तन्वो देहान् बृहस्पतिः इन्द्रप्रेरितः न मृळात् न सुखयेत् । किंतु बाधेत । 'मृड सुखने' । लेट्यागमः ॥

शब्दा०—असेन्या=शस्त्र के आघात से सुरक्षित, वः=तुम्हारे, पणयः=ओ पणि, वचांसि=वचन, अनिषव्याः=बाणों के निशान से सुरक्षित, तन्वः=शरीर, सन्तु=हो सकते हैं, पापीः=पापाचरण करनेवाले, अधृष्टः=अगम्य, वः=तुम्हारे पास, एतवै=जाने के लिये, अस्तु=हो सकता है, पन्थाः=मार्ग, बृहस्पतिः=बृहस्पति देवता, वः=तुम लोगों पर उभया=दोनों प्रकार से, न=नहीं, मृळात्=दया करेंगे ।

हि० अ०—ओ पणि, तुम्हारे वचन शस्त्र के आघात से सुरक्षित, तथा पापी शरीर बाणों के निशान से बचनेवाले हो सकते हैं; तुम्हारे पास पहुँचने के लिये मार्ग अगम्य हो सकता है; किन्तु किसी (भी) प्रकार से बृहस्पति दया नहीं करेंगे।

*Trans.*—O Pains, your speeches (may be) not to be wounded, your sinful bodies (may be) not to be killed with arrows; the path may be invincible to reach you; but in neither way Bṛhaspati will show you mercy.

*Notes*—असेन्या—A तद्धित word derived from सेना with the suffix यत्; नञ् compd. generally accents the first member but it *also accents* the second member when the second member is a तद्धित word, negating the quality (ययतोश्चातदर्थे—Pāṇ VI. 2.156). 'Proof against darts' (Oldenberg), 'ready with weapons' (Grassmann), 'unsoldierly or not inimical' (Geldner), 'immune from (the blows of) weapons' (Peterson), 'weak *for* wounding' (Griffith). अनिपव्याः—Not to be killed with arows; grammatical construction is the same as असेन्या. सन्तु—√*as* to be, impv. 3rd. plu. अधृष्टः—√*dhṛṣ* to dare, past part. नञ् compd accented on the first member; 'invincible, 'unmastered '(Griffith) unmolested (Peterson). एतवै—Dative infinitive in तवै from √*i* to go; the infinitive in तवै accents the root and the suffix (अन्तश्च तवै युगपत्—Pāṇ. VI. 1.200).

अयम् । निऽधिः । सरमे । अद्रिऽबुध्नः । गोभिः । अश्वेभिः । वसुऽभिः । निऽऋष्टः ॥ रक्षन्ति । तम् । पणयः । ये । सुऽगोपाः । रेकु । पदम् । अलकम् । आ । जगन्थ ॥७॥

सा० भा०—वे पुनराहु । हे सरमे अयं निधि अस्मदीय कोश अद्रिबुध्नः । 'बन्ध बन्धने' । 'बन्धेर्ब्रधिबुधी च' (उ० सू० ३ ५) इति नप्रत्ययो बुध इत्यादेश अद्रिबन्धको यस्य तादृश । तथा आहुतं गोभिरश्वेभिः अश्वैश्च वसुभि आत्मीयैर्धनैश्च न्यृष्टः नितरा प्राप्तो भवति । 'ऋषी गतौ' । क्तप्रत्यये 'यस्य विभाषा' इतीट्प्रतिषेध । 'गतिरनन्तर' इति गते प्रकृतिस्वरत्वम् । सुगोपाः 'गुपू रक्षणे' । आयप्रत्ययान्तात् क्विपि अतोलोपय-लोपौ । सुष्ठु गोपायितार ये पणय तेऽसुरा त निधि रक्षन्ति पालयन्ति । रेकु । 'रेकृ शङ्कायाम्' औणादिक उप्रत्यय । शङ्कित गोभि शब्दायमान पदम् अस्माभि पालित स्थानम् अलकं व्यर्थमेव आ जगन्थ आगतवत्यसि । गमेर्लिटि रूपम् ॥

शब्दा०—अयम्=यह, निधिः=खजाना, सरमे=भो सरमा, अद्रि-बुध्नः=पर्वतों से ढका हुआ है, गोभि=गायों से, अश्वेभिः=अश्वों से, वसुभि=सम्पदाओं से, न्यृष्टः=भरा हुआ है, रक्षन्ति=रक्षा करते हैं, तम्=उसको, पणयः=पणि, ये=जो, सुगोपाः=कुशल रक्षक, रेकु=रिक्त, पदम्=स्थान पर, अलकम्=व्यर्थ में, आ जगन्थ=आई हो ।

हि० अ०—ओ सरमा, यह खजाना पर्वतों से ढका हुआ है, गायों, अश्वों तथा सम्पदाओं से भरा हुआ है । पणि जो कुशल रक्षक हैं, इसकी रक्षा करते हैं, तुम व्यर्थ में इस खाली स्थान पर आई हो ।

*Trans*—O Sarama, this treasure is paved with the rock and is fully rushed with cows, horses and riches Panis who are excellent protectors guard it, you have come to an empty place in vain

*Notes*—अद्रिबुध्न—Sāyana derives बुध्न from √*bandh* to bind and takes अद्रिबुध्न to mean 'bound with the rock' Griffith takes it to mean 'paved with the rock' and Peterson as 'founded on the rock' Bahuvrihi compd accented on the first member न्यृष्टः—√ṛs to rush, past part रक्षन्ति—√*raks* to guard, pres 3rd plu रेकु—Sayana derives it from √*rek* to suspect, to doubt, with the suffix उ, MWD derives it from √*ric* to leave रेकु पदम् is a Sanskrit idiom to express empty

or fruitless place. अलकम्—In vain: the root is $\sqrt{al}$ to avoid. आजगन्थ—$\sqrt{gam}$ to go, perf. 2nd. sing.

आ । इह । गमन् । ऋषयः । सोमऽशिताः । अयास्यः । अङ्गिरसः । नवऽग्वाः ॥ ते । एतम् । ऊर्वम् । वि । भजन्त । गोनाम् । अथ । एतत् । वचः । पणयः । वमन् । इत् ॥८॥

सा० भा०—सरमा पुनः प्रत्युवाच । हे पणयः सोमशिताः सोमेन तीक्ष्णीकृताः सोमपानेन मत्ताः । 'शिञ् निशाने' । कर्मणि क्तप्रत्ययः । 'तृतीयाकर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । तादृशाः नवग्वाः नवगतयः । यद्वा । अङ्गिरसां सत्रमासीनानां मध्ये केचन नवसु मासु समाप्तिमकुर्वन् ते नवग्वाः । अनेन दशग्वा अप्युपलक्ष्यन्ते । उभयविधास्ते अङ्गिरसः ऋषयः तेषां प्रथमः अयास्यः एतन्नामा च त एते इह युष्मदीये स्थाने आ गमन् आगच्छेयुः । गमेः 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लुङ् । लृदित्वाच्च्लेरङ् । आगत्य च ते गोनाम् । 'गोः पादान्ते' इति छन्दसि नुडागमः । गवाम् ऊर्वं तं समूहं वि भजन्त विभागं कुर्युः । अत्रापि पूर्ववत् सार्वकालिको लुङ् । अथ अनन्तरं पणयः यूयम् एतद्वचः पूर्वं यत् व्यर्थमागतासीति मह्यमवोचत तद्वाक्यं तदा वमन्नित् वमन्तः परित्यजन्तः एव भवथ । 'वमु उद्गिरणे' । शतरि 'सुपां सुलुक्' इति जसो लुक् । नुमागमः । संयोगान्तस्य लोपः । यद्वा । लङि रूपम् । स्वरश्छान्दसः ।

शब्दा०—इह=यहाँ, आ गमन्=आयेंगे, ऋषयः=ऋषि, सोमशिताः =सोमपान से उत्तेजित, अयास्यः=अयास्य नामक ऋषि, अङ्गिरसः= अङ्गिरस नामक ऋषि, नवग्वाः=नवग्वा नाम के ऋषि, ते=वे, एतम्=इस, ऊर्वम्=बाड़े को, वि भजन्त=बांट लेंगे, अथ=तब, एतत्=इन, वचः= वचनों को, पणयः=पणियों को, वमन्=उगलना पड़ेगा, इत्=निश्चित अर्थ का वाचक निपात ।

हि० अ०—सोमपान से उत्तेजित अयास्य, अङ्गिरस, तथा नवग्वा आदि ऋषि यहां आयेंगे । वे गायों के इस बाड़े को बांट लेंगे । तब पणियों को अपने इन वचनों को उगलना पड़ेगा ।

*Trans.*—Here would come the Soma-sharpened seers viz Ayāsya, Aṅgirases, Navagvā etc. They

would divide this stall of kine. Then Paṇis would have to vomit these words.

*Notes*—गमन्—$\sqrt{}$*gam* to go, 'a'-aorist. injun. 3rd. plu. सोमशिता—शिता is past part. from $\sqrt{}$*śā* to sharpen. Sāyaṇa derives it from $\sqrt{}$*śi* to aim at; Tatpuruṣa compd. accented on the first member (see इन्द्रेषिते III. 33.2) विभजन्त—$\sqrt{}$*bhaj* with वि to divide, injun. mid. 3rd. plu. गोनाम्—Gen. plu. of गो is गवाम्, but when it occurs at the end of a Pāda it is written as गोनाम् (गोः पादान्ते–Pāṇ. VII. I.57). वमन् $\sqrt{}$*vam* to vomit, injun. 3rd. plu.; not unaccented because followed by the emphatic particle इत्.

एव । च । त्वम् । सरमे । आऽजगन्थं । प्रऽबोधिता । सहसा ।
दैव्येन ॥ स्वसारम् । त्वा । कृणवै । मा । पुनः । गाः ।
अप । ते । गवाम् । सुऽभगे । भजाम ॥६॥

सा० भा० तथैवमुक्ते सति पणयः प्रत्ययवाक्यमाहुः। हे सरमे त्वं दैव्येन देव संबन्धिना सहसा बलेन प्रबाधिता यथा तथा बलपुरं प्राप्य तत्र स्थिता गा दृष्ट्वा पुनरागच्छेति तेन प्रपीडिता त्वम् एवं चेत् आजगन्थ आगतवत्यसि। चशब्दश्चेदर्थे। 'निपातैर्यद्यदिहन्त' इति तिङो निघाताभावः। गमेर्लिटि थलि रूपम् 'सह सुपा' इत्यत्र सहेति योगविभागात् समासः। 'तिङि चोदात्तवति' इति गतेर्निघातः लित्स्वरः। तर्हि त्वा त्वां स्वसारं भगिनीं कृणवै करवै। समूहापेक्षयैकवचनम्। त्वं तु पुनः मा गाः। इन्द्रादीन् मा गच्छ। अपि तर्हि हे सुभगे सरमे ते त्वदीयानां गवां समूहं पर्वतादपगमय्य भजाम। त्वं च वयं च विभजाम विभागं करवामेत्यर्थः।

शब्दा०—एव=इस प्रकार, च=अगर, त्वम्=तुम, सरमे=ओ सरमा, आजगन्थ=आई हो, प्रबाधिता=पीड़ित की गई, सहसा=शक्ति से, दैव्येन=देवताओं को, स्वसारम्=बहन, त्वा=तुमको, कृणवै=बनाते हैं, मा=मत, पुनः=फिर, गाः=जावो, ते=तुमको, गवाम्=गायों का, सुभगे=ओ कल्याणकारी, अप भजाम=अलग हिस्सा देंगे।

हि० अ०—इस प्रकार, ओ सरमा, अगर तुम देवताओं की शक्ति से पीड़ित की गई आई हो, हम तुम्हें बहन बनाते हैं, फिर मत जाओ। हम, ओ कल्याण कारी, तुम्हें गायों का अलग हिस्सा देंगे।

*Trans.*—Thus, O Saramā, if you have come pressed by the power of gods, we make you our sister, do not go back; O *auspicious one, we give you a separate* share of the kine.

*Notes*—च—It is used in the sense of चेत्. आजगन्थ—See X. 108.7: not unaccented because preceded by च in the sense of चेत् (see accent on गच्छात् X.108.3). प्रबाधिता—√*bādh* to oppress, past. part. fem. sing.; for accent see निहितः (I. 24.7). कृणवै—√*kṛ* to make, pres 1rst. sing. (in the sense of collective.) गाः—√*gā* to go, root-aorist, injun. 2nd. sing. भजाम—√*bhaj* to divide, subju. 1rst. plu.

न । अहम् । वेद । भ्रातृऽत्वम् । नो इति । स्वसृऽत्वम् । इन्द्रः । विदुः । अङ्गिरसः । च । घोराः ॥ गोऽकामाः । मे । अच्छदयन् । यत् । आयम् । अप । अतः । इत । पणयः । वरीयः ॥१०॥

सा० भा०—सा तान् प्रत्याचष्टे। हे पणयः अहं भ्रातृत्वं न वेद न जानामि। तथा स्वसृत्वं च नो वेद नैव जानामि। के जानन्ति तानाह। इन्द्रः घोराः शत्रूणां भयंकराः अङ्गिरसश्च विदुः जानन्ति। किंच अस्मात् स्थानादहं यत् यदा आयम् इन्द्रादीन् प्राप्नवम्। 'अय पय गतौ'। लङि रूपम्। तदा मे मदीयाः गोकामाः युष्माभिरपहृता गाः कामयमाना इन्द्रादयः अच्छदयन्। युष्मदीयं स्थानमाच्छादयन्ति। 'छद अपवारणे'। अतः कारणाद् हे पणयः वरीयः उरुतरं गवां वृन्दं परित्यज्य अप इत अन्यत्स्थानं प्रति गच्छत। यद्वा। वरीयः प्रभूतमतिदूरं देशं गच्छत। इत। 'इण गतौ'। लोटि रूपम्। वरीयः उरुशब्दादीयसुनि 'प्रियस्थिर' इत्यादिना वरादेशः॥

शब्दा०—न=नहीं, अहम्=मैं, वेद=जानती हूँ, भ्रातृत्वम्=भाईपना, न=न तो, स्वसृत्वम्=बहनपना, इन्द्रः=इन्द्र, विदुः=जानते हैं अङ्गि-

रसः=अङ्गिरस, च=और, घोराः=भयङ्कर, गोकामाः=गायों की इच्छा करनेवाले, मे=मुझको, अच्छदयन्=मालूम पड़े, यत्=जब, आयम्=आई, अप=अलग, अतः=इसलिये, इत=चले जावो, पणयः=ओ पणि, वरीयः=किसी विस्तृत स्थान पर।

हि० अ० मैं न तो भाईपना जानती हूँ न बहनपना, इन्द्र तथा भयानक अङ्गिरस इसको जानते हैं। जब मैं आई वे गायों की इच्छा करनेवाले मालूम पड़े। अत ओ पणि, (इसकी अपेक्षा) किसी विस्तृत स्थान पर चले जावो।

*Trans*—I know neither brotherhood nor sisterhood Indra and terrible Angirases know it They seemed me cow-longing, when I departed Therefore, O Panis, go away to a wider place (than this)

*Notes*—वेद्—See X 108 4 विदुः—√vid to know, perf 3rd plu अच्छदयन्—√chad to seem, caus impf 3rd plu आयम्—√i to go, impf 1rst sing, not unaccented because preceded by यत् अतः—Sāyana followed by Griffith takes it to mean 'therefore' but Peterson as 'than this' इत—√i to go, impv 2nd plu वरीयः—Comparative degree of उरु wide

दूरम् । इत । पणयः । वरीयः । उत् । गावः । यन्तु । मिनतीः । ऋतेन ॥ बृहस्पतिः । याः । अविन्दत् । निऽगूळ्हाः । सोमः । ग्रावाणः । ऋषयः । च । विप्राः ॥११॥

सा० भा०—हे पणयः यूय वरीयः उरुतर दूरं दूरदेशम् इत गच्छत। युष्माभिरपहृता गावः ऋतेन सत्येन मिनतीः मिनत्यो द्वारस्य पिधायक पर्वत हिंसत्यो विदारयन्त्य उत् यन्तु तस्मादुद्गच्छन्तु। यद्वा। मिनती। व्यत्ययेन कर्मणि शतृ। मीयमाना युष्माभिर्बाध्यमानास्ता गाव सुब्व्यत्यय। गा ऋतेन स्तुतिभिर्मन्तव्येनेन्द्रेण सहायेन बृहस्पत्यादय उद्यन्तु पर्वतादुद्गमयन्तु। निगूढाः नितरा स्थापिता याः गा बृहस्पति अविन्दत् लप्स्यते तथा सोमः तदभिषवकारिण ग्रावाण च विप्राः मेधाविन ऋषयः अङ्गिरस च लप्स्यन्ते। 'विदॢ लाभे'। तौदादिक तस्मात् 'छन्दसि लुङ्लङ्लिट' इति भविष्यदर्थे लङ्। 'शे मुचादीनाम्' इति नुमागम ॥

शब्दा०—दूरम्=दूर, इत=चले जावो, पणयः=ओ पणि, वरीयः=विस्तृत स्थान पर, गावः=गायें, उत् यन्तु=बाहर निकलें, मिनती=चट्टानों को तोड़ती हुई, ऋतेन=सत्य नियम के अनुकूल, बृहस्पतिः=बृहस्पति ने, याः=जिनको, अविन्दत्=ढूढ़ निकाला है, निगूळ्हाः=छिपी हुई, सोमः=सोम ने, ग्रावाणः=पत्थरों ने, ऋषयः=ऋषियों ने, च=और, विप्राः=बुद्धिमान ।

हि० अ०—ओ पणि, (इसकी अपेक्षा) किसी विस्तृत स्थान पर चले जाओ। छिपी हुई गायें, जिनको बृहस्पति ने पता लगाया है, (जिनको) सोम ने, पत्थरों ने, तथा बुद्धिमान ऋषियों ने (पता लगाया है) (चट्टानों के आवरण को) तोड़ती हुई, सत्य नियम के अनुकूल बाहर निकलें ।

*Trans.*—O Panis, go to a wider place. Let the hidden cows, which Brhaspati has found, and Soma, stones, and the inspired seers (have found) emerge out, breaking (the paving rocks), according to the holy law.

*Notes*—यन्तु.—√*i* to gó, impv. 3rd. plu मिनतीः—√*mī* to damage, pres. part. nom. plu. This word has variously been interpreted. Grassmann renders it as 'changing place'; Geldner followed by Peterson as 'escaping'; Oldenberg proposes to read मिमतीः-lowing; Griffith in his translation adopts this sense. अविन्दत्—√*vid* to find. impv. 3rd. sing.; not unaccented because preceded by याः. निगूळ्हाः—√*guh* to hide, past part.

'हिरण्यगर्भः' इति दशर्चं नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यस्यार्षं त्रैष्टुभम्। कशब्दाभिधेयः प्रजापतिर्देवता। तथा चानुक्रान्तम्—'हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायम्' इति। गतः सूक्तविनियोगः। प्राजापत्यस्य पशोर्वपापुरोडाशहविषां क्रमेणादितस्तिस्रोऽनुवाक्यास्ततस्तिस्रो याज्याः। सूत्रितं च— हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः' (आश्व० श्रौ० ३.८) इति वरुणप्रघासेषु कायस्य हविषो हिरण्यगर्भ इत्येषा याज्या। सूत्रितं च—'कया नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थातुर्वाजिने तृतीयः' (आश्व० श्रौ० २.१७) इति ॥

हिरण्यऽगर्भः। सम्। अवर्तत। अग्रे। भूतस्य। जातः। पतिः। एकः। आसीत्॥ सः। दाधार। पृथिवीम्। द्याम्। उत। इमाम्। कस्मै। देवाय। हविषा। विधेम ॥१॥

सा० भा०—हिरण्यगर्भः हिरण्मयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथा च तैत्तिरीयकं—'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय' (तै० सं० ५.५.१.२) इति। यद्वा हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भ इत्युच्यते। अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत। मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत। यद्यपि परमात्मैव हिरण्यगर्भः तथापि तदुपाधिभूतानां वियदादीनां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते। स च जातः जातमात्र एव एकः अद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिः ईश्वरः आसीत्। न केवलं पतिरासीदेव अपि तर्हि सः हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवम् उत अपि च इमाम् अस्माभिर्दृश्यमानां पुरोवर्तिनीमिमां भूमिम्। यद्वा पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षं दिवं भूमिं च दाधार धारयति। 'छन्दसि लुङ्लङ्लिटः' इति सार्वकालिको लिट्। तुजादित्वादभ्यासदीर्घः। कस्मै अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते। यद्वा सृष्ट्यर्थं कामयत इति कः। कमेर्डप्रत्ययः। यद्वा। कं सुखम्। तद्रूपत्वात् क इत्युच्यते। अथवा इन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान्। स इन्द्रः प्रत्यूचे यदीदं ब्रवीष्यहं कः स्यामिति तदेव

त्वं भवेति । अतः कारणात् क इति प्रजापतिराख्यायते । 'इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्' (ऐ० ब्रा० ३. २१) इत्यादिकं ब्राह्मणमत्रानुसंधेयम् । यदासौ किंशब्दस्तदा सर्वनामत्वात् स्मैभावः सिद्धः । यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम् । 'सावेकाचः' इति प्राप्तस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी । कं प्रजापति देवाय देवं दानादिगुणयुक्तम् हविषा प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन पुरोडाशेन वा विधेम वयमृत्विजः परिचरेम । विधतिः परिचरणकर्मा ॥

शब्दा०—हिरण्यगर्भः=प्रजापति, समवर्तत=उत्पन्न हुआ, अग्रे=जन्म से ही, भूतस्य=प्राणियों का, जातः=उत्पन्न, पतिः=स्वामी, एकः=एक, आसीत्=था, सः=उसने, दाधार=धारण किया, पृथिवीम्=पृथिवी को, द्याम्=आकाश, उत=और, इमाम्=इन सबको, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें ।

हि० अ०—हिरण्यगर्भ सबसे प्रथम उत्पन्न हुआ; वह जन्म से ही उत्पन्न प्राणियों का अकेला स्वामी था। उसने पृथिवी, आकाश तथा इन सबको धारण किया। किस देवता का हम हवि से पूजन करें ?

*Trans.*—Hiraṇyagarbha was produced in the beginning; he was the born *sole* lord of all beings. He held the earth, the sky and all these. What god should we worship with oblation ?

*Notes*—हिरण्यगर्भः—According to the traditional view Hiraṇyagarbha is Prajāpati. Some take him to be sun-god : *'as the great power of the universe, from which all other powers and existences, divine and earthly are derived, a conception which is the nearest approach to the later mystical conception of Brahmā the creator of the world'*—wallis. समवर्तत—See X.90.14. दाधार—$\sqrt{}$*dhr* to hold, perf. 3rd. sing. ; the reduplicated syllable in दाधार is *regularly lengthened.* कस्मै—*This* word has been interpreted variously : Sāyaṇa following the tradition takes the word *'ka'* for Prajāpati. Scholars, generally, interpret it taking as dative sing.

of the pronominal stem किम्. Now the difficulty is if the word '*ka*' is for Prajāpati it would certainly be a noun and accordingly it would be inflected like words terminating in अ. Thus the dative sing. of 'ka' would be काय like देवाय. Sāyana's reply to this is that '*ka*' is conventional word for Prajapati; but it is irregularly inflected like pronoun. विधेम—√*vidh* to worship, opt. 1rst. plu.

य: । आत्मऽदाः । बलऽदाः । यस्य॑ । विश्वे॑ । उपऽआस॑ते । प्रऽशिष॑म् । यस्य॑ । देवाः ॥ यस्य॑ । छाया । अमृत॑म् । यस्य॑ । मृत्युः । कस्मै॑ । देवाय॑ । हविषा॑ । विधेम ॥२॥

सा० भा०—यः प्रजापतिः आत्मदाः आत्मनां दाता । आत्मानो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते । यथाग्नेः सकाशाद्विस्फुलिङ्गा जायन्ते तद्वत् । यद्वा आत्मनां शोधयिता । 'दैप् शोधने' । 'आतो मनिन्' इति विच् । बलदाः बलस्य च दाता शोधयिता वा । यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे सर्वे प्राणिनः उपासते प्रार्थयन्ते सेवन्ते वा । 'शासु अनुशिष्टौ' । 'शास इत्' (पा० सू० ६. ४. ३४) इत्युपधाया इत्वम् । 'शासिवसिघसीनां च' इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । आसेरनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवति' इति गतिरनुदात्ता तथा देवाः अपि यस्य प्रशासनमुपासते । अपि च अमृतम् अमृतत्वम् । भावप्रधानो निर्देशः । यद्वा । अमृतम् । मरणं नास्त्यस्मिन्नित्यमृतं सुधा । बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । तदपि यस्य प्रजापतेः छाया छायेव वर्ति भवति । मृत्युः यमश्च प्राणापहारी छायेव भवति । तस्मै कस्मै देवाय इत्यादि समानं पूर्वेण हविषा पुरोडाशात्मनेति तु विशेषः ॥

शब्दा०—यः=जो, आत्मदाः=प्राण देनेवाला, बलदाः=बल देनेवाला, यस्य=जिसको, विश्वे=सम्पूर्ण, उपासते=मानते हैं, प्रशिषम्=आज्ञा, यस्य=जिसकी, देवाः=देवता, यस्य=जिसकी, छाया=प्रतिबिम्ब, अमृतम्=अमृत, यस्य=जिसको, मृत्युः=मृत्यु, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें ।

हि० अ०—जो प्राण देनेवाला है, बल देनेवाला है, जिसकी आज्ञा सभी मानते हैं, जिसकी (आज्ञा) देवता (भी मानते हैं) जिसकी छाया अमृत है, जिसकी (छाया) मृत्यु (है)। किस देवता का हम हवि से पूजन करें ?

*Trans.*—Who is the giver of vital breath, giver of strength; whose commandment all obey, whose, even the gods; whose shadow is immortality, whose, the death. What god should we worship with oblation ?

*Notes*—उपासते—√*ās* with उप to worship, to obey, pres. 3rd. plu.; not unaccented because preceded by यस्य. प्रशिषम्—Derived from √*śās* to preach; the first syllable of the root has been changed in to इ (शास इत्—Pāṇ, VI. 4.34) and dental स् into cerebral ष् (शासिवसिघसीनां च—Pāṇ. VII.3.60).

यः । प्राणतः । निऽमिषतः । महिऽत्वा । एकः । इत् । राजा । जगतः । बभूव ॥ यः । ईशे । अस्य । द्विऽपदः । चतुःऽपदः । कस्मै । देवाय । हविषा । विधेम ॥३॥

सा० भा०—यः हिरण्यगर्भः प्राणतः प्रश्वसतः । 'अन प्राणने' आदादिकः । 'शतुरनुमः' इति विभक्ते उदात्तत्वम् । निमिषतः अक्षिपक्ष्मचलनं कुर्वतः । अत्रापि पूर्ववद्विभक्तिरुदात्ता । जगतः जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन । 'सुपां सुलुक्' इति तृतीयाया आकारः । माहात्म्येन एक इत् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति । भवतेर्णलि लिति' (पा० सू० ६. १. १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः चतुष्पदः गवाश्वादेश्च यः प्रजापतिः ईशे ईष्टे । 'ईश ऐश्वर्ये' । आदादिकोऽनुदात्तेत् । 'लोपस्त आत्मनेपदेषु' इति तलोपः । अनुदात्तेत्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । अस्य । 'ऊडिदम्' इतीदमो विभक्तिरुदात्ता । द्वौ पादौ यस्य स द्विपात् । 'संख्यासुपूर्वस्य' (पा० सू० ५. ४. १४०) इति पादस्यान्त्यलोपः समासान्तः । भसंज्ञायां 'पादः पत्' (पा० सू० ६. ४. १३०) इति पद्भावः 'द्वित्रिभ्यां पाद्दन्' (पा० सू० ६. २. १९७) इत्येकदेशविकृतस्या-

नन्यत्वादुत्तरपदान्तोदात्तत्वम् । स्वरवर्नमेवंव चतुष्पद इत्यत्रापि प्रक्रिया । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरः । पूर्वपदस्य 'नुः संख्यायाः' (फि०सू० २. ५) इत्याद्युदात्तत्वम् । 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् । ईदृशो यः प्रजापतिस्तस्मै कस्मै इत्यादि सुबोधं हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः ॥

शब्दा०—यः=जो, प्राणतः=श्वांस लेनेवाले, निमिषतः=पलक मारनेवाले, महित्वा=महिमा से, एकः=अकेले, इत्=ही, राजा=शासक, जगतः =जंगमों का, बभूव=हुआ हैं, यः=जो, ईशे=शासन करता हैं, अस्य= इस, द्विपदः=दो पैरवाले का, चतुष्पदः=चार पैरवाले का, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें ।

हि० अ०—जो अपनी महानता से श्वांस लेनेवाले तथा पलक मारनेवाले जंगमों का अकेला राजा हुआ हैं; जो इस दो पैरवाले तथा चार पैरवाले का शासन करता हैं । किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—Who through his grandeur, became the sole king of all the moving world that breathes and winks ; who masters over these bipeds and quadrupeds. What god should we worship with oblation ?

*Notes*—प्राणतः—√*an* with प्र to breathe, pres. part. gen. sing. निमिषतः—√*miṣ* with नि to wink, pres. part. gen. sing. ; words with the suffix शतृ terminating in अत् accent the termination (शतुरनुमो नद्यजादी—Pān. VI. 1.173). बभूव—√*bhū* to be, perf. 3rd. sing. ; not unaccented because syntactically connected with यः. ईशे—√*īś* to be master, pres. 3rd. sing. ; त् has been dropped in the mid. (लोपस्त आत्मनेपदेषु—Pāṇ. VII. 1.41) ; not unaccented because preceded by यः. अस्य–Not unaccented because its substantive द्विपदः immediately follows in the same Pāda. (ऊडिदम्-Pān VI. 1.171). द्विपदः– The word पाद as the second member of the compd. loses its final syllable when preceded by any numerals or सु as the first member (संख्यासुपूर्वस्य—Pāṇ. V.4.140), and

again पाद् becomes पत् (पादः पत्—Pān VI 4. 130), in the Bahuvrihi compd when the word पात् occurs as the second member, and numerals, two, three etc as the first member, the second member is accented (द्वित्रिभ्यां पाद्दन्मूर्धसुबहुव्रीहौ—Pān VI 2 197) चतुष्पद— Grammatical construction is the same as द्विपद; but it is accented on the first member according to the original nature of Bahuvrihi

यस्य॑ । इ॒मे । हि॒मऽव॑न्तः । म॒हि॒ऽत्वा । यस्य॑ । स॒मु॒द्रम् । र॒सया॑ । स॒ह । आ॒हुः ॥ यस्य॑ । इ॒माः । प्र॒ऽदिशः॑ । यस्य॑ । बा॒हू इति॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धे॒म ॥४॥

सा० भा०—हिमा अस्मिन् सन्तीति हिमवान्। तेन बहुवचनान्तेन सर्वे पर्वता लक्ष्यन्ते। यथा छत्रिणो गच्छन्तीति। हिमवन्तः हिमवदुपलक्षिता इमे दृश्यमाना सर्वे पर्वता यस्य प्रजापते महित्वा महत्त्वं माहात्म्यमैश्वर्यमिति आहु। तेन सृष्टत्वात्तद्रूपेणावस्थानाद्वा। तथा रसया। रसो जलम्। तद्वती रसा नदी। अर्शआदित्वादच्। जातावेकवचनम् रसाभिर्नदीभि सह समुद्रम्। पूर्ववदेकवचनम्। सर्वान् समुद्रान् यस्य महाभाग्यमिति आहुः कथयन्ति सृष्ट्यभिज्ञा। यस्य च इमाः प्रदिशः प्राच्याद्या आग्नेयाद्या कोणदिश ईशितव्या। तथा बाहू। वचनव्यत्ययः। बाहवो भुजाः। भुजवत्प्राधान्ययुक्ता प्रदिशश्च यस्य स्वभूताः। तस्मै कस्मै इत्यादि समानं पूर्वेण॥

1 शब्दा०—यस्य=जिसकी, इमे=ये, हिमवन्त=पर्वत, महित्वा=महिमा, यस्य=जिसको, समुद्रम्=समुद्र को, रसया=रसा के, सह=साथ, आहु=कहते हैं, यस्य=जिसकी, इमाः=ये, प्रदिश=दिशायें, यस्य=जिसकी, बाहू=भुजायें, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें।

हि० अ०—जिसकी महिमा में पर्वत, जिसकी (महिमा) रसा सहित समुद्र (ऐसा वे) कहते हैं, जिसकी ये दिशायें, जिसकी भुजायें (उप दिशाय) हैं। किस देवता का हमलोग हवि से पूजन करें?

*Trans.*—Whose grandeur the snowy mountains, whose the oceans with the Rasā (they) say; whose these quarters, whose the arms (mid-quarters). What god should we worship with oblation ?

*Notes*—आहुः—√*ah* to say. perf. 3rd. plu.

येन॑ । द्यौः । उ॒ग्रा । पृ॒थि॒वी । च॒ । दृ॒ळ्हा । येन॑ । स्व १ रिति स्वः॑ । स्त॒भि॒तम् । येन॑ । नाकः॑ ॥ यः । अ॒न्तरि॑क्षे । रज॑सः । वि॒-ऽमानः॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धे॒म ॥५॥

सा० भा०—येन प्रजापतिना द्यौः अन्तरिक्षम् उग्रा उद्गूर्णं विशेषा गहनरूपं वा । पृथिवी भूमिः च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं स्तब्धं कृतम् । यथाधो न पतति तथोपरि अवस्थापितमित्यर्थः । 'प्रसितस्कभितस्तभित' इति निपात्यते । तथा नाकः आदित्यश्च येन अन्तरिक्षे स्तभितः । यः च अन्तरिक्षे रजसः उदकस्य विमानः निर्माता । तस्मै कस्मै इत्यादि गतम् ॥

शब्दा०—येन=जिससे, द्यौः=आकाश, उग्रा=शक्तिशाली, पृथिवी =पृथिवी, च=और, दृळ्हा=स्थिर, येन=जिससे, स्वः=प्रकाशलोक, स्तभितम्=स्थिर रखा है, येन=जिसके द्वारा, नाकः=सूर्य, यः=जो, अन्तरिक्षे=अन्तरिक्ष में, रजसः=लोकों को, विमानः=नाप रहा है, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें ।

हि० अ०—जिसके द्वारा द्युलोक शक्तिशाली है, तथा पृथिवी स्थिर है; जिसके द्वारा प्रकाशलोक स्थिर रखा है, तथा जिसके द्वारा सूर्य (रखा है); जो अन्तरिक्ष में लोकों को नाप रहा है । किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—By whom the sky is strong and earth is fixed fast, by whom the region of light is propped, by whom the sun; who in the mid-air is measuring the regions. What god should we worship with oblation ?

*Notes*—स्वः—See Appendix-'B' under rules of rendering Saṁhitā-text into Pada-text (5. ii n). स्तभितम्—√*stabh* to prop, past part. रजसः—'Water' (Sāyaṇa), 'regions' (Griffith). विमानः—√*mā* to measure, root-aorist part.

यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभि । ऐक्षेताम् । मनसा । रेजमाने इति ॥ यत्र । अधि । सूरः । उत्ऽइतः । विऽभाति । कस्मै । देवाय । हविषा । विधेम ॥६॥

सा० भा०—क्रन्दितवान् रोदितवाननयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ । श्रूयते हि—'यदरोदीत्तदनयो रोदस्त्वम्' (तै० ब्रा० २.२.९.४) इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्या अभ्यैक्षेताम् आवयोर्महत्त्वमनेन इत्यन्वपश्येताम् । 'ईक्ष दर्शने' । लङि अडादित्वादाद्युदात्तः । कीदृश्यौ द्यावापृथिव्यौ । रेजमाने राजमाने दीप्यमाने । आकारस्य व्यत्ययेनैत्वम् । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यत्र । लिटः कानच् । 'फणां च सप्तानाम्' (पा०सू० ६.४.१२५) इत्येत्वाभ्यासलोपौ । 'छन्दस्युभयथा' इति सार्वधातुकत्वाच्छप् । अत एव 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्यः उदितः उदयं प्राप्तः सन् विभाति प्रकाशते । उत्पूर्वादितेः कर्मणि निष्ठा । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् तस्मै कस्मै इत्यादि पूर्ववत् ॥

शब्दा०—यम्=जिसको, क्रन्दसी=आकाश तथा पृथिवी, अवसा=रक्षा के लिये, तस्तभाने=स्थिर किये गये, अभि ऐक्षेताम्=देखते हैं, मनसा=मन से, रेजमाने=चमकते हुये, यत्र=जहां, अधि=पर, सूरः=सूर्य, उदितः=निकला हुआ, विभाति=चमकता है, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें।

हि० अ० (प्राणियों की) रक्षा के लिये स्थिर किये गये आकाश तथा पृथिवी चमकते हुये, मन से जिसको देखते हैं; जहां पर उदय हुआ सूर्य चमकता है। किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—Whom heaven and earth, propped

(with a view) to protect (the beings), shining, look with their mind; whereupon the risen sun shines. What god should we worship with oblation ?

*Notes*—वस्तमाने—√*stabh* to prop. perf. part. nom dual; final ए is Pragṛhya. अभ्यैक्षेताम्—√*īkṣ* to see impf. 3rd. dual; not unaccented because syntactically connected with यम्. रेजमाने—√*rej* to tremble, pres. part. nom. dual; final ए is Pragṛhya Sāyaṇa takes रेजमाने as राजमाने. According to him, आ in राज irregularly has become ए and is accented He also conjectures that 'originally it should be रराजमाने the reduplicated syllable being dropped (फणां च सप्तानाम्—Pāṇ. VI. 4. 125). 'Then dropping of reduplicated syllable is indicated by changing आ into ए which being indication of redupicated syllable is accented (अभ्यस्तानामादिः—Pāṇ VI. 1.189). उदितः—√*i* with उत् to rise, past part विभाति—√*bhā* to shine, pres. 3rd. sing.; not unaccented because preceded by यत्.

आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् । दधानाः । जनयन्तीः । अग्निम् ॥ ततः । देवानाम् । सम् । अवर्तत । असुः । एकः । कस्मै । देवाय । हविषा । विधेम ॥७॥

सा० भा० बृहतीः बृहत्यो महत्यः । जसि 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । 'बृहन्महतोरुपसंख्यानम्' इति ङीप उदात्तत्वम् । अग्निम् । उपलक्षणमेतत् । अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीः जनयन्त्यः तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्यः आपो ह आप एव विश्वमायन् सर्वं जगत् व्याप्नुवन् यत् यस्मात् ततः तस्माद्धेतोः देवानां देवादीनां सर्वेषां प्राणिनाम् असुः प्राणभूतः एकः प्रजापतिः समवर्तत समजायत । यद्वा । यत् यं गर्भं दधाना आपो विश्वात्मनावस्थिताः ततो गर्भभूतात्प्रजापतेर्देवादीनां प्राणात्मको वायुरजायत । अथवा । यत् । लिङ्ग-

वचनयोर्व्यत्ययः । उक्तलक्षणा या आपो विश्वमावृत्य स्थिताः ततस्ताभ्योऽद्भ्यः सकाशादेकोऽद्वितीयोऽसुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम । तस्मै कस्मै इत्यादि गतम् ॥

शब्दा० — आपः=जल ने, ह=निश्चित अर्थ का वाचक निपात, यत्=जिस, बृहतीः=महान्, विश्वम्=सम्पूर्ण लोक को, आयम्=व्याप्त किया था, गर्भम्=गर्भ, दधानाः=धारण करते हुये, जनयन्तीः=उत्पन्न करते हुये, अग्निम्=अग्नि को, ततः=उसी से, देवानाम्=देवताओं का, समवर्तत=उत्पन्न हुआ, असुः=प्राण, एकः=एकमात्र, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें।

हि० अ० — गर्भ धारण करते हुये तथा अग्नि (आदि महाभूतों) को उत्पन्न करते हुये जिस महान् जल ने सम्पूर्ण लोक को व्याप्त किया था, उसी से देवताओं का एकमात्र प्राण (रूप वायु) उत्पन्न हुआ। किस देवता का हमलोग हवि से पूजन करें?

*Trans.*—Great waters, which swept over the world bearing the germ and creating the fire (etc.) ; therefrom the sole breath of the gods was produced. What god should we worship with oblation ?

*Notes*—बृहतीः—√*brh* to make big, pres. part. आयन् —√*i* to go impf. 3rd. plu ; not unaccented because preceded by यत्. दधानाः—√*dhā* to put, pres. part जनयन्तीः —√*jan* to generate, pres part. caus. समवर्तत —See X. 90.14

यः । चित् । आपः । महिना । परिऽअपश्यत् । दक्षम् । दधानाः । जनयन्तीः । यज्ञम् ॥ यः । देवेषु । अधि । देवः । एकः । आसीत् । कस्मै । देवाय । हविषा । विधेम ॥८॥

सा० भा० — यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीः उत्पादयन्तीः तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधानाः धारयित्रीः । दधातेर्हेतौ शानच् । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । ईदृशी आपः । व्यत्ययेन प्रथमा ।

अपः प्रलयकालीना मह्निना महिम्ना । छान्दसो मलोपः । स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान् यः च देवेष्वधि देवेषु मध्ये देवः तेषामपीश्वरः सन् एकः अद्वितीयः आसीत् भवति । अस्तेश्छान्दसो लङ् । 'अस्तिसिचोऽपृक्ते' (पा० सू० ७. ३. ९६) इतीडागमः । तस्मै कस्मै इत्यादि गतम् ॥

शब्दा०—यः=जिसने, चित्=और, आपः=जल को, मह्निना=महिमा से, परि अपश्यत्=चारों तरफ से देखा, दक्षम्=जनयित्री शक्ति को धारण करनेवाले, जनयन्तीः=उत्पन्न करनेवाले, यज्ञम्=यज्ञ को, यः=जो, देवेषु=देवताओं के, अधि=ऊपर, देवः=देव, एकः=अकेला, आसीत्=था, कस्मै=किस, देवाय=देवता का हविषा=हवि से, विधेम=पूजन करें।

हि० अ०—जिसने अपनी महिमा से जनयित्री शक्ति को धारण करनेवाले, यज्ञ को उत्पन्न करनेवाले जलों को देखा; जो देवताओं के ऊपर एक देव था। किस देवता का हमलोग हवि से पूजन करें?

*Trans.*—Who with his greateness saw over the waters bearing the productive force, producing the sacrifice; who was the sole God over all gods. What god should we worship with oblation?

*Notes*—आपः—Irregular use of nom. plu. for acc. plu. अपः. पर्यपश्यत्—√*paś* to see, impf. 3rd. sing.; not unaccented because preceded by यः; preposition is compounded and is unaccented.

मा। नुः। हिंसीत्। जनिता। यः। पृथिव्याः। यः। वा। दिवम्। सत्यऽधर्मा। जजान॥ यः। च। अपः। चन्द्राः। बृहतीः। जजान। कस्मै। देवाय। हविषा। विधेम॥९॥

सा० भा०—स प्रजापतिः नः अस्मान् मा हिंसीत् मा बाधताम्। यः पृथिव्याः भूमेः जनिता जनयिता स्रष्टा। 'जनिता मन्त्रे' इति णिलोपो निपात्यते। 'उदात्तयणो हल्पूर्वात्' इति पृथिवीशब्दाद्विभक्तेरुदात्तत्वम्। यो वा यश्च सत्यधर्मा सत्यमवितथं धर्म जगतो धारणं यस्य स तादृशः प्रजापतिः दिवम्

अन्तरिक्षोपलक्षितान् सर्वान् लोकान् जजान जनयामास। जनी प्रादुर्भावे'। णिचि वृद्धौ 'जनीजृष्क्नसुरञ्जः' इति मित्वात् 'मितां ह्रस्वः' इति ह्रस्वत्वम्। ततो लिटि 'अमन्त्रे' (पा० सू० ३. १. ३५) इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम्। यश्च बृहतीः महतीः चन्द्राः आह्लादिनीः अपः उदकानि जजान जनयामास। 'ऊडिदम्' इत्यादिना अप्शब्दादुत्तरस्य शस उदात्तत्वम्। तस्मै कस्मै इत्यादि गतम्॥

शब्दा० — मा=मत, नः=हमलोगों को, हिंसीत्=कष्ट दे, जनिता=उत्पन्न करनेवाला, यः=जो, पृथिव्याः=पृथिवी को, यः=जो, वा=और दिवम्=आकाश को, सत्यधर्मा=सत्य नियमवाले, जजान=उत्पन्न किया, यः=जिसने, च=और, अपः=जलको, चन्द्राः=आह्लादकारी, बृहती=महान्, जजान=उत्पन्न किया, कस्मै=किस, देवाय=देवता का, हविषा=हवि से, विधेम=पूजन करें।

हि० अ० —जो पृथिवी को उत्पन्न करनेवाला है, जो सत्य नियमवाला है, जिसने आकाश को उत्पन्न किया, जिसने आह्लादकारी महान् जल को उत्पन्न किया, वह हमें कष्ट न दे। किस देवता का हमलोग हवि से पूजन करें ?

*Trans.*—May he not injure us, who is the begetter of the earth, he whose laws are true, who generated the heaven, and who generated the great and beautiful waters. What god should we worship with oblation ?

*Notes*—हिंसीत्—√*hims* to injure, 'is'-aorist injun. 3rd. sing जनिता—√*jan* to generate, with the suffix तृच् सत्यधर्मा—Whose laws are true; Bahuvrihi compd. accented on the first member. जजान—√*jan* to generate, perf. 3rd. sing; not unaccented because preceded by यः.

प्रजापते। न। त्वत्। एतानि। अन्यः। विश्वा। जातानि। परि। ता। बभूव॥ यत्ऽकामाः। ते। जुहुमः। तत्। नः। अस्तु। वयम्। स्याम। पतयः। रयीणाम्॥१०॥

सा० भा०—इळादधाख्य इष्टघयने प्राजापत्यस्य हविषः 'प्रजापते इत्येषानुवाक्या । सूत्रितं च—प्राजापत्य इळादधः प्रजापते न त्वदेतान्यन्यः' (आश्व० श्रौ० २.१४)इति । केशनखकीटादिभिः दुष्टानि हवींष्यनर्पाप्सुप्रक्षिपेत् । सूत्रितं च—'अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः' (आश्व० श्रौ० ३. १०) इति । चौलादिकर्मस्वप्येषा होमार्था । सूत्रितं च—तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूंषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च' (आश्व० गृ० १. ४. ४) इति ।

हे प्रजापते त्वत् त्वत्तोऽन्यः कश्चित् एतानि इदानीम् वर्तमानानि विश्वा विश्वानि सर्वाणि । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । जातानि प्रथम विकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति । न व्याप्नोति । त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषीति भावः । परिपूर्वो भवतिः परिग्रहार्थः । वयं च यत्कामाः यत्फलं कामयमानाः ते तुभ्यं जुहुमः हवींषि प्रयच्छामः तत् फलं नः अस्माकम् अस्तु भवतु तथा वयं च रयीणां धनानां पतयः ईश्वराः स्याम भवेम । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् ।

शब्दा०—प्रजापते=ओ प्रजापति, न=नहीं, त्वत्=तुमसे, एतानि=ये, अन्य=भिन्न विश्वा=सम्पूर्ण, जातानि=प्राणी, परि=चारो तरफ से व्याप्त करने वाले, ता=वे, बभूव=हो सकते, यत्कामाः=जिस इच्छा से, ते=तुमको जुहुमः=स्तुति करते हैं, तत्=वह कामना, नः=हमारी, अस्तु=पूर्ण होवे, वयम्=हमलोग, स्याम=होवें, पतयः=स्वामी, रयीणाम्=धन के ।

हिं० अ०—ओ प्रजापति, तुमसे भिन्न ये जितने उत्पन्न जीव हैं वे तुमको चारों तरफ से व्याप्त नहीं कर सकते; जिस कामना से हम तुम्हें हवि प्रदान करते हैं वह हमारी इच्छा पूरी हो । हम धन के स्वामी बनें ।

*Trans.*—O Prajāpatı all these created beings, beside thee, cannot surround thee. May that be of ours seeking which we offer thee May we be the lord of riches

*Notes*—यत्कामाः—Desirons of which ; this type of compd. is called Syntactical compd. It is of the nature of Bahuvrihı and is accented on the first member.

जुहुमः–$\sqrt{}$*hu to sacrifice, pres.* 1rst. *plu.*, not unaccented because preceded by यत् The first line has been interpreted variously : 'Prajāpati, thou only comprehendest all these created things, and none beside thee' (Griffith), 'lord of every creature, thou rulest over all, and there is none beside thee' (Peterson).

---

No. [redacted] [ X. 129

एकादशेऽनुवाके त्रयोविंशतिसंख्याकानि सूक्तानि। तत्र 'नासदासीत्' इति सप्तर्चं प्रथमं सूक्तं त्रैष्टुभम्। परमेष्ठी नाम प्रजापतिर्ऋषिः। वियदादिभावानां सृष्टिस्थितिप्रलयादीनामत्र प्रतिपाद्यत्वात् तेषां कर्ता परमात्मा देवता। तथा चानुक्रान्तं—'नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं तु' इति। गतो विनियोगः॥

न । असत् । आसीत् । नो इति । सत् । आसीत् । तदानीम् । न । आसीत् । रजः । नो इति । विऽओम । परः । यत् ॥ किम् । आ । अवरीवरिति । कुह । कस्य । शर्मन् । अम्भः । किम् । आसीत् । गहनम् । गभीरम् ॥१॥

सा० भा०—'तपसस्तन्महिनाजायतैकम्' इत्यत्राग्रे सृष्टिः प्रतिपादयिष्यते। अधुना ततः प्रागवस्था निरस्तसमस्तप्रपञ्चा या प्रलयावस्था सा निरूप्यते। तदानीं प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तत् असत् शशविषाणवन्निरुपाख्यं न आसीत्। न हि तादृशात् कारणादस्य सतो जगत उत्पत्तिः संभवति। तथा नो सत् नैव सदात्मवत् सत्त्वेन निर्वाच्यम् आसीत्। यद्यपि सदसदात्मकं प्रत्येकं विलक्षणं भवति तथापि भावाभावयोः सहावस्थानमपि संभवति। कुतस्तयोः तादात्म्यमिति उभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। ननु नो सदिति पारमार्थिकसत्त्वस्य निषेधः। तर्ह्यात्मनोऽप्यनिर्वाच्यत्वप्रसङ्गः अथोच्येत। न। आनीदवातमिति तस्य सत्त्वमग्रे वक्ष्यते परिशेषान्मायाया एवात्र सत्त्वं निषिध्यत इति। एवमपि तदानीमिति विशेषणानर्थक्यं व्यवहारदशायामपि तस्याः पारमार्थिकसत्त्वाभावात्। अथ व्यावहारिकसतां पृथिव्यादीनां भावानां विद्यमानत्वात् कथं नो सदिति निषेधः। तत्राह। नासीद्रज इत्यादि। 'लोका रजांस्युच्यन्ते' (निरु० ४.१९) इति यास्कः। अत्र च सामान्यापेक्षमेकवचनम्। व्योम्नो वक्ष्यमाणत्वात्तस्याधस्तनाः पातालादयः पृथिव्यन्ता नासन्नित्यर्थः। तथा व्योम अन्तरिक्षं तदपि नो नैवासीत्। पर इति सकारान्तं परस्तादित्यर्थं वर्तते। परशब्दाच्छान्दसोऽस्तातेरर्थेऽसिप्रत्ययः। परः व्योम्नः परस्तादुपरिदेशे द्युलोकप्रभृतिसत्यलोकान्तं

यत् अस्ति तदपि नासीदित्यर्थः। अनेन चतुर्दशभुवनगर्भं ब्रह्माण्डं स्वरूपेण निषिद्धं भवति। अथ तदावरकत्वेन पुराणेषु प्रसिद्धानि यानि वियदादिभूतानि तेषामवस्थानप्रदेशं तदावरणनिमित्तं चाक्षेपमुखेन क्रमेण निषेधयति किमावरीवरिति। किम् आवरणीयं तत्त्वमावरकभूतजातम् आवरीवः। अत्यन्तमावृणुयात्। आवार्याभावात् तदावरकमपि नासीदित्यर्थः। वृणोतेर्यङ्लुगन्ताच्छान्दसे लङि तिपि रूपमेतत्। यद्वा। किमिति प्रश्नमेव। [illegible] तत्त्वमावरकमावृणुयात्। अविद्यमानत्वात्तदपि स्वरूपेण नासीदित्यर्थः। आवृण्वत् तत्तत्त्वं कुह कुत्र देशेऽवस्थायावृणोति। आधारभूतस्तादृशो देशोऽपि नासीदित्यर्थः। किंशब्दात् सप्तम्यर्थे हप्रत्ययः। 'कु तिहोः' (पा० सू० ७. २. १०४) इति प्रकृतेः कवादेशः। कस्य शर्मन् कस्य वा भोक्तुर्जीवस्य शर्मणि सुखदुःखसाक्षात्कारलक्षणे भोगे निमित्तभूते सति तदावरकं तत्त्वमावृणुयात्। जीवानामुपभोगार्था हि सृष्टिः। तस्यां हि सत्यां ब्रह्माण्डस्य भूतैरावरणं प्रलयदशायां च भोक्तारो जीवा उपाधिविलयात् प्रलीना इति कस्य कश्चिदपि भोक्ता न संभवतीत्यावरणस्य निमित्ताभावादपि तन्न घटत इत्यर्थः। एतेन भोग्यप्रपञ्चवत् भोक्तृप्रपञ्चोऽपि तदानीं नासीदित्युक्तं भवति। किंशब्दादुत्तरस्य ङसः 'सावेकाचः' इति प्राप्तस्योदात्तत्वस्य 'न गोश्वन्साववर्ण' इति प्रतिषेधः। 'सुपां सुलुक्' इति शर्मणः सप्तम्या लुक्। यद्यपि सावरणस्य ब्रह्माण्डस्य निषेधेन तदन्तर्गतमप्सत्त्वमपि निराकृतं तथापि 'आपो वा इदमग्रे सलिलमासीत्' (तै० सं० ७. १. ५. १) इति श्रुत्या कश्चिदपां सद्भावमाशङ्केत। तं प्रत्याचष्टे अम्भः किमासीत् इति। गहनं दुष्प्रवेशं गभीरं दुरवस्थानमतलस्पर्शम् ईदृशम् अम्भः किमासीत्। तदपि नैवासीदित्यर्थः। श्रुतिस्तदवान्तरप्रलयविषया ॥१॥

शब्दा० —न=नहीं, असत्=नामरूपादि रहित अवस्था, आसीत्=थी, नो=नहीं, सत्=नामरूपात्मक अवस्था, आसीत्=थी, तदानीम्=उस समय, न=नहीं, आसीत्=था, रजः=लोक, नो=नहीं, व्योम=आकाश, परः =ऊपर, यत्=जो है, किम्=कौन, आ अवरीवः=आवृत किया था, कुह=कहां, कस्य=किसकी, शर्मन्=सुरक्षा में, अम्भः=जल, किम्=क्या, प्रश्न वाचक शब्द, आसीत्=था, गहनम्=अपार, गभीरम्=गहरा।

हि० अ०—उस समय न नामरूपादि रहित अवस्था थी, न नामरूपात्मक अवस्था ही थी; [illegible] (कोई) लोक था, न आकाश ही था, जो ऊपर है। कौन आवृत किया था? कहां, किसकी सुरक्षा में? क्या अपार गम्भीर जल था?

*Trans.*—There was neither the non-existent nor was

the existent then; there was neither the region nor the sky that is above. What did cover it? Where, in whose protection? Was there water, unfathomable, deep?

*Notes*—नो—See VI. 54 3 अवरीवः—$\sqrt{vr}$ to cover, inte impf. 3rd. sing; final visarjaniya is originally rhotacized; hence, इति is added after it in the Pada-text. कुह—Formed from किम् with the suffix ह in the locative sense (कु तिहोः—Pāṇ. VII.2.104) शर्मन्—The regular loc. sing form of शर्मन् would be शर्मणि, but in the Vedic language the suffix ङि. is dropped (सुपां सुलुक् —Pāṇ. VII. 1.39)

न। मृत्युः। आसीत्। अमृतम्। न। तर्हि। न। रात्र्याः। अह्नः। आसीत्। प्रऽकेतः॥ आनीत्। अवातम्। स्वधया। तत्। एकम्। तस्मात्। ह। अन्यत्। न। परः। किम्। चन। आस॥२॥

सा० भा०—भगूवतस्य प्रतिसंहारस्य संहर्त्रपेक्षत्वात् स एव संहर्ता मृत्युर्विद्यत इत्यत आह न मृत्युरासीत् इति। ननु यदि न मासीत् तर्हि तदभावकृतम् अमृतम् अमरणं प्राणिनामवस्थानं तदानीमपि स्यात् तत्राह। अमृतं न तर्हि इति। तर्हि तस्मिन् प्रतिहारसमये। अयं भावः। सर्वेषां प्राणिनां परिपक्वं भोगहेतुभूतं सर्वं कर्म यदोपभुक्तमासीत् तदा भोगाभावान्निष्प्रयोजनमिदं जगदिति परमेश्वरस्य मनसि संजिहीर्षा जायते। तदैव स मृत्युः सर्वं जगत् संहरत इति किमनेन मृत्युना संहर्त्रा तदभावकृतं वा कथममरणं स्यादिति। एतदेवाभिप्रेत्य कठैराम्नायते—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः।' (क० उ० २. २५) इति। नन्वेतस्य सर्वस्याधिकरणभूतः कालो विद्यत इत्यत आह न रात्र्या इति। रात्र्याः अह्नः च प्रकेतः प्रज्ञानं न आसीत्। तद्धेतुभूतयोः सूर्याचन्द्रमसोरभावात्। एतेनाहोरात्रनिषेधेन तदात्मको मासर्तुसंवत्सरप्रभृतिकः सर्वः कालः प्रत्याख्यातः। कथं तर्हि नो सदासीत्तदानीमिति कालवाची प्रत्ययः। उपचारादिति ब्रूमः। यथेदानीं तन्निषेधस्य कालोऽवच्छेदकस्तथा मायापि तदवच्छेदहेतुरित्यवच्छेदकत्वसाम्येनाकालेऽपि कालवाची

प्रत्ययः । यद्वादिष्म ब्रह्मणः परमार्थसत्त्वमग्रे वक्ष्यत इति तदिदानीं दर्शयत्या-नीदिति । तत् सकलवेदान्तप्रसिद्धं ब्रह्मतत्त्वम् आनीत् प्राणितवत् । नन्वेवं प्राणनकर्तुर्जीवभावापन्नस्यैव ब्रह्मणः सत्त्वं स्यात् न विवक्षितस्य निरुपाधिकस्य ब्रह्मणः । 'अप्राणो ह्यमनाः शुभ्रः' इति तस्य प्राणसंबन्धाभावात् तत्राह आनीद-वातमिति । अयमाशयः । आनीदित्यत्र धात्वर्थक्रिया तत्कर्ता तस्य च भूतकाल संबन्ध इति त्रयोऽर्थाः प्रतीयन्ते । तत्र समुदायो न विधीयते यथाग्नयोऽष्टाकपाल इति येन ब्रह्मणः सत्त्वं न स्यात् । किं तर्ह्यनेन कर्तृत्वमनूद्य भूतकालसत्तालक्षणो गुणो विधीयते दध्ना जुहोतीति वाक्यान्तरविहिताग्निहोत्रानुवादेन तत्र गुण-विधानम् । तत्राप्यनेन कर्तृत्वविशिष्टस्य न पूर्वकालसत्ता विधीयते तन्निषेधा-नुपपत्तिप्रसङ्गात् अतोऽनेन कर्तृत्वेन इदानींतनेनोपलक्षितं यन्निरुपाधिकं परं ब्रह्म तस्यैव भूतकालसत्ता विधीयत इति न कश्चिद्दोष इति । नन्वीदृशस्य ब्रह्मणो मायया सह संबन्धासंभवात् सांख्याभिमता स्वतन्त्रा सद्रूपा सत्त्वरजस्तमोगुणा-त्मिका मूलप्रकृतिरेवाभिमतेति कथं नो सदिति निषेधः । तत्राह स्वधया इति । स्वस्मिन् धीयते ध्रियत आश्रित्य वर्तत इति स्वधा माया । तया तद्ब्रह्मैकम-विभागापन्नमासीत् । 'सहयुक्तेऽप्रधाने' (पा० सू० २. ३. १९) इति तृतीया सहशब्दयोगाभावेऽपि सहार्थयोगे भवति 'वृद्धो यूना' (पा० सू० १. २. ६५) इति निपातनालिङ्गात् । अत्र प्रकृतिप्रत्ययाभ्यां तस्याः स्वातन्त्र्यं निवार्यते । यद्यपि असङ्गस्य ब्रह्मणस्तया सह संबन्धो न संभवति तथापि तस्मिन्नविद्यया तत्स्वरूपमिव संबन्धोऽध्यस्यते यथा शुक्तिकायां रजतस्य । एतेन सद्रूपत्वमपि तस्याः प्रत्याख्यातम् । ननु यदि माया ब्रह्मणा सहाविभागापन्ना तर्हि तस्या अनिर्वाच्यत्वात् ब्रह्मणोऽपि तत्प्रसङ्ग इति कथं तस्य सत्त्वमुक्तम् आनीदवात-मिति । ब्रह्मणो वा तत्त्वात्तस्या अपि सत्त्वप्रसङ्ग इति कथं नो सदासीदिति सत्त्वप्रतिषेधः । मैवम् अयुक्तिदृष्ट्यैकत्वावभासेऽपि युक्त्या विविच्य मायायास्या-निर्वाच्यत्वं ब्रह्मणः सत्त्वं च प्रतिपादितम् । ननु मृत्युरमृतमिति द्वावेव पदार्थौ आनीदवातं स्वधयेति तौ चेदङ्गीक्रियेते तत्किमपरमवशिष्यते यत् नासीद्रजः इत्यादिना प्रतिषिध्येत तत्राह तस्मादिति । तस्माद्ध तस्मात् खलु पूर्वोक्ता-न्मायासहितात् ब्रह्मणः अन्यत् किं चन किमपि वस्तु भूतभौतिकात्मकं जगत् न आस न बभूव । 'छन्दस्युभयथा' इति लिटः सार्वधातुकत्वादस्तेर्भूभावाभावः । ननु तदानीमन्यस्य सत्त्वनिषेधो नाशङ्क्यः । असत्त्वे चाप्रसक्तत्वान्न निषेधोपयोग इत्यत आह परः इति । परः परस्तात् सृष्टेरूर्ध्वं वर्तमानमिदं जगत् तदानीं न बभूवेत्यर्थः । अन्यथा उक्तरीत्या क्वचिदपि निषेधो न स्यादिति भावः ॥

शब्दा०—न=नहीं, मृत्युः=मृत्यु, आसीत्=थी, अमृतम्=अमृतत्व, न=नहीं, तर्हि=तब, रात्र्याः=रात्री का, अह्नः=दिन का, आसीत्=था, प्रकेतः=चिह्न या भेदात्मक ज्ञान, आनीत्=सांस ले रहा था, अवातम्=बिना वायु का, स्वधया=इच्छा शक्ति से, तत्=वह, एकम्=एक, तस्मात्=उससे, अन्यत्=अलग, न=नहीं, परः=पहिले, किम्=कुछ, चन=भी, आस=था।

हि० अ० - तब मृत्यु नहीं थी, अमृतत्व भी नहीं था। रात्री तथा दिन का भेदात्मक ज्ञान भी नहीं था। एक वायु के बिना (भी) अपनी इच्छा शक्ति से श्वास ले रहा था। उसको छोड़कर अलग पहले कुछ भी नहीं था।

*Trans*—There was neither death, nor immortality There was not the distinct knowledge of night and day That one breathed without wind by its will power Other than that there was nothing beyond

*Notes*—आनीत्—√*an* to breathe, impf 3rd sing स्वधया—By will power, Sāyana takes it to mean 'illusion' (māyā) आस—√*as* to be, perf 3rd sing

तमः। आसीत्। तमसा। गूळ्हम्। अग्रे। अप्रऽकेतम्। सलिलम्। सर्वम्। आः। इदम्॥ तुच्छ्येन। आभु। अपिऽहितम्। यत्। आसीत्। तपसः। तत्। महिना। अजायत। एकम्॥३॥

सा० भा०—ननूक्तप्रकारेण यदि पूर्वमिदं जगन्नासीत् कथं तर्हि तस्य जन्म। जायमानस्य जनिक्रियायां कर्तृत्वेन कारकत्वात् कारकं च कारणावान्तरविशेष इति कारकस्य सतो नियतपूर्वक्षणवर्तित्वस्य अवश्यभावात्। अर्थतद्दोषपरिजिहीर्षया जनिक्रियायाः प्रागपि तद्विद्यत इत्युच्यते। कथं तस्य जन्म। अत आह तमसा गूळ्हमग्रे इति। अग्रे सृष्टेः प्राक् प्रलयदशायां भूतभौतिकं सर्वं जगत् तमसा गूळ्हम्। यथा नैशं तमः सर्वपदार्थजातमावृणोति तद्वत्। आत्मतत्त्वस्यावरकत्वान्मायापरसंज्ञं भावरूपाज्ञानमत्र तम इत्युच्यते। तेन तमसा निगूढं संवृतं कारणभूतेन तेनाच्छादितं भवति। आच्छादकात् तस्मात्तमसो नामरूपाभ्यां यदाविर्भवनं तदेव तस्य जन्मेत्युच्यते। एतेन कारणावस्थायामसदेव कार्यमुत्पद्यते इत्यसद्वादिनोऽसत्कार्यवादिनो ये मन्यन्ते ते प्रत्याख्याता।

ननु कारणे तमसि तज्जगदात्मकं कार्यं विद्यते चेत् कथं 'नासीद्रज इत्यादि-निषेधः । तत्राह तम आसीत् इति । तमो भावरूपमज्ञानं मूलकारणम् । तद्रूपता तदात्मनाम् । यतः सर्वं जगत् प्राक् तम आसीदतो निषिध्यत इत्यर्थः । नन्वाधर-कत्वादावरकं तमः कर्तृ आवार्यत्वाज्जगत्कर्म । कथं तयोः कर्मकर्त्रोस्तादात्म्यम् । तत्राह अप्रकेतमिति । अप्रकेतम् अप्रज्ञायमानम् । अयमर्थः । यद्यपि जगतस्त-मसश्च कर्मकर्तृभावो यौक्तिको विद्यते तथापि व्यवहारदशायामिव तस्यां दशायां नामरूपाभ्यां विस्पष्टं न ज्ञायत इति तादात्म्यवर्णनम् । अतएव मनुना स्मर्यते 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः' (मनु० १. ५) इति । कुतो वा न प्रज्ञायते तत्राह । सलिलम् । 'षल गतौ' । औणादिक इलच् । इदं दृश्यमानं सर्वं जगत् सलिलं कारणेन संगत-मविभागापन्नम् आः आसीत् । अस्तेर्लङि सिपि 'बहुलं छन्दसि' इतीडभावे 'हल्ङ्याब्भ्यः' इति सिलोपे 'तिप्यनस्तेः' (पा० सू० ८ २. ७३) इति पर्युदासा-द्दकाराभावः । यद्वा सलिलमिति लुप्तोपमम् । सलिलमिव । यथा क्षीरेणावि-भागापन्नं नीरं दुर्विज्ञानं तथा तमसाविभागापन्नं जगन्न ज्ञवर्यविज्ञानमित्यर्थः । ननु विविधविचित्ररूपभूयसः प्रपञ्चस्य कथमतितुच्छेन तमसा क्षीरेण नीरस्येवा-भिभवः । तथा तमोऽपि क्षीरवद्‌बलवदित्येवोच्यते । तर्हि दुर्बलस्य जगतः सर्ग-समयेऽपि नोद्भवसंभव इत्यत आह तुच्छ्येन इति । आ समन्ताद्भवतीति आभु तुच्छ्येन । छान्दसो यकारोपजनः । तुच्छेन तुच्छकल्पनेन सदसद्विलक्षणेन भावरूपाज्ञानेन अपिहितं छादितम् आसीत् । दधातेः कर्मणि निष्ठा । दधातेर्हि । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । एकम् एकीभूतं कारणेन तमसाविभा-गतां प्राप्तमपि तत्कार्यजातं तपसः स्रष्टव्यपर्यालोचनरूपस्य महिना माहात्म्येन अजायत उत्पन्नम् । तपसः स्रष्टव्यपर्यालोचनरूपत्वं चान्यत्राम्नायते 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः (मु० उ० १. १. ९) इति ॥३॥

शब्दा०—तमः=अन्धकार, आसीत्=था, तमसा=अन्धकार से, गूढ-हम्=ढका हुआ, अग्रे=सृष्टि के पहिले, अप्रकेतम्=चिन्ह रहित या भेदात्मक ज्ञान रहित, सलिलम्=जल, सर्वम्=सम्पूर्ण, आः=था; इदम्=यह जगत्, तुच्छ्येन=भाव रूप अज्ञान से, आभु=सर्वव्यापी, अपिहितम्=आवृत, यत्=जो, आसीत्=स्थित था, तपसः=तपस्या को, तत्=वह, महिना=महिमा से, अजायत=उत्पन्न हुआ, एकम्=एक ।

हि० अ० महान् अन्धकार से ढका हुआ सर्वप्रथम अन्धकार था । इस सम्पूर्ण (विश्व का कारणभूत) जल से भिन्न कोई चिन्ह नहीं था । (यह) जो

[illegible]

स्थित था, सर्वव्यापी मायरूप अज्ञान से आवृत था। अपनी तपस्या की महिमा से वह एक उत्पन्न हुआ।

*Trans* —The darkness was concealed with darkness in the beginning All this (world) was indistinguishable water That which existed, was covered with all pervading void, through the power of austerity that one was born

*Notes*– गूळ्हम् – √*guh* to conceal, past part : (see अपगूळ्हम् I 116 11) आः—√*as* to be, impf 3rd sing तुच्छ्येन —Insertion of य is an instance of varnopajana आभु —'Pervading' (Sāyana) 'existed' (Griffith) 'coming into being' (Macdnonell) 'empty' 'void' (MWD) अपिहितम् —See I 32 11 तपस —Austerity i e contemplation of things that were to be created (Sāyana) 'warmth (Griffith), 'heat' (Macdonell) अजायत—See X 90 5

कामः । तत् । अग्रे । सम् । अवर्तत । अधि । मनसः । रेतः ।
प्रथमम् । यत् । आसीत् ॥ सतः । बन्धुम् । असति । निः ।
अविन्दन् । हृदि । प्रतिऽइष्य । कवयः । मनीषा ॥४॥

सा० भा०—ननूक्तरीत्या यदीश्वरस्य पर्यालोचनं जगत पुनरुत्पत्तौ कारण तदेव किंनिबन्धनमित्यत आह कामस्तदग्र इति । अग्रे अस्य विकारजातस्य सृष्टे प्रागवस्थाया परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत । सिसृक्षा जातेत्यर्थ । ईश्वरस्य सिसृक्षा वा कि हेतु केत्यत आह मनस इति । मनसः अन्त करणस्य संबन्धि वासनाशेषेण मायाया विलीनेऽन्त करणे समवेतम् । सामान्यापेक्षमेकवचनम् । सर्वप्राण्यन्त करणेषु समवेतमित्यर्थ । एतेनात्मनो गुणाधारत्व प्रत्याख्यातम् । तादृश रेतः भाविन प्रपञ्चस्य बीजभूत प्रथमम् अतीते कल्पे प्राणिभि कृत पुण्यात्मक कर्म यत् यत कारणात् सृष्टिसमये आसीत् अभवत् । भूण्णु बधिरवनायत परिपक्व सत् फलोन्मुखमासीदित्यर्थ । ततो हेतो फलप्रदस्य सर्वसाक्षिण कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षा अजायतेत्यर्थ । तस्या च जाताया स्रष्टव्यं पर्यालोच्य तत सर्वं जगत् सृजति ।

तथा चाम्नायते 'सोऽकामयत बहुः स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वेदं सर्वमसृजत यदिदं किंच' (तै० आ० ८.६) इति श्रुतिः । आत्मनेत्यमवगमितेऽर्थे विद्वदनुभवमप्यनुग्राहकत्वेन प्रमाणयति सत इति । सतः सत्त्वेन इदानीमनुभूयमानस्य सर्वस्य जगतः बन्धुं बन्धकं हेतुभूतं कल्पान्तरे प्राण्यनुष्ठितं कर्मसमूहं कवयः क्रान्तदर्शना अतीतानागतवर्तमानाभिज्ञा योगिनः हृदि हृदये निरुद्धया मनीषा मनीषया बुद्ध्या । 'सुपां सुलुक्' इति तृतीयाया लुक् । प्रतीष्य विचार्य । 'अन्येषामपि' इति साहितिको दीर्घः । असति सद्विलक्षणेऽव्याकृते कारणे निरविन्दन् निष्कृष्यालभन्त । विविच्याजानन्नित्यर्थः ॥

शब्दा०—कामः=इच्छा, तत्=उसमें, अग्रे=सर्वप्रथम, समवर्तत=उत्पन्न हुआ, अधिमनसः=मन का, रेतः=विकार, प्रथमम्=प्रथम, यत्=जो, आसीत्=था, सतः=नामरूपात्मक जगत् का, बन्धुम्=बन्धन, सम्बन्ध, असति=नाम रूप रहित तत्व में, निरविन्दन्=पाया, हृदि=अन्तःकरण में, प्रतीष्य=विचार कर, कवयः=बुद्धिमानों ने, मनीषा=प्रज्ञा से ।

हि० अ०—काम, जो मन का प्रथम विकार था, उसमें सर्वप्रथम उत्पन्न हुआ । बुद्धिमानों ने हृदय में प्रज्ञा से विचार कर नामरूपात्मक जगत् का कारण नाम रूप रहित तत्व में ही पाया ।

*Trans.*—Desire, that was the first seed of the mind came upon that in the beginning. The sages, having searched in their heart with wisdom, found out the bond of existent in the non-existent

*Notes*—समवर्तत—See X. 90.14. आसीत्—√*as* to be impf 3rd. sing., not unaccented because preceded by यत्. असति—Loc. sing. of असत्, नञ् compd. accented on the first member. अविन्दन्—See X.71.3 प्रतीष्या—√*is* with प्रति to search, gerund in य, final syllable is lengthened.

तिरश्चीनः । विऽततः । रश्मिः । एषाम् । अधः । स्वित् । आसी३त् । उपरि । स्वित् । आसी३त् ॥ रेतःऽधाः । आसन् ।

म॒हि॒मानः॑ । आ॒स॒न् । स्व॒धा । अ॒वस्ता॑त् । प्रऽय॑तिः । प॒रस्ता॑त् ॥५॥

सा० भा०—एवमविद्याकामकर्माणि सृष्टेर्हेतुत्वेनोक्तानि । अधुना तेषां स्वकार्यजनने शैघ्र्यं प्रतिपाद्यते । येयं नासदासीदित्यविद्या प्रतिपादिता यश्च कामस्तदग्रे इति कामो मनसो रेतः प्रथमं यदासीदिति यत्कर्म एषाम् अविद्याकामकर्मणां वियदादिभूतजातानि सृजतां रश्मिः रश्मिसदृशो यथा सूर्यरश्मिः उदयानन्तरं निमेषमात्रेण युगपत् सर्वं जगत् व्याप्नोति तथा शीघ्रं सर्वत्र व्याप्नुवन् यः कार्यवर्गः विततः विस्तृतः आसीत् । स्विदासीत् इति वक्ष्यमाणमत्रापि सम्बध्यते । 'विचार्यमाणानाम्' (पा० सू० ८.२.९७) इति प्लुतः । तत्रोदात्त इत्यनुवृत्तेः चोदात्तः स्वित् इति वितर्के । स कार्यवर्गः प्रथमतः किं तिरश्चीनः तिर्यगवस्थितो मध्ये स्थित आसीत् किंवा अधः अधस्तात् आसीत् । आहोस्वित् उपरि उपरिष्टात् किमासीत् । 'उपरि स्विदासीदिति च' (पा० सू० ८.२.१०२) इत्यनुदात्तः प्लुतः । 'आत्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निः' (तै० आ० ८.१) इत्यादिकया पञ्चमीश्रुत्या तत उद्गातारं ततो होतारमितिवत् क्रमप्रतिपत्तौ सत्यामपि विद्युत्प्रकाशवत् सर्वस्य शीघ्रव्यापनेन तस्य क्रमस्य दुर्लक्षणत्वादेतेषु त्रिषु स्थानेषु प्राथम्यं कुत्रेति विचार्यते । एवं नाम शीघ्रं सर्वतो विसृत्वरो निष्पन्न इत्यर्थः । एतदेव विभजते । सृष्टेषु कार्येषु मध्ये केचिद्भावाः रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्तारो भोक्तारश्च जीवाः आसन् अन्ये भावाः महिमानः । स्वार्थिक इमनिच् । महान्तो वियदादयो भोग्याः आसन् । एवं मायासहितः परमेश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानुप्रविश्य भोक्तृभोग्यादिरूपेण विभागं कृतवानित्यर्थः । अयमेवार्थस्तैत्तिरीयके 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै० आ० ८.६) इत्यारभ्य प्रतिपाद्यते । तत्र च भोक्तृभोग्ययोर्मध्ये स्वधा । अन्ननामैतत् । भोग्यप्रपञ्चः अवस्तात् अवरो निकृष्ट आसीत् । प्रयतिः प्रयतिता भोक्ता परस्तात् पर उत्कृष्ट आसीत् । भोग्यप्रपञ्चं भोक्तृप्रपञ्चस्य शेषभूतं कृतवानित्यर्थः । 'विभाषा परावराभ्याम्' (पा० सू० ५.३.२९) इति प्रथमार्थे अस्तातिः । 'अस्ताति च' (पा० सू० ५.३.४०) इत्यवरशब्दस्यावादेशः । अवस्तादिति संहितायाम् ईषाअक्षादित्वात् प्रकृतिभावः ॥

शब्दा०—तिरश्चीनः=तिरछा जानेवाला अर्थात् मध्य में, विततः=फैला हुआ था, रश्मिः=किरणों की तरह, एषाम्=उनका, अधः=नीचे,

स्वित्=शायद, आसीत्=था, उपरि=उपर, स्वित्=शायद, आसीत्=था, रेतोधाः=सृष्टि का बीज धारण करनेवाले, आसन्=थे, महिमान= आकाशादि महाभूत, आसन्=थे, स्वधा=भोग्य पदार्थ, अवस्तात्=नीचे, प्रयति=भोक्ता तत्त्व, परस्तात्=ऊपर।

हि० अ० उनका (कार्य जाल जो) किरणों की तरह शीघ्र फैला हुआ था, क्या वह मध्य में था ? अथवा क्या वह नीचे था ? अथवा क्या वह उपर था ? (सृष्टि का) बीज धारण करनेवाले थे, (आकाशादि) महाभूत थे, नीचे भोग्य था, ऊपर भोक्ता।

*Trans*—Their (web of effects which) was extended like the ray of the sun, was it across ? or was it below ? or was it above ? There were impregnators, there were great forces, food was below, and consumers (were) above

*Notes*—तिरश्चीनः—Derived from तिरस् + √*anc* विततः—√*tan* to stretch, past part रश्मिः—This word has been interpreted variously Sāyana takes it to mean 'ray of the sun metaphorically the five great elements' Macdonell takes it to mean 'cord' with which the sages in thought measured out distance betwen the existent and non existent or between what was above and below According to Griffith, रश्मि is a line drawn by the ancient seers to make a division between the upper world and the lower, and to bring duality out of unity एषाम्—Of the effects (*karya*) of *Avidya* (Sāyana) 'of the seers' (Griffith, Macdonell) स्वित्—A particle expressing doubt आसीश्त्—√*as* to be impf 3rd sing not unaccented because it is the first verb in two antithetical clauses The final syllable of the verbs expressing doubt in for and against is prolated (विचार्यमाणानाम् Pan VIII 2 97) आसीत् in both the sentences अधः स्विदासीश्त and उपरि स्विदासीश्त is prolated and in the latter prolated

syllable is anudātta (उपरि स्विदासीदिति च—Pāṇ. VIII. 2. 102), but in the अधः स्विदासी३त् the prolated syllable is udātta. आसन् —√as to be, impf. 3rd. plu. अवस्तात्— Below ; the word अवर becomes अवः or अवस्तात् if followed by the suffix असि (अस्ताति च—Pāṇ. V. 3.40). प्रयतिः— 'Offering', 'intention, 'will' (MWD.) 'enjoyer (Sāyaṇa) 'energy' (Griffith) 'impulse' (Macdonell). परस्तात्— Above ; grammatical construction is the same as अवस्तात्.

कः । अद्धा । वेद । कः । इह । प्र । वोचत् । कुतः । आऽजाता । कुतः । इयम् । विऽसृष्टिः ॥ अर्वाक् । देवाः । अस्य । विऽसर्जनेन । अथ । कः । वेद । यतः । आऽबभूव ॥६॥

सा० भा०—एवं भोक्तृभोग्यरूपेण सृष्टिः संग्रहेण प्रतिपादिता । 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद' (श० ब्रा० १. ४. २. १३) इतिवत् । अथेदानीं सा सृष्टिर्दुर्विज्ञानेति न विस्तरेणाभिहितेत्याह को अद्धेति । कः पुरुषः अद्धा पारमार्थ्येन वेद जानाति । कः वा इह अस्मिंल्लोके प्र वोचत् प्रब्रूयात् । इयं दृश्यमाना विसृष्टिः विविधा भूतभौतिक भोक्तृभोग्यादिरूपेण बहुप्रकारा सृष्टिः कुतः कस्मादुपादानकारणात् । कुतः कस्माच्च निमित्तकारणात् आजाता समन्ताज्जाता प्रादुर्भूता । एतदुभयं सम्यक् को वेद को वा विस्तरेण वक्तुं शक्नुयादित्यर्थः । ननु देवाः अजानन्तः । सर्वज्ञास्ते ज्ञास्यन्ति वक्तुं च शक्नुवन्तीत्यत आह अर्वागिति । देवाः च अस्य जगतो विसर्जनेन वियदादिभूतोत्पत्त्यनन्तरं विविध भूतभौतिक सर्जनं सृष्टिस्तेन अर्वाक् अर्वाचीनाः कृताः । भूतसृष्टेः पश्चाज्जाता इत्यर्थः । तथाविधास्ते कथं स्वोत्पत्तेः पूर्वकालीनां सृष्टिं जानीयुः । अजानन्तो वा कथं प्रब्रूयुः । उक्तं दुर्विज्ञानत्वं निगमयति । अथ एवं सति देवा अपि न जानन्ति किल । तद्व्यतिरिक्तः कः नाम मनुष्यादिः वेद तज्जगत्कारणं जानाति यतः कारणात् कृत्स्नं जगत् आबभूव अजायत ॥

शब्दा०—कः=कौन, अद्धा=सही रूप में, वेद=जानता है, कः= कौन, इह=यहां, प्र वोचत्=कहेगा, कुतः=कहां से, आजाता=उत्पन्न

हुई है, कुतः=कहाँ से इयम्=यह, विसृष्टिः=विविध प्रकार की सृष्टि, अर्वाक्=अर्वाचीन, देवाः=देवता, अस्य=इस, विसर्जनेन=विविधरूपा सृष्टि से, अथ=तब, कः=कौन, वेद=जानता है, यतः=जहाँ से, आबभूव =उत्पन्न हुई है।

हि० अ०—कौन सही रूप में जानता है? कौन यहाँ कहेगा कि यह कहाँ से उत्पन्न हुई है? यह विविध प्रकार की सृष्टि कहाँ से? देवता इस सृष्टि की अपेक्षा अर्वाचीन हैं। तब यह कौन जानता है जहाँ से यह (सृष्टि) उत्पन्न हुई है?

*Trans.*—Who knows truly? Who shall here proclaim whence it is born? Whence it's vivid creation? Gods are later by the creation of this universe Then who knows whence it has come in to being?

*Notes*—वेद—√*vid* to know, perf. 3rd. sing. वोचत्—√*vac* to speak, red.-aorist, injun. 3rd. sing. आबभूव—√*bhū* to be, perf. 3rd. sing.; not unaccented because preceded by यतः

इयम्। विऽसृष्टिः। यतः। आऽबभूव। यदि। वा। दधे। यदि। वा। न॥ यः। अस्य। अधिऽअक्षः। परमे। विऽओमन्। सः। अङ्ग। वेद। यदि। वा। न। वेद॥७॥

सा० भा०—उक्तप्रकारेण यथेदं जगत्सर्जनं दुर्विज्ञानं एवं सृष्टं तज्जगत् दुर्धरमपीत्याह इयमिति। यतः उपादानभूतात् परमात्मनः इयं विसृष्टिः विविधा गिरिनदीसमुद्रादिरूपेण विचित्रा सृष्टिः आबभूव आजाता सोऽपि किल यदि वा दधे धारयति यदि वा न धारयति। एवं च को नाम अन्यो धर्तुं शक्नुयात्। यदि धारयेदीश्वर एव धारयेन्नान्य इत्यर्थः। एतेन कार्यस्य धारयितृत्वप्रतिपादनेन ब्रह्मण उपादानकारणत्वमुक्तंभवति। तथा च पारमर्षं सूत्र—'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (वे० सू० १.४.२३) इति। यद्वा। अनेनार्धर्चेन पूर्वोक्तं सृष्टेर्दुर्ज्ञानत्वमेव द्रढयति। को वेदेत्यनुवर्तते। इयं विविधा सृष्टिः यत आबभूव आसमन्तादजायेति को वेद। न

कोऽपि। नास्त्येव जगतो जन्म न कदाचिदनीदृशं जगदिति बहवो भ्रान्ता भवन्त्यपि। यतः। 'जनिकर्तुः प्रकृतिः' (पा० सू० १. ४. ३०) इत्यपादानसंज्ञायां पञ्चम्यास्तसिल्। यस्मात् परमात्मन उपादानभूतादाबभूव तं परमात्मानं को वेद। न कोऽपि। प्रकृतितः परमाणुभ्यो वा जगज्जन्मेति हि बहवो भ्रान्ताः। तथा स एवोपादानभूतः परमात्मा स्वयमेव निमित्त भूतोऽपि सन् यदि वा दधे विदधे इदं जगत् ससर्ज यदि वा न ससर्ज। असंदिग्धे संदिग्धवचनमेतच्छास्त्राणि चेत्प्रमाणं स्युरिति यथा। स एव विदधे। तं को वेद। अजानन्तोऽपि बहवो जडात् प्रधानादकर्तृकमेवेदं जगत् स्वयमजायतेति विपरीतं प्रतिपन्ना विदधतो विधानमजानन्तोऽपि। स एव उपादानभूत इत्यपि को वेद। कोऽपि। उपादानादन्यः तटस्थ एवेश्वरो विदधे इति हि बहवः प्रतिपन्नाः। देवा अपि यत्र जानन्ति तदर्वाचीनानामेषां तत्परिज्ञाने कैव कथेत्यर्थः। यद्येवं जगत्सृष्टिरत्यन्तदुरवबोधा न तर्हि सा प्रमाणपद्धतिमध्यास्त इत्याशङ्क्य तत्सद्भाव ईश्वरमेव प्रमाणयति यो अस्येति। अस्य भूत भौतिकात्मकस्य जगतः यः अध्यक्षः ईश्वरः परमे उत्कृष्टे सत्यभूते व्योमन् व्योमन्याकाशवदाकाशवन्निर्मले स्वप्रकाशे। यद्वा। अवतेस्तर्पणार्थात् 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। 'नेड्वशि कृति' इतीट्प्रतिषेधः। 'ज्वरत्वर' इत्यादिना वकारोपधयोः ऊठ्। सप्तम्या लुक्। 'न ङिसंबुद्ध्योः' इति नलोपप्रतिषेधः। व्योमनि विशेषेण तृप्ते। निरतिशयानन्दस्वरूपे इत्यर्थः। अवतिर्गत्यर्थः। व्योमनि विशेषेण गते व्याप्ते। देशकालवस्तुभिरपरिच्छिन्न इत्यर्थः। अथवा। अवतिर्ज्ञानार्थः। व्योमनि विशेषेण ज्ञातरि विशिष्टज्ञानात्मनि। ईदृशे स्वात्मनि प्रतिष्ठितः। श्रूयते हि सनत्कुमारनारदयोः संवादे—'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा० उ० ७. २४. १) इति। ईदृशो यः परमेश्वरः सो अङ्ग। अङ्गेति प्रसिद्धौ। सोऽपि नाम वेद जानाति। यदि वा न वेद न जानाति। को नाम अन्यो जानीयात्। सर्वज्ञ ईश्वर एव तां सृष्टिं जानीयात् नान्य इत्यर्थः ॥७॥

शब्दा०—इयम्=यह, विसृष्टिः=विविधरूपा सृष्टि, यतः=जहां से, आबभूव=उत्पन्न हुई है, यदि=अगर, वा=अथवा, दधे=धारण किया था, यदि=अगर, वा=अथवा, न=नहीं, यः=जो, अस्य=इसका, अध्यक्षः=नियामक, परमे=ऊंचे, व्योमन्=आकाश में, सः=वह, अङ्ग=निश्चित अर्थ का वाचक निपात, वेद=जानता है, यदि=अगर, वा=अथवा न=नहीं, वेद=जानता है।

हि० अ० –यह विविध रूपों वाली सृष्टि जहां से आई है (इसको वह) या तो धारण किया था या अगर नहीं (तो कौन धारण किया था ?)। जो इसका ईश्वर है, वह सर्वोच्च स्वर्ग में है, वही निश्चित रूप से इसे जानता है; यदि वह नहीं जानता (तो कौन जानता है ?)

*Trans.*—Whence this vivid creation has come into being; either he held it or if he did not (then who held it ?). He who is the lord of this (creation) is in the highest heaven; certainly he knows it; or if he does not know (then who knows ?).

*Notes*—आबभूव—see X. 129.6. दधे—$\sqrt{}$*dhā* to put perf. mid. 3rd. sing.; not unaccented because it is the first verb of the two antithetical clauses each beginning with यदि वा (निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्—Pan. VIII. 1.30). व्योमन् –Loc. sing. of व्योमन् like शर्मन् (X. 120.1). Sāyaṇa *derives* व्योमन् *from* $\sqrt{}$*av to delight*, with the suffix मनिन्. वेद—$\sqrt{}$*vid* to know, perf. 3rd. sing., first वेद is unaccented, second is not because it is preceded by यदि. The third Pāda is variously interpreted. Sāyaṇa renders it by 'अस्य भूतभौतिकात्मकस्य जगतः यः अध्यक्षः ईश्वरः परमे उत्कृष्टे सत्यभूते व्योमन् व्योमन्यावृते आकाशवन्निर्मले स्वप्रकाशे;' Griffith translates: 'whose eye controls this world in the highest heaven; according to Macdonell, 'he who in the highest heaven is its surveyor'; Arrowsmith following Kaegi renders it: 'who from the highest heaven rules, the all seing lord'.

———

'श्रद्धया' इति पञ्चर्चं त्रयोदिशं सूक्तमानुष्टुभं श्रद्धादेवत्यम्। कामगोत्रजा श्रद्धा नामर्षिका। तथा चानुक्रम्यते—'श्रद्धया श्रद्धा कामायनी श्राद्धमानुष्टुभं तु' इति। लैङ्गिको विनियोग ॥

श्रद्धया। अग्निः। सम्। इध्यते। श्रद्धया। हूयते। हविः॥
श्रद्धाम्। भगस्य। मूर्धनि। वचसा। आ। वेदयामसि ॥१॥

सा० भा०—पुरुषगतोऽभिलाषविशेष श्रद्धा। तया श्रद्धया अग्निः गार्हपत्यादि समिध्यते सन्दीप्यते। यदा हि पुरुषे श्रद्धाग्निगोचर आदरातिशयो जायते तदैव पुरुषोऽग्नीन् प्रज्वालयति नान्यदा। श्रद्धया एव हविः पुरोडाशादिहविश्च हूयते। आहवनीये प्रक्षिप्यते। यद्वा। अस्य सूक्तस्य द्रष्ट्र्या श्रद्धाख्ययाग्नि समिध्यते। श्रद्धाम् उक्तलक्षणाया श्रद्धाया अभिमानिदेवता भगस्य भजनीयस्य धनस्य मूर्धनि प्रधानभूते स्थानेऽवस्थिता वचसा वचनेन स्तोत्रेण आ वेदयामसि अभित प्रख्यापयाम। इदन्तो मसि ॥

शब्दा०—श्रद्धया=श्रद्धा से, अग्नि=अग्नि, समिध्यते=प्रज्वलित किया जाता है, श्रद्धया=श्रद्धा से, हूयते=प्रदान किया जाता है हविः=हवन का पदार्थ, श्रद्धाम्=श्रद्धा को, भगस्य=भाग्य को, मूर्धनि=शिर पर अर्थात् प्रधान, वचसा=स्तुति से, आ वेदयामसि=हम प्रार्थना करते हैं।

हि० अ०—श्रद्धा से अग्नि प्रज्वलित किया जाता है, श्रद्धा से हवि प्रदान किया जाता है, श्रद्धा (जो) भाग्य की प्रधान है, उसकी हम स्तुति द्वारा प्रार्थना करते हैं।

*Trans* —By faith fire is kindled, through faith oblation is offered, we celebrate with praise faith upon the head of happiness

*Notes* समिध्यते —√*idh* to kindle pres pass 3rd sing हूयते—√*hu* to sacrifice, pres pass 3rd sing आ वेदयामसि — √*vid* with आ to celebrate, pres 1st plu

प्रियम् । श्रद्धे । ददतः । प्रियम् । श्रद्धे । दिदासतः ॥ प्रियम् । भोजेषु । यज्वऽसु । इदम् । मे । उदितम् । कृधि ॥२॥

सा० भा० हे श्रद्धे ददतः चरुपुरोडाशादीनि प्रयच्छतो यजमानस्य प्रियम् अभीष्टफलं कुरु । दिदासतः दातुमिच्छतश्च हे श्रद्धे प्रियं कुरु । मे मम सम्बन्धिषु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु कृतयज्ञेषु जनेषु च इदम् उदितम् उक्तं प्रियं कृधि कुरु ॥

शब्दा० प्रियम्=अभीष्ट, श्रद्धे=ओ श्रद्धा, ददतः=देनेवाला का, प्रियम्=अभीष्ट, श्रद्धे=ओ श्रद्धा, दिदासतः=देने की इच्छा करनेवाले का, प्रियम्=अभीष्ट, भोजेषु=उदार, यज्वसु=यजमानों का, इदम्=इस, मे=मेरे, उदितम्=वचन के अभीष्ट को, कृधि=पूरा करो ।

हि० अ०—ओ श्रद्धा, देनेवाले का अभीष्ट पूरा करो, ओ श्रद्धा, देने की इच्छा करनेवाले का अभीष्ट पूरा करो, उदार यजमानों का अभीष्ट पूरा करो, मेरे उस वचन के अभीष्ट को पूरा करो ।

*Trans* —O faith, (do) good of the offerer, O faith, (do) good of him who desires to give, (do) good of the liberal sacrificers, fulfil my this desire

*Notes*—ददत — $\sqrt{d\bar{a}}$ to give, pres part gen sing of ददत् दिदासत — $\sqrt{d\bar{a}}$ to give, desid pres part gen sing of दिदासत् उदितम् — $\sqrt{i}$ with उत् to speak, to rise, past part कृधि — $\sqrt{kr}$ to make, root aorist, impv 2nd sing

यथा । देवाः । असुरेषु । श्रद्धाम् । उग्रेषु । चक्रिरे ॥ एवम् । भोजेषु । यज्वऽसु । अस्माकम् । उदितम् । कृधि ॥३॥

सा० भा०—देवाः इन्द्रादय असुरेषु उद्गूर्णबलेषु यथा श्रद्धां चक्रिरे अवश्यमिमे हन्तव्या इत्यादरातिशयं कृतवन्तः एवं श्रद्धावत्सु भोजेषु भोक्तृषु भोगार्थिषु यज्वसु यष्टृषु अस्माकम् अस्मत्सम्बन्धिषु तेषु उदितं तैरुक्तं प्रार्थितं फलजातं कृधि कुरु ।

शब्दा०—यथा=जिस प्रकार, देवाः=देवता, असुरेषु=असुरों में, श्रद्धाम्=श्रद्धा को, उग्रेषु=प्रचण्ड बलवाले, चक्रिरे=किया था, एवम्=उसी प्रकार, भोजेषु=उदार, यज्वसु=यजमानों में, अस्माकम्=हमारे, उदितम्=कथन के अभीष्ट को, कृधि=पूर्ण करो।

हि० अ० – जिस प्रकार देवताओं ने भयानक असुरों में श्रद्धा किया था, उसी प्रकार तुम उदार यजमानों में श्रद्धा करो; हमलोगों के इस कथन के अभीष्ट को पूरा करो।

*Trans.*—As the gods had faith in the terrible demons, so do thou in liberal sacrificers; fulfil our this desire.

*Notes*—असुरेषु—'The ancient Āryan gods, Dyaus, Varuṇa and some others' (Griffith) 'demons' (Sāyana) चक्रिरे—$\sqrt{kr}$ to make, perf. mid. 3rd. plu.; not unaccented because preceded by यथा.

श्रद्धाम् । देवाः । यजमानाः । वायुगोपाः । उप । आसते ॥
श्रद्धाम् । हृदय्यया । आऽकूत्या । श्रद्धया । विन्दते । वसु ॥४॥

सा० भा०—देवा यजमानाः मनुष्याश्च वायुगोपाः वायुर्गोपा रक्षिता येषां ते तादृशाः सन्तः श्रद्धां देवीम् उपासते प्रार्थयन्ते। हृदय्यया। हृदये भवा हृदय्या। तथाविधया आकूत्या संकल्परूपया क्रियया श्रद्धाम् एव परिचरन्ति सर्वे जनाः। कुत इत्यत आह। यतः कारणात् श्रद्धया हेतुभूतया वसु धनं विन्दते लभते श्रद्धावाञ्जनः। तत इत्यर्थः॥

शब्दा०—श्रद्धाम्=श्रद्धा को, देवाः=देवता, यजमानाः=यजमान, वायुगोपाः=वायु से रक्षित, उपासते=उपासना करते हैं, श्रद्धाम्=श्रद्धा को, हृदय्यया=हार्दिक, आकूत्या=संकल्प से, श्रद्धया=श्रद्धा से, विन्दते=प्राप्त करता है, वसु=सम्पत्ति।

हि० अ०—वायु से रक्षित सभी देवता तथा यजमान अपने हार्दिक संकल्प से केवल श्रद्धा की ही उपासना करते हैं। श्रद्धा से ही मनुष्य सम्पत्ति प्राप्त करता है।

*Trans*—Gods, sacrificers, all protected by Vāyu worship faith and the faith only by their heart felt intention By faith (one) obtains wealth

*Notes*—वायुगोपाः—Whose protector is Vāyu, Bahuvrihi compd accented on the first member उपासते—√*ās* with उप to worship (Sāyana), to draw near (Griffith), pres 3rd plu आकूत्या—Instr sing of आकूति (from √*kū* to make sound), intention, will विन्दते—√*vid* to find, mid 3rd sing Griffith supplies विन्दते also to the third Pāda and renders as 'man winneth faith by yearnings of the heart Sāyana renders first, second and third Pāda together and according to him, the repetition of श्रद्धा in the 3rd Pāda is to lay emphasis

श्रद्धाम् । प्रातः । हवामहे । श्रद्धाम् । मध्यंदिनम् । परि ॥ श्रद्धाम् ।
सूर्यस्य । निऽम्रुचि । श्रद्धे । श्रत् । धापय । इह । नः ॥४॥

सा० भा०—श्रद्धा देवीं प्रातः पूर्वाह्णे हवामहे । तथा मध्यंदिनं परि । लक्षणे परे कर्मप्रवचनीयत्वम् । मध्यंदिन परिलक्ष्य । मध्यंदिन इत्यर्थं । मध्याह्नेऽपि ता श्रद्धाम् आह्वयामहे । सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य निम्रुचि अस्तमयवेलाया सायसमयेऽपि तामेव श्रद्धाम् आह्वयामहे । ईदृग्रूपे हे श्रद्धे न अस्मान् इह लोके कर्मणि वा श्रद्धापय श्रद्धावत कुरु ॥

शब्दा०—श्रद्धाम्=श्रद्धा को, प्रातः=प्रात काल, हवामहे=पुकारते है, श्रद्धाम्=श्रद्धा को, मध्यंदिनम्=दोपहर को, परि=यह कर्मप्रवचनीय है, श्रद्धाम्=श्रद्धा को, सूर्यस्य=सूर्य के, निम्रुचि=अस्त होने पर, श्रद्धे=ओ श्रद्धा, श्रत्=श्रद्धा से, धापय=युक्त करो, इह=यहाँ, न =हमलोगो को ।

हि० अ०—हम लोग प्रात काल श्रद्धा को पुकारते है, दोपहर में श्रद्धा को (पुकारते है), सूर्यास्त होने पर श्रद्धा को (पुकारते है) । ओ श्रद्धा, यहां पर हमलोगों को श्रद्धावान् बनावो ।

*Trans.*—We invoke faith in the morning, faith in the midday, faith at the setting of the sun. O faith, endow us with faith here.

*Notes*—ह्वामहे— √*hū* to call, pres. mid. 1st. plu. निम्रुचि—At the setting; loc. sing. of निम्रुच्. धापय— √*dhā* to suck, caus impv. 2nd. sing.

---

'संसम्' इति चतुर्ऋचं चत्वारिंशं सूक्तं संवननस्यार्षम्। 'समानो मन्त्रः' इति तृतीया त्रिष्टुप् शिष्टास्तिस्रोऽनुष्टुभः। प्रथमाया अग्निर्देवता। शिष्टानां संज्ञानम्। अनुक्रम्यते च—'संसं चतुष्कं संवननः संज्ञानमाद्याग्नेयी तृतीया त्रिष्टुप्' इति। 'आनुष्टुभं तु' इति पूर्वमुक्तत्वादवशिष्टानामनुष्टुप्त्वम्। सूक्तविनियोगो लैङ्गिकः॥

सम्ऽसंम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ॥
इळः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥१॥

सा० भा० –हे वृषन् कामानां वर्षितः अग्ने अर्यः ईश्वरस्त्वम् 'अर्यः स्वामिवैश्ययोः' (पा० सू० ३. १ १०३) इति यत्प्रत्ययान्तो निपातितः। 'अर्यः स्वाम्याख्यायाम्' (फि० सू० १. १८) इत्यन्तोदात्तत्वम्। ■ त्वं विश्वानि सर्वाणि भूतजातानि संसम्। 'प्रसमुपोदः पादपूरणे' (पा० सू० ८. १. ६) इति समो द्विर्वचनम्। इच्छब्दोऽवधारणे। आ समन्तात् सं युवसे मिश्रयसि। देवेषु मध्ये त्वमेव सर्वाणि भूतजातानि वैश्वानरात्मना व्याप्नोषि। नान्य इत्यर्थः। किंच इळः इडायाः पृथिव्याः पदे स्थाने उत्तरवेदिलक्षणे। 'एतद्वा इळायास्पदं यदुत्तरवेदीनाभिः' (ऐ० ब्रा० १ २८) इति ब्राह्मणम्। तत्र त्वं समिध्यसे ऋत्विग्भिः संदीप्यसे। सः तादृशस्त्वं नः अस्माकं वसूनि धनानि आ भर आहर ॥

शब्दा० संसम्=सम् उपसर्ग की आवृत्ति की गई है, इत्=एक निपात, संयुवसे=मिलाते हो, वृषन्=श्री इच्छाओं को पूरा करनेवाले, अग्ने=श्री अग्नि, विश्वानि=सबको, अर्यः=स्वामी, आ=पदपूरण के लिये प्रयुक्त निपात, इळस्पदे=वेदि पर, समिध्यसे=प्रज्वलित किये जाते हो, सः=वह (तुम) नः=हमलोगों के लिये, वसूनि=सम्पत्ति, आभर=लावो।

हि० अ०—श्री इच्छाओं को पूरा करनेवाले अग्नि, स्वामी (के रूप में तुम) सबको चारों तरफ से मिलाते हो। तुम वेदि पर प्रज्वलित किये जाते हो; ऐसे तुम हमलोगों के लिये सम्पत्ति लावो।

*Trans.*—O Agni, the fulfiller of desires, as a lord (thou) unitest all on all sides. Thou art kindled at

the alter of earth. Thou as such bring opulence on all sides.

*Notes*—संसम्—Iterative compd.; Sāyaṇa takes it as an expletive particle. युवसे—√*yu* to unite, pres. mid. 2nd. sing. अर्यः—Lord (Sāyaṇa), friends (Griffith). इळस्पदे—'At the place of earth' (Sāyaṇa), 'in libations' place' (Griffith). समिध्यसे—√*idh* to kindle, pres. pass. 2nd. sing. आ भर—√*bhṛ* with आ to bring, pres. impv. 2nd. sing.

सम्। गच्छध्वम्। सम्। वदध्वम्। सम्। वः। मनांसि। जानताम्॥ देवाः। भागम्। यथा। पूर्वे। सम्ऽजानानाः। उपऽआसते॥२॥

सा० भा०—हे स्तोतारः यूयं सं गच्छध्वम्। संगताः संभूता भवत। 'समो गम्यृच्छि' इत्यादिना गमेरात्मनेपदम्। तथा सं वदध्वं सह वदत। परस्परं विरोधं परित्यज्यैकविधमेव वाक्यं ब्रूतेति भावत्। 'व्यक्तवाचां समुच्चारणे' (पा० सू० १. ३. ४८) इति वदेरात्मनेपदम्। वः युष्माकं मनांसि सं जानताम्। समानमेकरूपमेवार्थमवगच्छन्तु। 'संप्रतिभ्यामनाध्याने' (पा० सू० १. ३. ४६) इति जानातेरात्मनेपदम्। यथा पूर्वे पुरातनाः देवाः संजानानाः ऐकमत्यं प्राप्ताः हविर्भागम् उपासते यथास्वं स्वीकुर्वन्ति तथा यूयमपि वैमत्यं परित्यज्य धनं स्वीकुरुतेति शेषः।

शब्दा०—संगच्छध्वम्=एक साथ जावो, संवदध्वम्=एक साथ बोलो, वः=तुमलोगों का, मनांसि=मन, संजानताम्=एक मतवाला हो, देवाः=देवता, भागम्=हिस्सा, यथा=जिस प्रकार, पूर्वे=पुराने, संजानानाः=एकमत होकर, उपासते=स्वीकार करते हैं।

हि० अ०—एक साथ जावो, एक साथ बोलो, तुम्हारा मन एक मत होवे; जिस प्रकार पुराने देवता एक मत होकर यज्ञ भाग स्वीकार करते हैं।

*Trans.*—Go together, speak together, let your minds be of one accord; as the ancient gods with one accord accept their sacrificial share.

*Notes*—संगच्छध्वम् —√*gam* with सम् to go together, pres mid impv 2nd plu संवदध्वम् —√*vad* with सम् to speak together, pres mid impv 2nd plu सं जानताम्—√*jñā* with सम् to be of one accord, pres mid impv 3rd plu संजानानाः—√*jñā* with सम् to be of one accord, pres part nom plu उपासते—√*as* with उप to accept, pres mid 3rd plu , not unaccented because preceded by यथा

समानः । मन्त्रः । सम्ऽइतिः । समानी । समानम् । मनः ।
सह । चित्तम् । एषाम् ॥ समानम् । मन्त्रम् । अभि । मन्त्रये ।
वः । समानेन । वः । हविषा । जुहोमि ॥३॥

सा० भा० पूर्वोऽर्धर्चः परोक्षकृत उत्तर प्रत्यक्षकृत । एषाम् एकस्मिन् कर्मणि सह प्रवृत्तानामृत्विजां स्तोतॄणां वा मन्त्र स्तुति शस्त्राद्यात्मका गुप्त-भाषण वा समानः एकविधोऽस्तु । तथा समितिः प्राप्तिरपि समानी एक-रूपास्तु । 'कवलमामक' इत्यादिना समानशब्दात् ङीप् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । तथा मनः मननसाधनमन्त करण चैषां समानम् एकविध-मप्यस्तु । चित्तं विचारण ज्ञान तथा सह सहित परस्परस्यैकार्थमेकीभूतमस्तु । अह च वः युष्माक समानम् एकविध मन्त्रम् अभि मन्त्रये । ऐकविध्याय संस्करोमि । तथा व युष्माक स्वभूतेन समानेन साधारणेन हविषा चरु-पुरोडाशादिना अह जुहोमि । 'तृतीया च होश्छन्दसि' (पा० सू० २ ३ ३) इति कर्मणि कारके तृतीया । वषट्कारेण हवि प्रक्षेप्स्यामीत्यर्थ ॥

शब्दा० समानः=समान, मन्त्रः=स्तुति, समिति=प्राप्ति, समानी =समान, समानम्=समान, मन =मन, सह=सयुक्त, चित्तम्=अन्त करण एषाम्=इनका, समानम्=समान, मन्त्रम्=स्तुति को, अभि मन्त्रये= सबोधित करता हूँ, वः=तुम लोगो के, समानेन=समान, वः=तुम लोगों के, हविषा=हवि से, जुहोमि=हवन करता हूँ।

हि० अ०—इनकी स्तुति समान हो, प्राप्ति भी समान हो, मन समान हो, चित्त सयुक्त हो। तुम लोगो को समान स्तुति को मैं सबोधित करता हूँ, तुम लोगो के समान हवि से मैं हवन करता हूँ।

*Trans* —Let their hymn be the same, their gain be the same, their mind be the same, their heart be united I address your same hymn, I offer with your same oblation

*Notes*—मन्त्रः—'Hymn' (Sāyana), 'place' (Griffith) समिति—(√इ with सम् to go together) Sāyana takes it to mean 'gain' and Griffith as 'assembly' अभिमन्त्रये—√*mantra* with अभि to consecrete, to address, pres mid 1rst, sing जुहोमि—√*hu* to sacrifice, pres 1rst sing

स॒मा॒नी । व॒: । आऽकू॑तिः । स॒मा॒ना । हृद॑यानि । व॒: ॥ स॒मा॒नम् ।
अ॒स्तु॒ । व॒: । मन॑: । यथा॑ । व॒: । सुऽस॑ह । अस॑ति ॥४॥

सा० भा०—हे ऋत्विग्यजमाना वः युष्माकम् आकूतिः सकल्पोऽध्यवसाय समानी एकविधोऽस्तु । तथा वः युष्माक हृदयानि समाना समानान्येकविधानि सन्तु । तथा वः युष्माक मनः अन्त करणम् । अत्रैकत्वापेक्षयैकवचनम् । तदपि समानमस्तु । यथा वः युष्माकम् सुसह शोभन साहित्यम् असति भवति [तथा समानमस्त्वित्यन्वय । अस्तेलटि 'बहुल छन्दसि' इति शपो लुगभाव ॥

शब्दा०—समानी=समान, व॰=तुम लोगो का आकूतिः=सकल्प, समाना=समान, हृदयानि=अन्त करण वः=तुम लोगो का, समानम्=समान, अस्तु=हो, व॰=तुम लोगों का, मनः=मन, यथा=जिस प्रकार, व =तुम लोगों का सुसह=सुन्दर साथ, असति=हो।

हि० अ०—तुम्हारा सकल्प समान हो, तुम्हारा अन्त करण समान हो, तुम्हारा मन समान हो, जिससे तुम्हारा सुन्दर साथ हो सके।

*Trans* —Be your intention the same, your hearts the same your mind the same, that it may be a good company for you

*Notes* आकूति—See note X 151 4 असति—√*as* to be, pres subju 3rd sing

'कृष्णाजिनाद्या समिदाधानात् कृत्वा ब्रह्मन्निति जपत्युत्सर्गकाल एके' (का० २०. ४. ११)। कृष्णाजिनदीक्षात आरभ्योखायां त्रयोदशसमिदाधानान्तं कृत्वाध्वर्युरेव ब्रह्मन्निति जपति उत्सर्गकपक्षिष्ठल इत्युत्सर्गोपस्थानकाले एके आ ब्रह्मन्निति जपमिच्छन्ति। यद्वाश्वस्योत्सर्गकाले विभूर्मात्रेति जपानन्तरमित्यर्थः। लिङ्गोक्तदेवता उत्कृतिः।

आ। ब्रह्मन्। ब्राह्मणः। ब्रह्मवर्चसीतिब्रह्म। वर्चसी। जायताम्। आ। राष्ट्रे। राजन्यः। शूरः। इषव्यः। अतिव्याधीत्यति। व्याधी। महारथइतिमहा। रथः। जायताम्। दोग्ध्री। धेनुः। वोढा। अनड्वान्। आशुः। सप्तिः। पुरन्धिरितिपुरम्। धिः। योषा। जिष्णुः। रथेष्ठाऽइतिरथे। स्थाः। सभेयः। युवा। आ। अस्य। यजमानस्य। वीरः। जायताम्। निकामेनिकामऽइतिनिकामे। निकामे। नः। पर्जन्यः। वर्षतु। फलवत्यऽइतिफल। वत्यः। नः। ओषधयः। पच्यन्ताम्। योगक्षेमइतियोग। क्षेमः। नः। कल्पताम् ॥२२॥

म०भा०—हे ब्रह्मन् राष्ट्रे अस्मद्देशे ब्रह्मवर्चसी वेदाध्ययनशीलो ब्राह्मणः आजायताम् उत्पद्यताम्। राजन्यः क्षत्रियश्चेदृश आजायताम्। कीदृशः। शूरः पराक्रमी। 'शूर विक्रान्तौ' शूरयति शूरः इषव्यः इषुभिर्विध्यतीति इषव्यः। यद्वा इषौ कुशलः इषव्यः। अतिव्याधी अत्यन्तं विध्यतीत्यतिव्याधी शत्रुभेदनशीलः। महारथः एकः सहस्रं यजति स महारथः। दोग्ध्री दुग्धपूरयित्री धेनुः आजायताम् राष्ट्रे इति सर्वत्र संबन्धः। अनड्वान् वृषभो वोढा वहनशीलो जायताम्। सप्तिः अश्वः आशुः शीघ्रगामी जायताम्। योषा स्त्री पुरन्धिः पुरं शरीरं सर्वगुणसपन्नं दधाति पुरन्धिः। रथे तिष्ठतीति रथेष्ठाः विवप् सप्तम्या अलुक्। रथे स्थितो युयुत्सुर्नरो जिष्णुः जयनशीलो जायताम्। युवा आ अस्येति पदच्छेदः। अस्य यजमानस्य युवा समर्थः सभेयः सभायां योग्यो

वीरः पुत्रो जायताम् । सभायां साधुः सभेयः 'ढश्छन्दसि' (पा० सू० ४. ४. १०६) इति सभाशब्दात्तत्र साधुरित्यर्थे ढप्रत्ययः । तस्य ण्यादेशः । किंच नो अस्माकं राष्ट्रे पर्जन्यो निकामे निकामे नितरां कामनाया सत्यां वर्षतु । अभ्यासो वीप्सार्थः । नोऽस्माकमोषधयः यवाद्याः फलवत्यः फलयुक्ता पच्यन्तां स्वयमेव पक्वा भवन्तु । नो अस्माकं योगक्षेमः कल्पताम् योगेन युक्तः क्षेमो योगक्षेमः स क्लृप्तो भवतु । अलब्धलाभो योगः लब्धस्य परिपालनं क्षेमः ॥

शब्दा०—ब्रह्मन्=ओ ब्रह्मा, ब्राह्मणः=ब्राह्मण ब्रह्मवर्चसी=पवित्र ज्ञानवाला तेजस्वी, आ जायताम्=उत्पन्न हो, राष्ट्रे=हमारे राष्ट्र में, राजन्य=क्षत्रिय शूरः=पराक्रमी, इषव्यः=बाण चलाने में कुशल, अति-व्याधी=शत्रु का अत्यन्त भेदन करनेवाला, महारथः=महान योद्धा, आ जायताम्=उत्पन्न हो, दोग्ध्री=प्रचुर दूध देनेवाली, धेनुः=गाय, वोढा=भार ढोनेवाला, अनड्वान्=बैल, आशुः=शीघ्रगामी, सप्तिः=अश्व, पुरन्धिः=सर्वगुणसम्पन्न, योषा=स्त्री, जिष्णुः=जीतनेवाला, रथेष्ठाः=रथ में बैठनेवाले, सभेयः=सभा में जाने योग्य, युवा=युवक, अस्य=इस, यजमानस्य=यजमान को, वीरः=बहादुर पुत्र, आ जायताम् =उत्पन्न हो, निकामेनिकामे=इच्छानुकूल, नः=हमारी, पर्जन्यः=मेघ, वर्षतु=बरसे, फलवत्यः=फल से युक्त, नः=हमारे, ओषधयः=पौधे, पच्यन्ताम्=पकें, योगक्षेमः=अप्राप्त वस्तु की प्राप्ति तथा प्राप्त वस्तु की रक्षा, नः=हमारे, कल्पताम्=सम्भव हो ।

हि० अ० – ओ ब्रह्मन्, हमारे राष्ट्र में पवित्र ज्ञानसम्पन्न तेजस्वी ब्राह्मण उत्पन्न हो; पराक्रमी, बाण चलाने में कुशल, शत्रु का अत्यन्त भेदन करने-वाले, महान् योद्धा क्षत्रिय उत्पन्न हो; अधिक दूध देनेवाली गाय, भार ढोने में समर्थ शक्तिशाली बैल, शीघ्रगामी अश्व, सर्वगुणसम्पन्न स्त्री, रथ में बैठनेवाले तथा (शत्रु को) जीतनेवाले (बहादुर उत्पन्न हों); इस यजमान को सभा में जाने योग्य युवक वीर पुत्र उत्पन्न हो; पर्जन्य हमारी इच्छानुकूल वर्षा करे; हमारे पौधे फल से युक्त होकर स्वयं पकें; हमें अप्राप्त वस्तु की प्राप्ति तथा प्राप्त वस्तु की रक्षा सम्भव हो ।

*Trans* —O Brahman, let there be born in our nation the Brahmin, preeminent in sacred knowledge; let there be born kṣatriya, valiant, skilled in archery, exceedingly piercing, great fighter; (let there be born)

the cow, yielding abundant milk, the ox, good at carrying, the horse, swift-going, the woman, endowed with all good qualities, victorious (man) sitting on the chariot, let there be born youthful and heroic sons, fit for attending the assembly, to this sacrficer May Parjanya rain as much as we desire, may our fruit bearing plants ripen, may acquisition and preservation be possible for us

*Notes*—The Adhvaryu priest addresses the Brahman priest that the king may secure the blessings which he hopes by performing the sacrifice Such blessings form the content of Bharatavākyas in the post Vedic dramatic literature ब्रह्मन्—One of the four priests, voc sing, accented though it does not begin the Pada (cf R V X 71 11) ब्रह्मवर्चसी—Preeminent in holiness or sacred knowledge Both Uvata and Mahidhara take it to mean 'the studious and performer of the sacrifice' The author of the Pada text of the Yajurveda adds इति after every compd word and repeates the word after इति and treats the second member as a separate Pada जायताम्—$\sqrt{ja}$ to be born, mid impv 3rd sing अतिव्याधी—One who pierces the foes exceedingly, governing compd निकामेनिकामे—According to our desire, Iterative compd accented on the first member वर्षतु—$\sqrt{vrs}$ to rain, impv 3rd sing पच्यन्ताम् $\sqrt{pac}$ to ripen, mid impv 3rd plu योगक्षेम—Acquisition and preservation, Dvandva compd accented on the final syllable of the second member कल्पताम्—$\sqrt{klp}$ to be adapted, mid impv 3rd sing

पुरुषमन्त्रा उक्ता । अथ सर्वमेधमन्त्रा उच्यन्ते प्रवाप्मच्छेदपस्मात्प्राक् (३३. ५५) । स्वयम्भुब्रह्मदृष्टा आत्मदेवत्या सप्तमेऽहनि आप्तोर्यामसंज्ञिके सर्वहोमे विनियुक्ता 'आप्तोर्याम सप्तममहर्भवति' इत्युपक्रम्य सर्वं जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै' (१३।७।१।९) इति श्रुतेः । द्वे अनुष्टुभौ । विज्ञातात्मा परेणात्मना विशिष्टोऽन्यादिभ्योऽसमोतस्वेनोपास्योऽभिधीयते ।

तत् । एव । अग्निः । तत् । आदित्यः । तत् । वायुः । तत् । ॐऽइत्यूँ । चन्द्रमाः ॥ तत् । एव । शुक्रम् । तत् । ब्रह्म । ताः । आपः । सः । प्रजापतिरितिप्रजा । पतिः ॥१॥

म० भा० – अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तद् एव वायुस्तद् एव चन्द्रमाः तत् तदेव । उ एवार्थे । शुक्रं शुक्लं तत् प्रसिद्धम् । ब्रह्म प्रमीलक्षणं तत् ब्रह्मैव । ताः प्रसिद्धाः आपः जलानि स प्रसिद्ध प्रजापतिरपि तदेव ब्रह्म ॥

शब्दा०—तत्=वह, एव=ही, अग्निः=अग्नि, तत्=वही, आदित्यः=सूर्य, तत्=वही, वायुः=हवा, तत्=वही, उ=निश्चित अर्थ का वाचक, निपात, चन्द्रमाः=चन्द्रमा, तत्=वह, एव=ही, शुक्रम्=तेज, तत्=वही, ब्रह्म=प्रार्थना, ताः=य, आपः=जल, सः=वह, प्रजापतिः=प्रजापति ।

हि० अ०—वही अग्नि है; वही आदित्य है; वही वायु है; वही चन्द्रमा है; वही तेज है; वही प्रार्थना है; वही जल है; वही प्रजापति है ।

*Trans*—That, indeed, is Agni, that, (indeed), is Āditya, that, the wind, that, indeed, the moon That, indeed, is lustre, that the prayer, these waters; he is Prajāpati

*Notes*—तत्—That Supreme self, i e Paramātman उ—It is lengthened and nasalized before इति in the Pada-text like that of the Ṛ V But unlike the latter its lengthened and nasalized form is repeated after इति.

सर्वे । निमेषाऽइतिनि । मेषाः । जज्ञिरे । विद्युतऽइतिवि । द्युतः । पुरुषात् । अधि ॥ न । एनम् । ऊर्ध्वम् । न । तिर्यञ्चम् । न । मध्ये । परि । जग्रभत् ॥२॥

म० भा०—सर्वे निमेषाः त्रुटिकाष्ठाघट्यादयः कालविशेषाः पुरुषात् अधि पुरुषसकाशात् जज्ञिरे । कीदृशात्पुरुषात् । विद्युतः विशेषेण द्योतते विद्युत् तस्मात् । किंच कश्चिदपि एनं पुरुषम् ऊर्ध्वम् उपरिभागे न परिजग्रभत् परिगृह्णाति । एवं तिर्यञ्चं चतुर्दिक्षु न परिजग्रभत् मध्ये मध्यदेशेऽपि न गृह्णाति । न ह्यसौ प्रत्यक्षादीनां विषय इत्यर्थः । स एष 'नेति नेत्यात्माऽगृह्यो न हि गृह्यते' इति श्रुतेः । जग्रभत् । ग्रहेः क्वतरि जुहोत्यादित्वेन रूपम् ॥२॥

शब्दा० - सर्वे=सम्पूर्ण, निमेषाः=समय के परिमाण, जज्ञिरे=उत्पन्न हुये हैं, विद्युतः=प्रकाशमान, पुरुषात्=परमात्मा के, अधि=पास से, न =नहीं एनम्=इसको, ऊर्ध्वम्=ऊपर, तिर्यञ्चम्=तीरछे, न=नहीं, मध्ये =बीच में, परि जग्रभत्=समझ सकता ।

हि० अ० समय के सम्पूर्ण परिमाण प्रकाशमान परमात्मा से उत्पन्न हुये हैं । उसको ऊपर, तीरछे या बीच में कोई नहीं समझ सकता ।

*Trans.*—All the measures of time have been born from illustrious Paramātman. None can comprehend him above, across or in the middle.

*Notes*—जज्ञिरे —√*jan* to generate, perf. mid. 3rd. plu. परिजग्रभत् —√*grabh* to seize, perf. 3rd. sing.

न । तस्य । प्रतिमेतिप्रति । मा । अस्ति । यस्य । नाम । महत् । यशः ॥ हिरण्यगर्भऽइतिहिरण्य । गर्भः । इति । एषः । मामेतिमा । मा । हिंसीत् । इति । एषा । यस्मात् । न । जातः । इति । एषः ॥३॥

म० भा० –द्विपदा गायत्री । तस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किञ्चिद्वस्तु नास्ति । अत एव नाम प्रसिद्धं महत् यशः यस्यास्ति । सर्वातिरिक्तयशा इत्यर्थः । हिरण्यगर्भ इत्येषोऽनुवाकश्चतुर्ऋचः हिरण्यगर्भः यः प्राणतः

यस्येमे ॥ आत्मदा इति (२५.१०-१३)। मा मा हिंसीज्जनितेत्येका एषा (१२ १०२)। यस्मान्न जातः इन्द्रश्च सम्राडिति (८ ३६-३७) -इत्यनो-ऽनुवाक । एता प्रतीकचोदिता पूर्वं पठितत्वादादिमात्रेणोक्ता ब्रह्मयज्ञे जपे च सर्वा अध्येया । एव सर्वत्र ।

शब्दा० न=नहीं, तस्य=उसका, प्रतिमा=प्रतिमान अर्थात बराबरी का, अस्ति=है, यस्य=जिसका, नाम=विख्यात है, महत्=महान, यशः=कीर्ति, हिरण्यगर्भः=यजुर्वेद के पच्चीसवें अध्याय के दसवें मन्त्र से लेकर तेरहवें मन्त्र तक का प्रतीक है, इन मन्त्रो में परमात्मा की शक्ति का वर्णन है, इति=ऐसा, एषः=यह अनुवाक, मा मा हिंसीत्=यजुर्वेद बारहवें अध्याय के १०२ वा मन्त्र का प्रतीक है। इति=ऐसी, एषा=यह ऋचा, यस्मान्न जातः=यजुर्वेद के आठवें अध्याय के छत्तीसवें सैंतीसवें इन दो मन्त्र वाले अनुवाक का प्रतीक है, इति=ऐसा, एषः=यह अनुवाक ।

हि० अ०—उस परमात्मा का कोई प्रतिमान नहीं है, जिसकी महान् कीर्ति 'सर्व प्रथम हिरण्यगर्भ उत्पन्न हुआ' आदि, 'वे मुझको कष्ट न पहुचावें' आदि, 'उनको छोड़कर कोई दूसरा उत्पन्न नहीं है' आदि मन्त्रों से प्रसिद्ध है।

*Trans* —Nothing is the counterpart of him whose great glory is well known by the verses—'in the beginning arose Hiranyagarbha', etc, 'let him not harm me' etc, 'than whom there is no other born' etc

*Notes*—'हिरण्यगर्भ ' 'मा मा हिंसीत् ' and 'यस्मान्न जात ' are the verses of the Yajurveda proclaiming the glory of the Supreme self

एषः। ह। देवः। प्रदिशुऽइतिप्र। दिशः। अनु। सर्वाः।
पूर्वः। ह। जातः। सः। ऊँऽइत्यूँ। गर्भे। अन्तरित्यन्तः॥ सः।
एव। जातः। सः। जनिष्यमाणः। प्रत्यङ्। जनाः। तिष्ठति।
सर्वतोमुखऽइतिसर्वतः। मुखः॥४॥

म० भा० यतकारित्रिष्टुप् । ह प्रसिद्धम्। एषो ह देव सर्वा प्रदिश अनुतिष्ठति व्याप्य स्थित । हे जना ह प्रसिद्धमेष पूर्वं प्रथमो जात उत्पन्न ।

गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति । जातोऽपि स एव, जनिष्यमाणः उत्पत्स्यमानोऽपि स एव । प्रत्यङ् प्रतिपदार्थमञ्चति प्रत्यङ् । सर्वतोमुखः सर्वतोमुखावयवा यस्य । अचिन्त्यशक्तिरित्यर्थः ॥

शब्दा० एषः=यह, ह=निश्चित अर्थ का वाचक निपात, देवः=देव, प्रदिशः=दिशाओं को, सर्वाः=सभी, पूर्वः=सर्व प्रथम, ह=निश्चित अर्थ का वाचक निपात, जातः=उत्पन्न हुआ था, सः=वह, उ=निश्चित अर्थ का वाचक निपात, गर्भे=गर्भ में, अन्तः=अन्दर, सः=वह, एव=ही, जातः=उत्पन्न हुआ है, सः=वही, जनिष्यमाणः=उत्पन्न होनेवाला, प्रत्यङ्=प्रत्येक पदार्थ में स्थित रहनेवाला, जनाः=ओ मनुष्यों, तिष्ठति =स्थित रहता है, सर्वतोमुखः=सभी तरफ अवयववाला अर्थात् अचिन्त्य शक्तिवाला ।

हि० अ० निश्चित ही यह देव सभी दिशाओं को व्याप्त कर स्थित है; वही सर्व प्रथम गर्भ में उत्पन्न हुआ था । वही उत्पन्न हुआ है; वही उत्पन्न होनेवाला है । ओ मनुष्यों, अचिन्त्य शक्तिवाला परमात्मा प्रत्येक पदार्थ में स्थित है ।

*Trans.*—This God, indeed, pervades all the quarters; He, indeed, was born aforetime in the womb. He indeed, is born and to be born here. O men, He who is of uncomprehensible power, goes everywhere.

*Notes*—अन्तः—Final visarjaniya is rhotacized one; hence, इति is added after it in the Pada-text. जनिष्यमाण — √*jan* to generate, fut. pass. part. प्रत्यङ्—Derived from प्रति+√*añc* to go to. जनाः—Voc. accented, though not coming in the beginning of a Pāda. Griffith takes it as nom. and renders as 'children.' सर्वतोमुखः—Ominipresent; Uvata and Mahidhara take it to mean 'one who is of uncomprehensible power'.; Bahuvrihi compd accented on the second member.

यस्मा॑त् । जा॒तम् । न । पु॒रा । किम् । च॒न । ए॒व । यः । आ॒ऽब॒भूवे॑त्या॑ । ब॒भूव॑ । भुव॑नानि । विश्वा॑ ॥ प्र॒जाप॑ति॒रिति॑ प्र॒जा ।

पंतिः । प्रजयेतिप्र । जया । संरराणऽइतिं सम् । रराणः । त्रीणिं । ज्योतींषि । सचते । सः । षोडशी ॥५॥

म० भा०—यस्मात् पुरा किंचन किमपि न जातमेव । यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आवभूव समन्ताद्भावयामास । अन्तर्भूतो व्यर्थं । स षोडशी षोडशावयवलिङ्गशरीरो प्रजापतिः प्रजया संरराणः रममाण त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते ॥

शब्दा० यस्मात्=जिसके, जातम्=उत्पन्न, न=नहीं, पुरा=पहले, किञ्चन=कोई भी वस्तु, एव=ही, य=जो, आवभूव=कल्पना किया, भुवनानि=लोको को, विश्वा=सम्पूर्ण, प्रजापतिः=प्रजापति, प्रजया=प्रजा के साथ, संरराणः=आनन्दित होता हुआ, त्रीणि=तीन, ज्योतींषि=प्रकाश को, सचते=धारण करता है, षोडशी=सोलह अवयववाला ।

हि० अ० – जिसके पहले कोई उत्पन्न वस्तु नहीं थी, जिसने सम्पूर्ण जीवों की कल्पना की, वह सोलह अवयववाला प्रजापति प्रजा के साथ आनन्दित होता हुआ तीनो प्रकाश को धारण करता है ।

*Trans* —Before whom nothing was born, who imagined all the creatures, that sixteen limbed Prajāpati rejoicing with offspring accompanies the three lustres

*Notes*—आवभूव – $\sqrt{bh\bar{u}}$ to be, perf 3rd sing, not unaccented because preceded by य संरराण – $\sqrt{r\bar{a}}$ to give, perf part Mahidhara takes it to mean 're joicing' त्रीणि ज्योतींषि —Three lustres viz, sun, moon, fire

---

अनारभ्याधीतोऽध्यायः आपितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः पाठे विनियुक्ताः । षड्चस्त्रिष्टुभो मनोदेवत्याः शिवसंकल्पदृष्टाः ।

यत् । जाग्रतः । दूरम् । उदैतीत्युत् । ऐति । दैवम् । तत् । ॐऽइत्यूँ । सुप्तस्य । तथा । एव । एति ॥ दूरङ्गममिति दूरम् । गमम् । ज्योतिषाम् । ज्योतिः । एकम् । तत् । मे । मनः । शिव-सङ्कल्पमिति शिव । सङ्कल्पम् । अस्तु ॥१॥

म० भा०—ऋषिर्वदति । तन्मे मनः शिवसंकल्पमस्तु शिवः कल्याणकारी धर्मविषयः संकल्पो यस्य तत् तादृशं भवतु । मन्मनसि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः । तत्किम् । यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः । मनसैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्' इति श्रुतेः । तत् उ । यदः स्थाने तच्छब्दः उकारश्चार्थः । यच्च मनः सुप्तस्य पुंसः तथैव इति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति । यच्च दूरगम दूरात् गच्छतीति दूरंगमम् खश्प्रत्ययः । अतीतानागतवर्तमानविप्रकृष्ट-व्यवहितपदार्थानां ग्राहकमित्यर्थः । यच्च मनो ज्योतिषा प्रकाशकानां श्रोत्रादी-न्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः । प्रवर्तितान्येव श्रोत्रादीन्द्रि-याणि स्वविषये प्रवर्तन्ते । आत्मा मनसा संयुज्यते मनः इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनः संबन्धमन्तरा तेषामप्रवृत्तेः । तादृशं मे मनः शान्तसंकल्पमस्तु ॥

शब्दा०—यत्=जो मन, जाग्रतः=जागते हुए मनुष्य का, दूरम्=दूर उदैति=जाता है, दैवम्=आत्मदर्शन करने वाला, तत्=जो, उ=और, सुप्तस्य=सोये हुए मनुष्य का, तथा=उसी प्रकार, एव=ही, एति=लौट आता है, दूरगमम्=दूर जानेवाला अर्थात् अतीत, अनागत, वर्तमान सब पदार्थों को जाननेवाला, ज्योतिषाम्=श्रोत्रादि ज्ञानेन्द्रियों का, ज्योतिः=प्रकाश, एकम्=एकमात्र, तत्=वह, मे=मेरा, मनः=मन, शिवसंकल्पम्=मंगलकारक संकल्पवाला, अस्तु=होवे ।

हि० अ० जो मन पुरुष की जाग्रत अवस्था में (नेत्र आदि अन्य ज्ञानेन्द्रियों

की अपेक्षा) अधिक दूर जाता है, जो एक मात्र आत्मा का दर्शन करने वाला है, जो पुरुष की सुषुप्ति अवस्था में उसी प्रकार लौट आता है जिस प्रकार जाग्रत अवस्था में दूर जाता है, और जो सब बाह्य इन्द्रियों का एकमात्र प्रकाशक है वह मेरा मन, शुभ संकल्पवाला हो ।

*Trans*—May that mind of mine which goes farther off (than other sense organs like eye etc) when one is sleeping, which alone is the perceiver of the soul, which comes back in the same way in which it goes away when one is sleeping, and which is the sole light of all external organs, be of auspicious resolution

*Notes*—उदैति—उत्+आ+√इ to go, pres 3rd sing तत्—It is used in the sense of यत्

येन॑ । कर्मा॑णि । अ॒पसः॑ । म॒नी॒षिणः॑ । य॒ज्ञे । कृ॒ण्वन्ति॑ । वि॒दथे॑षु । धीरा॑ः ॥ यत् । अ॒पू॒र्वम् । य॒क्षम् । अ॒न्तः । प्र॒जाना॑म् । तत् । मे॒ । मनः॑ । शि॒वसं॑कल्प॒मिति॑ शि॒व । स॒ङ्कल्पम् । अ॒स्तु ॥२॥

म० भा०—मनीषिण मेधाविन यते येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति 'कृ करणे' स्वादि । मन स्वास्थ्यविना कर्माप्रवृत्ते । केषु सत्सु । विदथेषु ज्ञानेषु सत्सु विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु । वेत्तेरौणादिकोऽथ-प्रत्यय प्रत्ययीदात्तत्वेन मध्योदात्त पदम् 'प्रत्यय परश्च आद्युदात्तश्च' (पा०सू० ३ १ १-३) इति पाणिन्युक्ते यज्ञसम्बन्धिना हविरादिपदार्थाना ज्ञानेषु सत्स्वि-त्यर्थ । कीदृशा मनीषिण । अपस अप इति कर्मनाम (निघ० २ १ १) अपो विद्यते येषा ते अपस्विन कर्मवन्त 'अस्मायामेधास्रजो विनि' (पा०सू० ५ २ १२१) इति विनिप्रत्यय 'विन्मतोर्लुक्' इतीष्ठाभावेऽपि छान्दसो विनो लुक् (पा०सू० ५ ३ ६५) सदा कर्मनिष्ठा इत्यर्थ । तथा धीरा धीमन्त धीर्विद्यते येषा ते धीरा कर्मण्यण्(पा०सू० ३ २ १)। यच्च मन अपूर्वम् न विद्यते पूर्वमि-न्द्रिय यस्मात्तदपूर्वम इन्द्रियेभ्य पूर्वं मनस सृष्टे । यद्वा अपूर्वमनपरमबाह्यमि-त्युक्तेरपूर्वमात्मस्वरूपमित्यर्थ । यच्च यक्ष यष्टु शक्त यज्ञम् । यजतेरौणादिक

